आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्क : ३८

# ऐतरेयारण्यकम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

एतत्पुस्तकं

वे. शा. रा. रा. 'बाबाशास्त्री फडके' इत्येतैः

संशोधितम् ।

तच्च

आनंदाश्रम विश्वस्तैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयावृत्तिः

शालिवाहनशकाब्दाः १९१४

खिरस्ताब्दाः १९९२



मूल्यं १००/- शतंरूप्यकाणिः

# ग्रन्थस्यास्याऽऽदर्शपुस्तकोल्लेखपत्रिका ।

---

ऐतरेयारण्यकस्यास्य पुस्तकानि यैः परहितैकपरायणमनीषया संस्करणार्थं प्रदत्तानि तेषां कृतज्ञतया नामग्रामादिकं पुस्तकानां संज्ञाश्च प्रकाश्यन्ते ।

(क.) इति संज्ञितम्— मूलं सभाष्यं पूर्णम्, करवीरपुरनिवासिनां वे० शा० रा० श्रीमतां गुरुमहाराजानाम् ।

(ख.) इति संज्ञितम्— मूलं सभाष्यं पूर्णम्, पुण्यपत्तननिवासिनां वे० शा० रा. 'गङ्गाधर-शास्त्री दातार' इत्येतेषाम् ।

(ग.) इति संज्ञितम्— मूलं सभाष्यं पूर्णम्, आनन्दाश्रमसंग्रहालयस्थितम् ।

(घ.) इति संज्ञितम्— मूलं सभाष्यं पूर्णम्, आनन्दाश्रमस्थपुस्तकसंग्रहालयस्थितम् ।

(ङ.) इति संज्ञितम्— मूलं सभाष्यमपूर्णं प्रथमारण्यकरहितम्, इन्दूरपुरनिवासिनां 'किबे' इत्युपाह्वानां श्री० रा० रा० 'भाऊसाहेब बाळासाहेब' इत्येतेषाम् ।

(च.) इति संज्ञितम्— केवलं मूलम्, आनन्दाश्रमस्थपुस्तकसंग्रहालयस्थितम् ।

(छ.) इति संज्ञितम्— केवलं मूलम्, आनन्दाश्रमस्थपुस्तकसंग्रहालयस्थितम् ।

(ज.) इति संज्ञितम्— केवलं मूलम्, इन्दूरपुरनिवासिनां 'किबे' इत्युपाह्वानां श्रीयुतानां रा. रा. 'भाऊसाहेब बाळासाहेब' इत्येतेषाम् ।

(झ.) इति संज्ञितम्— केवलं मूलम्, 'ठाणे' ग्रामनिवासिनां रा० रा० 'शंकरराव भागवत' इत्येतेषाम् ।

## समाप्तेयं संज्ञासूची ।

ॐ तत्सद्ब्रह्मणे नमः ।

बह्वृचब्राह्मणान्तर्गतं

# ऐतरेयारण्यकम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

[ प्रथमारण्यके प्रथमोऽध्यायः ]

( तत्र प्रथमः खण्डः )

अथ शान्तिः ।

हरिः ॐ ।

भूमिमुपस्पृशेदग्र इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वति मा ते व्योम संदृशि ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या । शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥ स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयन्ता । त आगमन्तु त इह श्रुवन्तु सुक्षत्रासो वरुणो मित्रो अग्निः ॥ कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृळ्हाचिदारुजे वसु ॥ अभी षु णः सखीनामविता जरितॄ-

णाम्। श॒तं भ॑वास्यू॒तिभि॑ः ॥ स्यो॒ना पृ॑थिवि भवानृक्ष॒रा नि॒वेश॑नी। यच्छा॑ न॒ः शर्म॑ स॒प्रथ॑ः* ॥ ओष्ठापिधाना नकुली दन्तैः परिवृता पविः। सर्वस्यै वाच ईशाना चारुमामिह वादयेदिति वाग्रसः ॥

ॐ शान्तिः शान्तिः शान्तिः ।

इति शान्तिः ।

---

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य[1] निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायाऽऽत्मसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
ऐतरेयब्राह्मणेऽस्ति काण्डमारण्यकाभिधम् ।
अरण्य एव +पठ्यं स्यादारण्यकमितीर्यताम् ॥ ५ ॥
आरण्यकानि पञ्चेति प्रोक्तान्यर्थविभेदतः ।
महाव्रतमहः प्रोक्तं प्रथमारण्यके स्फुटम् ॥ ६ ॥
गवामयनमित्युक्ते सत्रे संवत्सरात्मके ।
उपान्त्यमस्ति यदहस्तन्महाव्रतनामकम् ॥ ७ ॥

---

* एतदग्रे ज. पुस्तकेऽधिकः कियांश्चिद्ग्रन्थः, स यथा—"उदितः शुक्रियं दधे। तमहमात्मनि दधे। अनु मामैत्विन्द्रियम्। मयि श्रीर्मयि यशः। सर्वः सप्राणः सबलः। उत्तिष्ठाम्यनु मा श्रीः। उत्तिष्ठत्वनु माऽऽयन्तु देवताः। अदब्धं चक्षुरिषितं मनः। सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः। तच्चक्षुर्देव हितं शुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतम्। त्वमग्ने व्रतपा असि देव आ मर्त्येष्वाऽऽ। त्वं यज्ञेष्वीड्यः। शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः। वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणी स्थः श्रुतं मे मा प्रहासीरनेनाऽऽधीतेन। अहोरात्रान्त्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम्" इति ।

+ घञर्थकप्रत्ययान्तात्तदर्हतीति यत्। पाठ्यमिति तु समीचीनतरम्।

---

[1] क. °स्य निःश्व° ।

सत्रप्रकरणेऽनुक्तिररण्याध्ययनादिति ।
महाव्रतस्य तस्यात्र हौत्रं कर्म विविच्यते ॥ ८ ॥

तत्राऽऽदौ विवक्षितमर्थं प्रतिजानीते—

**ॐ अथ महाव्रतम्,** इति ।

अथशब्द आरम्भवाची । महाव्रताख्यं कर्म प्रारब्धमित्यर्थः । अथवाऽयमानन्तर्यार्थोऽथशब्दः । प्रकृतिज्ञानानन्तरं विकृतिरूपं महाव्रताख्यं कर्माभिधीयत इति शेषः । प्रकृतिज्ञाने हि सति तत्सकाशाद्विकृतावतिदिष्टा धर्माः साकल्येनावबोद्धुं शक्यन्ते । विश्वजिच्चतुर्विंशादीनि कर्माणि महाव्रतस्य प्रकृतयः । आज्यप्रउगनामके द्वे शस्त्रे विश्वजिदाख्यात्कर्मणो महाव्रतेऽतिदिश्येते । होत्रकाणां शस्त्राणि तु चतुर्विंशाख्यात्कर्मणोऽतिदिश्यन्ते । तथा च **पञ्चमारण्यके** पठिष्यते—“आज्यप्रउगे विश्वजितो होत्राश्चतुर्विंशात्” इति ।

महाव्रतं प्रशंसितुमाख्यायिकामुखेन तच्छब्दनिर्वचनं दर्शयति—

**इन्द्रो वै वृत्रं हत्वा महानभवद्यन्महानभवत्तन्महाव्रतमभवत्तन्महाव्रतस्य महाव्रतत्वम् ,** इति ।

वृत्रवधस्य श्रुत्यन्तरप्रसिद्धिद्योतनार्थो वैशब्दः । **तैत्तिरीयके** दर्शपूर्णमासब्राह्मणशेषे “ त्वष्टा हतपुत्रः ” इत्यस्मिन्ननुवाके वृत्रनाम्नोऽसुरस्योत्पत्तिवृद्ध्यादिकं बहुना प्रपञ्चेनाभिधायान्ते द्यावापृथिवीभ्यामनुज्ञातेनेन्द्रेण कृतो वृत्रवध एवमाम्नायते—“स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्” इति । एवमन्यत्रापि—“ इन्द्रो वृत्राय वज्रं प्राहरत् ” “ इन्द्रो वृत्राय वज्रमुदयच्छत् ” “ इन्द्रो वृत्रं हत्वा ” इत्यादिषु प्रसिद्धिर्द्रष्टव्या । ईदृशात्प्रसिद्धाद्वृत्रवधादूर्ध्वमिन्द्रो **महानभवत्** । भीतिराहित्यमस्य महत्त्वम् । वृत्रवधात्पुरा तु स्वकीयां भीतिं स्वयमेव प्रजापतेरग्रे प्रोवाच । तथा च **तैत्तिरीया** आमनन्ति—“ तस्मादिन्द्रोऽबिभेत्स प्रजापतिमुपाधावच्छत्रुर्मेऽजनि ” इति । इत्थं भीतस्य त्विच्छया बहुषु देशेषु संचारासंभवात्स्वगृहे च निद्राभोजनादौ बिभ्यतः स्वास्थ्याभावादल्पत्वम् । अतो निर्भयत्वमेव महत्त्वम् । यद्यदाऽसाविन्द्रो **महानभवत्त**त्तदानीमिन्द्रार्थं क्रियमाणं सोमपानविशेषात्मकं कर्म **महाव्रतमभवत्**, त[त्त]स्मात्कारणाद्याज्ञिकैर्महाव्रतमिति व्यवह्रियमाणस्य कर्मणो महाव्रतनामकत्वं संपन्नम् । तस्य च नाम्नस्त्रेधा निर्वचनं द्रष्टव्यम्—महान्भवत्यनेन व्रतेनेति महाव्रतं, महतो देवस्य व्रतमिति महाव्रतं महच्च तद्व्रतमिति महाव्रतमिति । एतानि त्रीणि निर्वचनानि **तैत्तिरीया**

---

१ घ. °नुक्तकरणाध्य° । २ ख. ग. घ. °नाय हि । म° । ३ ख. ग. घ. अथाय° । ४ ख. ग. घ. °काशे विकृ° । ५ ख. ग. घ. °ख्याच्च कर्म° । ६ ग. घ. °दिश्यन्ते । हो° । ७ ख. ग. घ. °मस्तुज्ञा° । ८ क. °त्तदिदा° ।

आमनन्ति—"प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत्। तं देवा भूतानां रसं तेजः संभृत्य। तेनैनमभिषज्यन्। महानववर्तीति। तन्महाव्रतस्य महाव्रतत्वम्। महतो व्रतमिति। तन्महाव्रतस्य महाव्रतत्वम्" इति। वृत्तोऽशयत्। श्रान्तो भूमावपतत्। तदानीं ते देवास्तेजोहेतुं तं द्युलोकाद्गायत्र्या समानीतं रसायनरूपं सोमं महाव्रताङ्गभूतैर्मन्त्रैः संपाद्याथ प्रजापतिं तेन सोमेन चिकित्सित्वा महानववर्तीति श्रमरहितो वृत्तोऽनेन कर्मणेत्युक्तवन्तः। छन्दोगैरपि महद्व्रतं महतो व्रतमिति निरुक्तिद्वयमाम्नातम्,—"प्रजापतिः प्रजा असृजत। सोऽरिच्यत। सोऽपद्यत। तं देवा अभिसंगच्छन्त। तेऽब्रुवन्। महदस्मै व्रतं संभराम। यदिमं धिनवदिति। तस्मै तत्संवत्सरमन्नं पचयते। तत्समभरदस्मै प्रायच्छंस्तदन्नजयन्त तदेनमधिनोन्महन्मर्या व्रतं यदिममधिन्वीदिति। तन्महाव्रतस्य महाव्रतत्वम्। प्रजापतिर्वाव महांस्तस्यैतद्व्रतम्" इति। अरिच्यत शक्त्या रिक्तोऽभूत्। अपद्यत भूमौ पतितः। धिनवत्प्रीणयति। अन्नजयत्प्राप्नोत्। अधिनोदप्रीणयत्। हे मर्या मरणयोग्या मनुष्या यद्व्रतमिमं प्रजापतिमधिन्वीदप्रीणयत्तद्व्रतं महदिति देवा उक्तवन्त इत्यर्थः।

इत्थं महाव्रतं प्रशस्य तत्र प्रातःसवने होत्रा शंसनीय आज्यनामके शस्त्रे पूर्वपक्षसिद्धान्तौ दर्शयति—

द्वे एतस्याह्न आज्ये कुर्यादिति हैक
आहुरेकमिति त्वेव स्थितम्, इति।

एतस्य महाव्रताख्यस्याह्नः प्राकृतं वैकृतं चेत्येव द्वे आज्यशस्त्रे कुर्यात्। "प्र वो देवायाग्नये" [ ऋ० सं० म० ३ सू० १३ ऋ० १ ] इति सप्तर्चं सूक्तमाज्यशस्त्रत्वेनाग्निष्टोमेऽभिहितत्वात्प्राकृतम्। "अग्निं नरो दीधितिभिः" [ ऋ० सं० म० ७ सू० १ ऋ० १ ] इति पञ्चविंशत्यृचं सूक्तमाज्यशस्त्रत्वेन विश्वजिति विधानाद्वैकृतम्। ते द्वे अपि प्राकृतवैकृते आज्ये अस्मिन्महाव्रते कुर्यादित्येवमेके शाखान्तरीया आहुः। सोऽयं पूर्वः पक्षः। तस्य पूर्वपक्षस्य व्यावृत्त्यर्थस्तुशब्दः। द्वे आज्ये न कुर्यात्किंतु विशेषविधानाद्वैकृतमेकमाज्यं कुर्यादित्येव सिद्धान्तरहस्यं स्थितम्। यदाऽऽज्ये शस्त्रद्वयमङ्गी क्रियेत तदानीमग्निष्टोमसंस्थेऽस्मिन्महाव्रते प्रकृतितः प्राप्तेभ्यो द्वादशभ्यः शस्त्रेभ्योऽधिकं शस्त्रं प्राप्नुयात्, तच्चायुक्तम्, "द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश शस्त्राणि" इति श्रुत्यन्तरविरोधात्। तदेवमत्र नित्यमाज्यशस्त्रं व्यवस्थापितम्।

अथ काम्यान्याज्यशस्त्राण्युच्यन्ते। तत्र समृद्धिफलाय शस्त्रविशेषं विधत्ते—

प्र वो देवायाग्नय इति राद्धिकामः, इति।

---

प्र वो देवाय०—ऋ० सं० म० ३ सू० १३ ऋ० १।

---

१ ख. ग. घ. पच्यते। २ क. शस्त्रे द्व°।

तच्च सप्तर्चं सूक्तमिति पूर्वमेवाभिहितम् ।

पुष्टिफलाय सूक्तान्तरं विधत्ते—

विशो विशो वो अतिथिमिति पुष्टिकामः, इति ।

एतच्च सूक्तं पञ्चदशर्चम् ।

तस्य पुष्टिहेतुत्वमुपपादयति—

पुष्टिर्वै विशः पुष्टिमान्भवतीति, इति ।

विशो वैश्यास्ते हि वाणिज्येन बहुधनमार्जयन्तः करमपि बहुलं प्रयच्छन्ति । अतो विशां पुष्टित्वम् । अस्मिन्नर्थे लोकप्रसिद्धिर्वैशब्देनोच्यते । सूक्ते तु विशो विश इति वीप्सया बहुविधानां वैश्यानामभिहितत्वात्तेन सूक्तेनायं यजमानः पुष्टिमान्भवतीत्येतदुपपन्नम् । इतिशब्दो हेत्वर्थः । यस्मात्पुष्टिमान्भवति तस्मात्पुष्टिकामस्तत्सूक्तं कुर्यात् ।

अत्र पूर्वपक्षत्वेन तत्सूक्तं दूषयति—

अतिथिमिति पदं भवति नैतत्कुर्यादित्या-
हुरीश्वरोऽतिथिरेव चरितोः, इति ।

अस्मिन्सूक्ते दारिद्रस्य वाचकमतिथिमिति पदं वर्तते । तस्मान्नैतत्सूक्तं कुर्यादित्येवं केचित्पण्डितंमन्या आहुः । तत्रोपपत्तिं च वर्णयन्ति—य एतदाज्यं कुर्यात्सोऽयमतिथिरेव दरिद्र एव भूत्वा याच्ञार्थं परगृहेषु सर्वदा चरितुं प्रभुर्भवतीति ।

अत्र सिद्धान्तत्वेन तस्य सूक्तस्य प्रसङ्गं च विधत्ते—

तदु ह स्माऽऽह कुर्यादेव, इति ।

अतिथिपदतात्पर्याभिज्ञः सिद्धान्ती तदु ह सूक्तमवश्यं कुर्यादित्याह स्म ।

पूर्वपक्षोक्तदूषणशमनार्थमतिथिशब्दतात्पर्यं दर्शयति—

यो वै भवति यः श्रेष्ठतामश्नुते
स वा अतिथिर्भवति, इति ।

अत्रास्तिवाची भूधातुः सन्मार्गवर्तिनं ब्रूते । यस्तु पुमान्सन्मार्गवर्ती भवति तस्मिन्नपि सन्मार्गवर्तिसंघे यः पुमानतिशयेन प्राशस्त्यं प्राप्नोति स एवातिथिर्भवति । अतः प्राशस्त्यमत्र शब्दप्रवृत्तिनिमित्तं न तु दारिद्र्यम् ।

एतदेव व्यतिरेकमुखेन(ण) स्पष्टयति—

न वा असन्तमातिथ्यायाऽऽद्रियन्ते, इति ।

---

विशो विशो०—ऋ० सं० म० ८ सू० ७४ ऋ० १ ।

---

१ ख. ग. घ. °स्तु स पु° । २ ख. ग. घ. °मान्मा° ।

सन्मार्गरहितं व्रात्याभिशस्तादिकं पुरुषमत्यन्तदरिद्रमप्यातिथ्यसत्काराय नाऽऽद्रियन्ते।

[ सिद्धमर्थं कथयति— ]

**तस्मादु काममेवैतत्कुर्यात्, इति।**

यस्मादतिथिशब्दो न दुष्टः किंतु प्रशस्तस्तस्मादेव कारणाद्विस्रम्भेणैवैतत्सूक्तं कुर्यात्।

तत्सूक्तप्रयोगे कंचिद्विशेषं विधत्ते—

**स यद्येतत्कुर्यादागन्म वृत्रहन्तममि-**
**त्येतं तृचं प्रथमं कुर्यात्, इति।**

तस्मिन्सूक्ते—"विशो विशः" [ऋ० सं० म० ८ सू० ७४ ऋ० १] इत्यादिकः प्रथमस्तृचः। "आगन्म" इत्यादिको द्वितीयस्तृचः। प्रयोगकाले त्वागन्मेत्यादिकं प्रथमत्वेन पठेत्।

तत्रोपपत्तिमाह—

**एतद्वा अहरीप्सन्तः संवत्सरमा-**
**सते त आगच्छन्ति, इति।**

ये गवामयननामकं संवत्सरसत्रमनुतिष्ठन्ति ते महाव्रताख्यमेतद्देवोपान्त्यमहः प्राप्तुमिच्छन्तोऽनुतिष्ठन्ति। तथा सत्यागन्मेति प्राप्तिवाचकं शब्दं प्रयुञ्जानास्ते पुरुषा एतदहरागच्छन्ति तस्मादेतस्य प्राथम्यं युक्तम्।

अतिथिमागन्मेति पदद्वयतात्पर्यदर्शनेन तृचद्वयं व्याख्यातम्। अथावशिष्टानां तृचानां तात्पर्यं दर्शयति—

**त एतेऽनुष्टुप्शीर्षाणस्त्रयस्तृचा भवन्ति**
**ब्रह्म वै गायत्री वागनुष्टुब्ब्रह्म-**
**णैव तद्वाचं संदधाति, इति।**

पञ्चदशर्चे "विशो विशः" [ऋ० सं० म० ८ सू० ७४ ऋ० १] इत्यादिके सूक्ते प्रथमतस्तृचद्वये गते सति तत ऊर्ध्वं त्रयस्तृचाः शिष्यन्ते। तेष्वन्तिमस्तृचः "अहं हुवानः" इत्यादिकोऽनुष्टुप्छन्दस्कः। तत्रानुष्टुप्छन्दसि तदुत्तमाङ्गस्थानं येषां तृचानां तेऽनुष्टुप्शीर्षाणः। एते तृचास्त्रिसंख्याकाः। तत्रोपान्त्यतृचे ततः पूर्वतने तृचे च गायत्री छन्दो विद्यते। सा च गायत्री ब्रह्मैव, "तत्सवितुर्वरेण्यम्" [ऋ० सं० म० ३ सू० ६२ ऋ० १०] इत्यनया गायत्र्या परब्रह्मणः प्रतिपाद्य-

आगन्म०—ऋ० सं० म० ८ सू० ७४ ऋ० ४।

१ ख. ग. °स्तृचं द्व°। २ ख. स्थानं।

त्वात् । येयं तृचगताऽनुष्टुप्सा वाग्रूपा चतुष्पात्त्वसामान्यात् । "चत्वारि वाक्परिमिता पदानि" ( ऋ० सं० मं० १ सू० १६४ ऋ० ४५ ) इति वाचः पादचतुष्टयमाम्नातम् । परा पश्यन्ती मध्यमा वैखरीत्युक्तं तत्पादचतुष्टयमन्यैर्व्याख्यातम् । अनुष्टुभस्तु चतुष्पात्त्वं प्रसिद्धम् । एवं सत्यस्मिन्सूक्ते गायत्र्यनुष्टुभोर्मेलने सति तन्त्रेण सूक्तपाठेन ब्रह्मणैव वाचं संयोजयति ।

अथ कीर्तिफलार्थं सूक्तान्तरं विधत्ते—

**अबोध्यग्निः समिधा जनानामिति कीर्तिकामः, इति ।**

**अबोधी**त्यादिकं द्वादशर्चं सूक्तम् ।

[प्रजापशु]फलार्थमन्यत्सूक्तं विधत्ते—

**होताऽजनिष्ट चेतन इति प्रजापशुकामः, इति ॥**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके प्रथमेऽध्याये**
**प्रथमः खण्डः ॥ १ ॥**

**होते**त्यादिकमष्टर्चं सूक्तम् । यथोक्तानां काम्यसूक्तानां गोदोहनन्यायेन फलार्थत्वमेव न तु क्रत्वर्थत्वम् ।

स च न्यायश्चतुर्थाध्यायस्य प्रथमपादे चिन्तितः—

गोदोहनं द्व्यर्थं स्यान्न वा भागद्वयार्थता ।
अन्यथाऽपि क्रतोः सिद्धेः केवलं पुरुषाय तत् ॥

दर्शपूर्णमासयोः श्रूयते—"चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य" इति । तत्र गोदोहनस्य क्रत्वर्थ(र्थत्वं) पुरुषार्थत्वं चेत्याकारद्वयमस्ति । पशुफलजननेन पुरुषप्रीतिर्भाति, अपां प्रणयनेन क्रतुपौष्कल्यमपि भातीति चेन्मैवम् । गोदोहनमन्तरेण फलासिद्धेर्भवतु पुरुषार्थत्वं क्रतुस्तु तदभावेऽपि चमसेन सिध्यतीति न क्रत्वर्थता । एवमत्रापि यथोक्तानि काम्यसूक्तानि फलार्थान्येव न तु क्रत्वर्थानि । एवं तर्हि क्रतोरङ्गवैकल्यं प्रसज्येतेति चेत् । मैवम् । काम्यानामेतेषां क्रत्वङ्गभूतं शंसनमाश्रित्य विधानमिति काम्यैरपि सूक्तैः क्रत्वङ्गस्य शंसनस्य निष्पत्तेः, काम्येन नित्यसिद्धिरिति तान्त्रिकाणां डिण्डिमः । तस्मात्फलसाधनत्वेन विधानादेतैः फलं साक्षात्सिध्यत्यर्थात्क्रतोः साङ्गत्वमित्युपपन्नम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यककाण्डभाष्ये प्रथमारण्यके प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥

---

अबोध्य०—ऋ० सं० मं० ५ सू १ ऋ० १ ] । होता जनि०—ऋ० सं० म० २ सू० ५ ऋ० १ ।

---

१ क. न क्र° । २ क. °न्न च भा° । ३ क. °भावे च° । ४ ख. ग. घ. °मः । इन्द्रियं त° ।

अथ द्वितीयः खण्डः ।

---

अन्नाद्यफलाय सूक्तान्तरं विधत्ते—

अग्निं नरो दीधितिभिररण्योरित्यन्नाद्यकामः, इति ।

अत्तुं योग्यं[आद्यं] शाल्यादिनिष्पन्नम[न्नम]न्नं च तदाद्यं चेत्यन्नाद्यकामत्वमस्य( द्यं तस्मिन्कामोऽस्य ) । अग्निं नर इत्यादिकं पञ्चविंशत्यृचमाज्यशस्त्रमवगन्तव्यम् ।

अस्य सूक्तस्यान्नहेतुत्वं संभावयति—

अग्निर्वा अन्नादः, इति ।

अग्नेरन्नभोजकत्वे लोकप्रसिद्धिद्योतनार्थो वैशब्दः । अग्नेः स्वयमन्नभोजकत्वेनान्नप्रियत्वात्तद्विषयसूक्तेनान्नलाभो युक्त इत्यर्थः ।

ननु "प्र वो देवायाग्नये" [ऋ० सं० म० ३ सू० १३ ऋ० १] इत्यादिसूक्तेष्वप्यग्निर्विद्यत इत्याशङ्क्य तेभ्योऽस्य सूक्तस्य विशेषं दर्शयति—

चिरतरमिव वा इतरेष्वाज्येष्वग्निमागच्छन्त्य-
थेह मुखत एवाग्निमागच्छन्ति मुखतोऽ-
न्नाद्यमश्नुते मुखतः पाप्मानमपघ्नते, इति ।

इतरेषु "प्र वो देवायाग्नये" [ऋ० सं० मं० ३ सू० १३ ऋ० १] इत्यादिष्वाज्यशस्त्रेषु यजमाना अत्यन्तविलम्बो यथा भवति तथैवाग्निं प्राप्नुवन्ति । सूक्तादावग्निपदाभावात् । इह तु तत्सद्भावादादावेव सहसाऽग्निं प्राप्नुवन्ति । अतो भवदा-(तोऽन्ना)द्यमादौ विलम्बमन्तरेणैव यजमानसंघः प्राप्नोति । तथा ते यजमाना आदावेव पाप्मानं नाशयन्ति ।

सूक्तस्य प्रथमपादेऽग्निशब्दं प्रशस्य द्वितीयपादे जनयन्तेति शब्दं प्रशंसति—

हस्तच्युती जनयन्तेति जातवदेतस्माद्वा अह्नो
यजमानो जायते तस्माज्जातवत् , इति ।

हस्तेत्यादिर्द्वितीयपादस्तस्यायमर्थः—हस्तव्यापारेणैव वाच्येन जनयन्त यजमाना अग्निमुत्पादयन्त इति । तत्र जनयन्तेत्यनेन शब्देनेदं सूक्तं जातवज्जन्मवाचकशब्दोपेतं भवति । एतस्माज्जन्मवाचिशब्दोपेतसूक्तयुक्तादह्नो महाव्रताख्यात्कर्मणो यजमानोऽयं तत्फलयोग्यजन्मवान्भवति । तस्मात्कारणात्तथाविधजन्मसाधनभूतं सूक्तम् ।

अस्मिन्पञ्चविंशत्यृचे सूक्ते [ऋ० सं० म० ७ सू० १ ] आदावष्टादशर्चो विरा-

---

अग्निं नरो०—ऋ० सं० म० ७ सू० १ ऋ० १ ।

---

१ क. घ. नतु प्र° । २ क. ख. °था न भ° । ३ क. ख. घ. °संघः प्रा° । ४ क. °तीयः पा° ।

दृछन्दस्काः । अवशिष्टास्तु "मा नो अग्नेऽवीर ते" इत्यादिकाः सप्तर्चस्त्रिष्टुप्छन्दस्काः । तास्वेकैकस्यामृचि पादचतुष्टययुतानि च्छन्दांसि प्रशंसति—

**तानि चत्वारि च्छन्दांसि भवन्ति चतुष्पादा वै पशवः पशूनामवरुद्ध्यै, इति ।**

"एकादशाक्षरा त्रिष्टुप्" इति श्रुत्यन्तरादेकैकस्मिन्पाद एकैकं त्रिष्टुबाख्यं छन्दोऽस्ति, ततश्चतुर्षु पादेषु चत्वारि त्रिष्टुप्छन्दांसि संपद्यन्ते । ततः पशूनां चतुष्पात्त्वात्तेन तत्साम्यात्पशुप्राप्तिर्भवति ।

यास्तु सूक्तादिगता विराट्छन्दस्का ऋचस्तासां पादगतानि च्छन्दांसि प्रशंसति—

**तानि त्रीणि च्छन्दांसि भवन्ति त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै, इति ।**

यथा "चतुष्पदा त्रिष्टुप्" "एकादशाक्षरा त्रिष्टप्" इति श्रुत्योः पादसंख्याऽक्षरसंख्या च श्रुता तथा "त्रिपदा विराट्" "दशाक्षरा विराट्" इति श्रुत्योः संख्याद्वयं श्रुतम् । ततस्त्रिष्वपि पादेषु दशाक्षरसंख्याकानि त्रीणि विराट्छन्दांसि संपद्यते(न्ते) । लोकाश्च पृथिव्यन्तरिक्षं द्यौरित्येवं त्रिसंख्याकाः, उत्तममध्यमाधमैः सात्त्विकराजसतामसैः प्राणिभिरुपेतत्वात्त्रिवृतश्च । ततः संख्यासाम्याल्लोकजयो भवति ।

सूक्ते पूर्वोत्तरभागयोर्वर्तमाने विराट्त्रिष्टुबित्येते द्वे छन्दसी प्रशंसति—

**ते द्वे छन्दसी भवतः प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, इति ।**

छन्दोद्वयं प्रतिष्ठार्थमेव संपद्यते । लौकिकः पुरुषः सर्वोऽपि भूमौ द्वाभ्यां पादाभ्यां प्रतिष्ठितत्वाद्द्विप्रतिष्ठो भवति । पशवस्तु चतुष्पादाः । एवं सति च्छन्दोद्वित्वेन पादचतुष्टेन च द्विपादं यजमानं चतुष्पात्सु पशुषु होता प्रतिष्ठापयति ।

इदानीं सर्वास्वृक्ष्ववस्थितां पञ्चविंशतिसंख्यां प्रशंसति—

**ताः पराग्वचनेन पञ्चविंशतिर्भवन्ति पञ्चविंशोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते, इति ।**

आवृत्तिमन्तरेणोर्ध्वपाठः पराग्वचनम् । आत्मा मध्यदेहम्,[2] "मध्यं ह्येषामङ्गा-

१ क. ख. ग. °युक्तानि । २ क. °देहः, "म° ।

नामात्मा " [ ऐ० आ० २ अ० ३ ख० ९ ] इति वक्ष्यमाणत्वात्। तेनाऽऽत्मना सहितैरवयवैः सर्वैरयं पुरुषः पञ्चविंशतिसंख्योपेतः। अतस्तादृशं पुरुषमृग्गतया पञ्चविंशतिसंख्यया संस्करोति।

प्रकारान्तरेण तां संख्यां प्रशंसति—

**अथो पञ्चविंशं वा एतदहः पञ्चविंश एत-**
**स्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते**
**तस्माद्द्वे एव पञ्चविंशतिर्भवन्ति, इति।**

अथो अपि चेत्यर्थः। यन्महाव्रताख्यमहस्तदेतत्पञ्चविंशतिसंख्योपेतमेव। तत्कथमिति तदुच्यते—एतस्याह्नो यः स्तोमः सामगैः स्तोत्रकाले तृचस्याऽऽवृत्त्या संपद्यते सोऽयं त्रिवृत्पञ्चदशादिरूपो न भवति किंतु पञ्चविंशस्तस्मात्कारणात्पञ्चविंशतिसंख्यया समेन सूक्तेन पञ्चविंशस्तोमयुक्तं समं तदहः प्राप्नोतीति तस्मादेतदहः सूक्तं चेत्युभयं समं तस्मादेते द्वे अहःसूक्ते पञ्चविंशतिसंख्याप्रयुक्ते एव भवतः। अन्यथा साम्यासंभवात्। भवन्तीति बहुवचनं तु सूक्तगतानामृचां स्तोत्रगतानां चापेक्षया द्रष्टव्यम्।

तस्मिन्सूक्ते प्रथमोत्तमयोर्ऋचोरावृत्तिविधिमभिप्रेत्य तदावृत्तिसहितां संख्यां प्रशंसति—

**तास्त्रिः प्रथमया त्रिरुत्तमयैकयानत्रिंशन्न्यूनाक्षरा**
**विराण्न्यूने वै रेतः सिच्यते न्यूने प्राणा न्यूनेऽ-**
**न्नाद्यं प्रतिष्ठितमेतेषां कामानामवरुद्ध्यै, इति।**

ताः सूक्तगताः पञ्चविंशतिसंख्याका ऋचस्त्रिरावृत्तया प्रथमया त्रिरावृत्तया चोत्तमया सहिताः सत्यो मिलिता एकोनत्रिंशत्संख्याकाः संपद्यन्ते। एकयर्चा न संपूर्णा त्रिंशदित्येकयानत्रिंश[त्। "त्रिंश]दक्षरा विराट्" इति श्रुतेर्विराट्छन्दसस्त्रिंशत्संख्योपेतत्वादत्र त्रिंशत्संख्यायामेकया न्यूनत्वादियमृक्संख्या न्यूनाक्षरा विराट्संपद्यते। लोकेऽपि न्यूने वै स्वल्प एव गर्भाशये प्रजोत्पादनार्थं रेतः सिच्यते। तथा स्वल्पे हृदयपुण्डरीके प्राणाः प्रति[ति]ष्ठन्ति, स्वल्पे चोदरेऽन्नाद्यं प्रतिष्ठितं, तस्मादियं न्यूना विराडेतेषां प्रजोत्पत्तिप्राणान्नप्रतिष्ठारूपाणां कामानां प्राप्त्यै संपद्यते।

यथोक्तार्थवेदनं प्रशंसति—

**एतान्कामानवरुन्धे य एवं वेद, इति।**

यः पुमानेवमृग्गतामेकोनत्रिंशत्संख्यां वेद स पुमानुक्तान्कामानाप्नोति। वेदनमात्रेण फलप्राप्तिर्यजुर्वेदार्थप्रकाश उपपादिता।

प्रकारान्तरेण सूक्तगता ऋचः प्रशंसति—

**ता अभिसंपद्यन्ते बृहतीं च विराजं च**

च्छन्दो यैतस्याह्नः संपत्तामथो अनुष्टुभ
मनुष्टुबायतनानि ह्याज्यानि, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके प्रथमाध्याये
द्वितीयः खण्डः ॥ २ ॥

या ऋचः सूक्ते प्रोक्ताः "अग्निं नरः" इत्यादिकास्ताः सर्वा ऋचो मिलित्वा बृहत्याख्यच्छन्दोऽभिसंपद्यते( न्ते? )। तथा विराडाख्यं छन्दोऽभिसंपद्यते( न्ते? )। एवं सत्येतस्य महाव्रतस्याह्नोऽपेक्षिता या संपत्तां प्राप्ता भवन्ति[1]। तत्राऽऽद्यावष्टादशानामृचां स्वत एव विराडभिसंपत्तिः सिद्धा। यास्तूत्तराः सप्त त्रिष्टुभस्तासु बृहतीछन्दः संपादनीयम्। अन्तिमाया ऋचस्त्रिरावृत्तौ सत्यां नव त्रिष्टुभः संपद्यन्ते। तासु प्रत्येकमष्टाक्षरेष्वतीतेष्ववशिष्टा नव बृहत्यो भवन्ति[2]। अपनीत(ता)श्च नवसंख्याका अष्टाक्षरपादा मिलित्वा द्वासप्ततिरक्षराणि संपद्यन्ते। तत्षट्त्रिंशदक्षरोपेते द्वे बृहत्यौ निष्पद्येते। तदेवं बृहतीछन्दःसंपत्तिः। अपि चैवमाद्यायामृच्यनुष्टुप्त्वस्य संपादयितुं शक्यत्वात्ताः सूक्तगता ऋचोऽनुष्टुभमभिसंपद्यन्ते। यद्यप्याद्यायास्त्रयस्त्रिंशदक्षरत्वादेकमक्षरमनुष्टुभोऽधिकं तथाऽपि नैतावताऽनुष्टुप्त्वं हीयते, "न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्याम्" इति श्रुतेः। यथैवास्यामृच्यक्षरत्रयाधिकत्वेऽपि विराट्त्वमनुक्रमणिकाकारैरुक्तमेवमेकाक्षराधिक्येऽनुष्टुप्त्वं किं न स्यात्। न चैतावता प्रयासेनानुष्टुप्संपादने प्रयोजनाभावः। यस्मादाज्यशस्त्राण्यनुष्टुबाश्रितानि "प्र वो देवायाग्नये"[ऋ० सं० म० ३ सू० १३ ऋ० १] इत्यादौ तथा दृष्टत्वात्तस्मादनुष्टुप्संपत्त्या प्रशस्तमिदं सूक्तमित्यभिप्रायः। नन्वेतत्सूक्तमन्नाद्यकामस्य विधीयत इति पुरुषार्थमिदं तथा क्रत्वर्थ[त्व]मप्यस्य चोदकेन प्रापितम्। तथा हि—आज्यप्रउगे विश्वजिति पञ्चमारण्यके वक्ष्य(क्ष्ये)ते। विश्वजिन्नाम्न एकाहाच्छस्त्रद्वयमतिदेष्टव्यमिति तस्य वाक्यस्यार्थः। विश्वजितोऽग्निं नर इति सूत्रकारेणाभिधानाद्विश्वजिद्विकृतिरूपे महाव्रतेऽपि तदेवातिदिश्यते। तस्मादेत(क)स्यैवाग्निं नरः [ ऋ० सं० म० ७ सू० १ ऋ० १ ] इति सूक्तस्य क्रत्वर्थं(र्थत्वं) पुरुषार्थत्वं चेत्युभयविधत्वमनुपपन्नम्। नायं दोषः, दधिन्यायेनोपपत्तेः।

स च न्यायश्चतुर्थाध्यायस्य तृतीयपादे चिन्तितः—

दध्ना त्विन्द्रियकामस्य नित्योऽन्य उत तद्दधि।
अन्यः स्यात्पूर्ववन्मैवं संयोगस्य पृथक्त्वतः॥

अग्निहोत्रे श्रूयते—"दध्नेन्द्रियकामस्य जुहुयात्" इति। तत्र दध्नः काम्यत्वान्नित्येऽग्निहोत्रे पूर्ववन्न्यायेन न प्रयोक्तव्यं किंत्वन्यदेव किंचिद्द्रव्यमिति चेन्मैवम्।

१ क. भवति। २ ख. घ. भवन्ति।

"दध्ना जुहोति" इत्यस्मिन्वाक्यान्तरे कामसंयोगमनुपन्यस्य नित्यहोमसंयोगेन दधिविधानात्। तस्मादेकस्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्वं चाविरुद्धम्। एवमग्नीषोमीयपशौ "खादिरे बध्नाति" "खादिरं वीर्यकामस्य यूपं कुर्वीत" इत्युदाहरणीयम्। अनेन दधिन्यायेनात्रापि काम्येन "अग्निं नरो दीधितिभिररण्योः" [ऋ० सं० म० ७ सू० १ ऋ० १] इति सूक्तप्रयोगेण पुरुषार्थेन क्रतुरपि निष्पद्यत इत्येकस्यैव सूक्तस्य चोदकप्रत्यक्षवचनाभ्यामुभयार्थत्वमविरुद्धम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीयः खण्डः।

---

ऋतुग्रहभक्षणादूर्ध्वं निवित्पदान्युच्चार्य होत्रा शंसनीयं यदाज्यशस्त्रं तन्निरूपितम्। वैश्वदेवग्रहणादूर्ध्वं होत्रा शंसनीयं प्रउगनामकं यच्छस्त्रं तद्विषये छन्दोविशेषमाश्रित्य नानाशाखानुसारेण सर्वे पक्षाः संभाविताः, गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगती चेति च्छन्दोविशेषास्तत्र प्रथमं पक्षमाह—

**गायत्रं प्रउगं कुर्यादित्याहुस्तेजो वै ब्रह्मवर्चसं गायत्री तेजस्वी ब्रह्मवर्चसी भवतीति, इति।**

तेजः शरीरकान्ती राज्ञां सामर्थ्यं वा, ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः, तदुभयहेतुत्वाद्गायत्र्यास्तद्रूपत्वम्। य(अ)तो यजमानस्तदुभयवान्भवत्वित्यनेनाभिप्रायेण प्रउगशस्त्रं गायत्रीछन्दोविशिष्टं कुर्यात्। तस्य गायत्रस्य प्रउगस्य स्वरूपमाश्वलायनेन पूर्वषट्के पञ्चमाध्यायेऽभिहितम्—"वायुरग्रे गा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात्तृचं तृचं शंसेद्वायवायाहि दर्शतेति सप्त तृचाः" इति।

द्वितीयादिपक्षानाह—

**औष्णिहं प्रउगं कुर्यादित्याहुरायुर्वा उष्णिगायुष्मान्भवतीत्यानुष्टुभं प्रउगं कुर्यादित्याहुः क्षत्रं वा अनुष्टुप्क्षत्रस्याऽऽप्त्या इति बार्हतं प्रउगं कुर्यादित्याहुः श्रीर्वै बृहती श्रीमान्भवतीति पाङ्क्तं प्रउगं कुर्यादित्याहुरन्नं वै पङ्क्तिरन्नवान्भवतीति त्रैष्टुभं प्रउगं कुर्यादित्याहुर्वीर्यं वै त्रिष्टुब्वीर्यवा-**

---

१ क. ख. यज्ञे प्री°।

न्भवतीति जागतं प्रउगं कुर्यादित्याहुर्जा-
गता वै पशवः पशुमान्भवतीति, इति ।

क्षत्रं बलमन्यत्पूर्ववद्व्याख्येयम् ।

एवं नानाविधब्राह्मणसिद्धानि मतान्युपन्यस्य तेषु प्रथमं स्वकीयत्वेन स्वी करोति—

तदु गायत्रमेव कुर्याद्ब्रह्म वै गायत्री ब्रह्मै-
तदहर्ब्रह्मणैव तद्ब्रह्म प्रतिपद्यते, इति ।

तदु तेषां तु सप्तानां मध्ये यत्प्रथममुपन्यस्तं गायत्रं तदेवास्मिन्महाव्रते कुर्यात् । गायत्र्या ब्रह्मत्वं पूर्वमेवोक्तम् । अस्य चाह्नो ब्रह्मत्वं तत्प्राप्तिहेतुत्वादवगन्तव्यम्[१] । तद्गायत्रप्रउगरूपेण ब्रह्मणा तन्महाव्रतरूपं ब्रह्म प्राप्नोति ।

दाशतय्यां गायत्रीछन्दस्कानां बहूनां विद्यमानत्वात्तद्विशेषं दर्शयति—

तदु माधुच्छन्दसम्, इति ।

तदपि गायत्रीछन्दस्कं प्रउगं मधुच्छन्दोनाम्न ऋषेः संबन्धि द्रष्टव्यम् । तेनर्षिणा दृष्टं[२] "वायवायाहि" [ ऋ० सं० म० १ सू० २ ऋ० १ ] इत्यादिकं यन्मन्त्रजातं तदित्यर्थः ।

ऋषेर्नाम निर्वक्ति—

मधु ह स्म वा ऋषिभ्यो मधुच्छन्दाश्छन्दति
तन्मधुच्छन्दसो मधुच्छन्दस्त्वम्, इति ।

योऽयं मधुच्छन्दोनामक ऋषिः सोऽयमितरेभ्य ऋषिभ्यो मधु च्छन्दति मधुरं भोग्यं संपादयितुमिच्छति । ह स्म वा इति निपातत्रयसमूह ऐतिह्यार्थः । यस्मादयं मध्विच्छति तस्मादस्य तन्नाम संपन्नम् ।

ऋषिसंबन्धेनशस्त्रं प्रशस्य फलसंबन्धेनापि प्रशंसति—

अथो अन्नं वै मधु सर्वं वै मधु
सर्वे वै कामा मधु तद्यन्माधुच्छन्दसं
शंसति सर्वेषां कामानामवरुद्ध्यै, इति ।

माक्षिकवाची मधुशब्दस्तन्निष्ठं प्रियत्वं लक्षयति । अन्नस्य प्रियत्वं प्रसिद्धम् । तद्वद्वस्त्रादेः[३] सर्वस्यापि भोग्यस्य प्रियत्वं प्रसिद्धम् । यस्मात्प्रियत्वेन सर्वेऽपि कामा मधुरूपा[४]स्तस्मात्कारणान्मधुत्वसामान्यान्माधुच्छन्दसं शंसतीति यदस्ति तत्सर्वकामप्राप्त्यै संपद्यते ।

---

१ क. °ति । दश° । २ क. °ष्टं हि 'वा° । ३ क. घ. °द्वदन्ना° । ४ ख. °धुरू° ।

माधुच्छन्दसवेदनं प्रशंसति—

**सर्वान्कामानवरुन्धे य एवं वेद, इति ।**

पुनः प्रकारान्तरेण शस्त्रं प्रशंसति—

**तद्वैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्नहनि किंच किंच वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति, इति ।**

तदु तदपि यथोक्तं गायत्रं प्रउगमैकाहिकमेकाहे प्रकृतिभूतेऽग्निष्टोमे निष्पन्नं तदेव विश्वजिद्द्वारेणास्मिन्महाव्रते प्राप्तमन्तत ऐकाहिकत्वादेतद्रूपसमृद्धम् । प्रकृतिरूपे ह्येकाहे कृत्स्नस्यानुष्ठेयस्य प्रत्यक्षवचनप्रापितत्वाद्विस्मरणेन सर्वमनुष्ठातुं शक्यम् । सेयं रूपसमृद्धिः । न च किमनेनैकाहिकत्वेनेति शङ्कनीयम् । तस्यानिष्टशमनार्थत्वात्। एतस्मिन्महाव्रताख्येऽहनि वारणं शिष्टैर्निवारणीयं वर्जनीयं किमपि बहुविधं दासीकृवृत्तबटुमैथुनब्रह्मचारिपुंश्चलीसंप्रवादादिकं क्रियतेऽतस्तस्य शान्त्यर्थमेव सरूपसमृद्धस्यैकाहिकस्य प्रउगशंसनम् । एकाहस्य तु सर्वविकृतिप्रतिष्ठापकत्वाच्छान्तिहेतुत्वमुपपन्नम् । अतो यजमाना अप्यन्ततः संवत्सरसत्रस्यावसान उपान्त्येऽस्मिन्नहनि तत्तेन शस्त्रपाठेन प्रतिष्ठारूपायामनिष्टशान्त्यामेव प्रतितिष्ठन्ति प्रतिष्ठा(प्रतिष्ठिता) भवन्ति ।

अस्य शस्त्रस्य प्रतिष्ठाहेतु[त्व?]वेदनं तत्पूर्वकानुष्ठानं [च] प्रशंसति—

**प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति, इति ॥**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥**

येषां सत्रिणामर्थ एवमुक्तप्रकारेण शस्त्रमहिमानं विद्वान्होतैतच्छस्त्रं शंसति तेऽपि सत्रिणः प्रतितिष्ठन्तीति द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थः खण्डः ।

---

अस्मिन्प्रउगशस्त्रे ये सप्त तृचास्तेषां मध्ये प्रथमतृचस्य प्रथमार्धे योऽयमरमिति शब्दस्तस्य तात्पर्यं दर्शयति—

**वायवायाहि दर्शतेमे सोमा अरं कृता इत्ये-**

---

वायवायाहि०—ऋ० सं० म० १ सू० २ ऋ० १ ।

तद्वा अहररं यजमानाय च देवेभ्यश्च, इति ।

दर्शत दर्शनीय हे वायोऽस्मिन्कर्मण्यागच्छ, इम ऐन्द्रवायवादिग्रहगताः सोमा अरमलं संपूर्णा यथा भवन्ति तथा कृताः संपादिता इत्येवं मन्त्रेऽभिधीयते । यस्मादेतन्महाव्रताख्यमहो य(हर्य)जमानाय च देवेभ्यश्चारं सोमं पातुमलं तस्माद्युक्तो मन्त्रेऽरमिति शब्दः ।

संपूर्तिवेदनतत्पूर्वकानुष्ठाने पूर्ववत्प्रशंसति—

अरं हास्मा एतदहर्भवति य एवं वेद
येषा चैवं विद्वानेतद्धोता शंसति, इति ।

द्वितीयस्य तृचस्यान्तिमायामृचि मध्यमपादे निष्कृतशब्दं व्याचष्टे—

इन्द्रवायू इमे सुता आयातमुपनिष्कृत-
मिति यद्वै निष्कृतं तत्संस्कृतम्, इति ।

हे इन्द्रवायू इमे सोमा भवदर्थमभिषुतास्तस्मादुपनिष्कृतमिमं सोमं प्रति युवामागच्छतमित्यस्मिन्पादे निष्कृतमिति यत्पदमस्ति तत्पदं संस्कृतमित्यमुमर्थमाह ।

वेदनानुष्ठाने प्रशंसति—

आ हास्येन्द्रवायू संस्कृतं गच्छतो य एवं
वेद येषां चैवं विद्वानेतद्धोता शंसति, इति ।

अस्यैवाभिज्ञस्य संबन्धिनं संस्कारयुक्तं सोममिन्द्रवायू आभिमुख्येन खलु प्राप्नुतः ।

तृतीयस्य तृचस्य प्रथमायामृचि तृतीयपादं व्याचष्टे—

मित्रं हुवे पूतदक्षं धियं घृताचीं साधन्तेति वाग्वै धीर्घृताची, इति ।

पूतेषु शुद्धेषु दक्षं कुशलं मित्रं हुवे आह्वयामि । कीदृशं मित्रम्—धियं घृताचीं साधयन्तं(साधन्ता) धियं ध्यानयोग्यं घृताची(चीं) क्षरणोपेतं द्रव्यमाज्योदकादिकं प्रापयन्तम् । मन्त्ररूपां वा वाचं संपादयन्तम् । साधयन्ताविति द्विवचनं वा । वरुणं वेति द्वितीयपादे वरुणस्यापि प्रकृतत्वेनोभयोर्विशेषणत्वात् । इत्येतस्मिंस्तृतीयपादे धीर्घृताचीत्यनेन पदद्वयेन वागेव विवक्षिता ।

वेदनं शंसनं च प्रशंसति—

वाचमेवास्मिंस्तद्दधाति य एवं वेद
येषां चैवं विद्वानेतद्धोता शंसति, इति ।

तत्तेन वेदनेन शंसनेन च ।

---

इन्द्रवायू इ०—ऋ० सं० म० १ सू० २ ऋ० ४ । मित्रं हुवे पूत०—ऋ० सं० म० १ सू० २ ऋ० ७ ।

चतुर्थस्य तृचस्य प्रथमपादं व्याचष्टे—

**अश्विना यज्वरीरिष इत्यन्नं वा इषोऽन्नाद्यस्यावरुद्ध्यै, इति ।**

हेऽश्विनौ यज्वरीर्यागनिष्पादका इषो हविर्लक्षणान्यन्नानि स्वी कुरुतमित्यध्याहारः । यद्वा ऋचोऽन्तिमेन चनस्यतमिति पदेन संबन्धः । भक्षयतमिति तस्यार्थः । अत्र यदिदमिष इति पदं तस्यान्नमेवार्थोऽतोऽन्नप्राप्त्यर्थमिदं भवति ।

एतस्य तृचस्यान्तिमपादो निगदव्याख्यात इत्येतद्दर्शयति—

**आयातं रुद्रवर्तनी इति, इति ।**

अत्राऽऽयातमित्यादिपादं पठति । अत्राश्विनोरागमनं स्पष्टमेव प्रतीयत इत्यर्थः रुद्रस्येव वर्तनिर्मार्गो ययोरश्विनोस्तौ [रुद्र]वर्तनी । यथा रुद्रस्य जगदीश्वरस्य मा न क्वापि प्रतिबध्यते तद्वदनयोरपि । तादृशौ हेऽश्विनाविहास्मिन्कर्मण्यागच्छतम् ।

वेदनं प्रशंसति—

**आ हास्याश्विनौ यज्ञं गच्छतो य एवं**
**वेद येषां चैवं विद्वानेतद्धोता शंसति, इति ।**

पञ्चमस्य तृचस्य तिसृष्वृक्षु प्रथमपादानां तात्पर्यं दर्शयति—

**इन्द्राऽऽयाहि चित्रभानविन्द्राऽऽयाहि धियेषित इन्द्राऽऽ-**
**याहि तूतुजान इत्यायाह्यायाहीति शंसति, इति ।**

हेऽचित्रभानो विचित्ररश्मियुक्तेन्द्र त्वमस्मिन्कर्मण्यायाहि । तद्यथा(तथा) हे इन्द्र धिया स्वबुद्ध्येषितः प्रेषितः सन्ननुग्रहपूर्वमायाहि । तथा हे इन्द्र तूतुजानः शत्रूँन्हिंसन्नायाहि । इत्येतेषु त्रिषु पादेषु पुनः पुनरायाहीति पठन्नेव होता शंसतीति तेनेन्द्रस्त्वरया समागच्छतीत्यभिप्रायः ।

वेदनं प्रशंसति—

**आ हास्येन्द्रो गच्छति य एवं वेद**
**येषां चैवं विद्वानेतद्धोता शंसति, इति ।**

आगच्छति हेत्यन्वयः । सर्वथैवाऽऽगच्छतीत्यर्थः । पूर्वस्मिन्नश्विनोर्वाक्येऽप्या-गच्छतो हेत्येवं योजनीयम् ।

---

अश्विना यज्व०—ऋ० सं० म० १ सू० ३ ऋ० १ । आयातं रु०—ऋ० सं० म० १ सू० ३ ऋ० ३ । इन्द्राऽऽयाहि चित्र०—ऋ० सं० म० १ सू० ३ ऋ० ४ । इन्द्राऽऽयाहि धि०—ऋ० सं० म० १ सू० ३ ऋ० ५ । इन्द्राऽऽयाहि तू०—ऋ० सं० म० १ सू० ३ ऋ० ६ ।

---

१ ख. ग. घ. पठन्ति ।

षष्ठस्य तृचस्य प्रथमार्धं स्पष्टार्थत्वाभिप्रायेण पठति—

**ओमासश्चर्षणीधृतो विश्वे देवास आगतेति,** इति ।

हे **विश्वे देवा** अस्मिन्कर्मण्या**गच्छत** । कीदृशाः—अवन्ति रक्षन्तीत्यो**मासः** । चर्षणयो मनुष्या यजमानास्तान्धारयन्ति पोषयन्तीति **चर्षणीधृतः** ।

वेदनशंसने प्रशंसति—

**आ हास्य विश्वे देवा हवं गच्छन्ति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति,** इति ।

हूयतेऽत्रेति **हवो** यज्ञः ।

द्वितीयार्धं व्याचष्टे—

**दाश्वांसो दाशुषः सुतमिति यदाह ददुषो ददुषः सुतमित्येव तदाह,** इति ।

कीदृशा विश्वे देवाः—**सुत**मभिषुतं सोमं **दाशुषो** दत्तवतो यजमानस्य **दाश्वांसः** फलं दत्तवन्त इत्येतस्मिन्श्रुतिर्यदाह दाशुष इति यत्पदं तत्तेन पदेन **ददुषो ददुष** इत्यमुमेवार्थमाह । "दाशृ दाने" (भ्वा० उ० से० ८८२) इत्यस्माद्धातोस्तच्छब्द-निष्पत्तिः । एकवचनस्य यजमानजातिविषयत्वाद्वीप्सार्थोऽपि लभ्यते ।

दाश्वांस इति पदेन सूचितं फलं दर्शयति—

**ददति हास्मै तं कामं देवा यत्काम एतच्छंसति,** इति ।

वेदन शंसने प्रशंसति—

**य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति,** इति ।

ददति हास्मा अपि(इति) फलमत्राप्यनुवर्तते ।

सप्तमस्य तृचस्य तृतीयपादे धियावसुशब्दं व्याचष्टे—

**पावका नः सरस्वती यज्ञं वष्टु धिया-वसुरिति वाग्वै धियावसुः,** इति ।

या सरस्वती देवी सा **नो**ऽस्माकं **पावका** शुद्धिहेतुः सती **यज्ञ**मस्मदीयं **वष्टु** वहतु । कीदृशी सरस्वती—**धियावसु**र्बुद्ध्या सर्वानाच्छादयन्ती बुद्धिप्रदेत्यर्थः । पावकेत्यादिस्तृचस्य प्रथमपादो यज्ञमित्यादिस्तृतीयस्तस्मिन्धियावसुरितिशब्देन देवतान्तरं नाभिधीयते किं तु **वागेव** प्रथमपादोक्ता सरस्वत्येव ।

---

ओमासश्च०—ऋ० सं० म० १ सू० ३ ऋ० १ । दाश्वांसो दा०—ऋ० सं० म० १ सू० ३ ऋ० ७ । पावका नः स०—ऋ० सं० म० १ सू० ३ ऋ० १० ।

---

१ ग. घ. 'यार्थं व्या' । २ घ. इत्यस्मि' ।

वेदनशंसने प्रशंसति—

वाचमेवास्मिंस्तद्दधाति य एवं वेद

येषां चैवं विद्वानेतद्धोता शंसति, इति ।

तत्तेन वेदनेन शंसनेन च ।

तस्मिन्नेव तृतीयपादे वक्ष्विति पदं व्याचष्टे—

यज्ञं वक्ष्विति यदाह यज्ञं वहत्वित्येव तदाह, इति ।

तृचसप्तकस्थितामृक्संख्यां प्रशंसति—

ताः पराग्वचनेनैकविंशतिर्भवन्त्येकविंशोऽयं पुरुषो

दश हस्त्या अङ्गुलयो दश पाद्या आत्मैक-

विंशस्तमिममात्मानमेकविंशं संस्कुरुते, इति ।

आत्मा मध्यदेहः । स्पष्टमन्यत् ।

आवृत्तिविधिपूर्वकं तत्सहितां[1] संख्यां प्रशंसति—

तास्त्रिः प्रथमया त्रिरुत्तमया पञ्चविंशतिर्भवन्ति पञ्चविंश

आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो

दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमि-

ममात्मानं पञ्चविंशं संस्कुरुतेऽथो पञ्चविंशं वा एतदहः

पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते

तस्माद्वे एव पञ्चविंशतिर्भवन्ति भवन्ति, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके

प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

इति बह्वृचब्राह्मणारण्यकाण्डे प्रथमारण्यके

प्रथमोऽध्यायः ॥ १ ॥

आत्मा पुरुषो यजमानः, प्रजापतिः स्रष्टा चतुर्मुख एव, तावुभावपि हस्ताङ्गुल्या-दिपञ्चविंशत्याऽवयवोपेतौ । अन्यत्सर्वम् "अग्निं नरः" ( ऋ० सं० म० ७ सू० १ ऋ० १ ) इत्याज्यशस्त्रविधिशेषार्थवद्व्याख्येयम् [ऐ० आ० १ अ० १ ख० २] । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यक-भाष्ये प्रथमारण्यके प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्म-णारण्यकाण्डभाष्ये प्रथमारण्यके प्रथमोऽध्यायः ॥ १ ॥

---

१ ख. ग. तत्संहि ।

## अथ प्रथमारण्यके द्वितीयोऽध्यायः ।

### तत्र प्रथमः खण्डः ( पञ्चमः ) ।

---

प्रथमेऽध्याये प्रातःसवनगतमाज्यप्रउगशस्त्रद्वयं निरूपितम् । द्वितीये माध्यंदिनसवनगतं मरुत्वतीयादि निरूप्यते । तस्य मरुत्वतीयस्याऽऽदौ पठनीयं तृचं विधत्ते—

**आ त्वा रथं यथोतय इदं वसो सुतमन्ध**
**इति मरुत्वतीयस्य प्रतिपदनुचरौ, इति ।**

आ त्वेति तृचो मरुत्वतीयशस्त्रस्य प्रतिपत्प्रारम्भरूपः । इदं वसो, इत्ययं तृचोऽनुचरः, प्रतिपदमनुचरति । अनन्तरं पठनीय इत्यर्थः ।

तावेतौ तृचौ प्रशंसति—

**ऐकाहिकौ रूपसमृद्धौ बहु वा एतस्मिन्नहनि किंच किंच वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति, इति ।**

एकाहे प्रकृतिभूतेऽग्निष्टोमे समुत्पन्नावेतौ तृचावैकाहिकौ । रूपसमृद्ध्यादिकं माधुच्छन्दस्कप्रउगशेषार्थवेद्[1]व्याख्येयम् [ ऐ० आ० १ अ० १ ख० ३ ] ।

अनुरूपस्यानन्तरभाविनि प्रगाथे यदुक्थिन इति पदं तत्प्रशंसति—

**इन्द्र नेदीय एदिहि प्रसूतिरा शचीभिर्ये त उक्थिन इत्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपम्, इति ।**

इन्द्रेत्यादिः प्रगाथस्तस्मिन्प्रगाथे प्रथमायामृचि प्रथमः पादः । हे इन्द्र नेदीयः प्रत्यासन्नतममिदं कर्म प्रत्यागच्छैव । एदिहीत्यत्रेच्छब्द एवकारार्थः । प्रसूतिरित्यादिको द्वितीयस्यामृचि प्रथमः पादः । हे इन्द्र शचीभिः शक्तिभिः सह कर्मण्यागतेन त्वया प्रसूतिरनुज्ञा देया । ये होत्रादयस्त्वयाऽनुज्ञातास्तेऽस्मिन्कर्मण्युक्थिनः सत्रिण इत्येतस्मिन्पाद उक्थिन इति पदं तद्युक्तं यस्मादेतन्महाव्रताख्यमहरुक्थं वै शस्त्रात्मकमेव । तदेव कथमिति तदुच्यते—एतस्य महाव्रताख्यस्याह्नः स्वरूपमुक्थव-

---

आ त्वा रथं०— ऋ० सं० म० ८ सू० ६८ ऋ० १ । इदं वसो सुत०— ऋ० सं० म० ८ सू० २ अ० १ । इन्द्र नेदीय ए०—ऋ० सं० म० ८ सू० ५३ ऋ० ५ । प्रसूतिरा०—ऋ० सं० म० ८ सू० ५४ ऋ० ६ ।

---

१ ग. घ. 'र्थंवादे व्याख्ये' । २ क. 'वदेव व्याख्ये' ।

च्छस्त्रोपेतम् । यद्यपि कर्मान्तरमप्युक्थवदेव तथाऽप्येतद्रूपसमृद्धं प्रशस्तैः शस्त्रैरुपेतत्वात् । तस्मादुक्थिन इति पदं युक्तम् ।

प्रगाथान्तरगतं वीरमिति पदं प्रशंसति—

**प्रैतु ब्रह्मणस्पतिरच्छा वीरमिति वीर-**
**वद्रूपसमृद्धमेतस्याह्नो रूपम्**, इति ।

**प्रैत्वित्यादिः** प्रगाथस्य प्रथमायाः प्रथमः पादः । **अच्छा वीरमिति** तृतीयः पादः । ब्रह्मणो वेदस्य पतिः पालक एतन्नामको देवो **वीरं** शीघ्रफलप्रदत्वेनात्यन्तशूरमेतत्कर्माच्छ प्राप्तुं **प्रैतु** प्रकर्षेण गच्छतु । एतत्पाठे मदा(चैतः?)स्याह्नो रूपं **वीरवद्वीरपदयुक्तं सद्रूपेण समृद्धं** भवति ।

प्रगाथान्तरे सुवीर्यमिति प्रशंसति—

**उत्तिष्ठ ब्रह्मणस्पते सुवीर्यमिति वीर्य-**
**वद्रूपसमृद्धमेतस्याह्नो रूपम्**, इति ।

**उत्तिष्ठेत्यादिः** प्रगाथस्य प्रथमायामृचि प्रथमः पादः । हे **ब्रह्मणस्पत उत्तिष्ठ** हायुक्तो भव । तस्मिन्नेव प्रगाथ(थे)द्वितीयस्यामृचि तृतीयपादे **सुवीर्यमिति** पदं विद्यते, तच्च यजमानविशेषणं शोभनवीर्योपेतस्य फलस्य प्रतिपादनादह्नो **रूपं** वीर्यपदोपेतत्वाद्रूपसमृद्धम् ।

प्रगाथान्तर उक्थपदं शंसति—

**प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यमित्युक्थं वा**
**एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपम्**, इति ।

**प्र नूनमिति** प्रगाथपूर्वार्धम् । **ब्रह्मणस्पतिर्देवो नूनं** वेदस्वरूपं प्रकाशे **वदति** । कीदृशं **मन्त्रमुक्थ्यं** प्रशस्यम् । उत्तिष्ठत्यभिवृद्धिं गच्छति कर्मण्यनेन शस्त्रेणेत्युक्थं शस्त्रं तदर्हति यो मन्त्रः सोऽयमुक्थ्यः । **उक्थं वा एतदि**त्यादि पूर्ववद्व्याख्येयम् ।

अथ कस्यांचिद्धाय्यायामृचि वृत्रहेति पदं प्रशंसति—

**अग्निर्नेता स वृत्रहेति वार्त्रघ्नमिन्द्ररूप-**
**मैन्द्रमेतदहरेतस्याह्नो रूपम्**, इति ।

**अग्निर्नेते**त्यृचः प्रक्रमः । **स वृत्रहेति** तृतीयपादस्य प्रक्रमः । **अयमग्निर्नेता** कर्मणः

---

प्रैतु ब्रह्मण०—ऋ० सं० म० १ सू० ४० ऋ० ३ । उत्तिष्ठ ब्रह्मण०—ऋ० सं० म० १ सू० ४० ऋ० १ । प्र नूनं ब्रह्मण०—ऋ० सं० म० १ सू० ४० ऋ० ५ । अग्निर्नेता स०—ऋ० सं० म० ३ सू० २१ ऋ० ४ ।

---

१ क 'दनमह्नो ।

प्रवर्तकः । **स च वृत्रहा** शत्रुघाती । यद्यप्येतत्पदमग्नेर्विशेषणं तथाऽपि वृत्रघातित्वमिन्द्ररूपं संयुज्यत इन्द्रदेवताकं चैतदहस्तस्माद्वृत्रहेतिपदेनैतस्यैन्द्रस्य महाव्रताख्यस्याह्नो **रूपं** संपद्यते ।

धाय्यान्तरे वृषञ्शब्दं प्रशंसति—

**त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं वृषा वृषत्वेभिर्महित्वेति वृषण्वद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपम्**, इति ।

तत्र **त्वं सोमे**त्यृचः प्रथमः पादः । **त्वं वृषेति** तृतीयः पादः । हे **सोम त्वं क्रतुभिरेतैः** कर्मभिः **सुक्रतुर्भूः** शोभनकर्मा भव । तथा त्वं **वृषत्वेभिर्**वर्षकत्वैः कर्मभिर्वर्षणै**र्वृषा** वर्षिता सन्**महित्वा** महिवान्भव । अस्यामृचि वृषेति पदं सुविद्यते । इन्द्रस्य रूपमपि **वृषण्वद्** वृषशब्दोपेतमेव, तस्य शब्दस्येन्द्रवाचकत्वात् । **ऐन्द्रमित्यादि** पूर्ववत् ।

धाय्यान्तरे वाजिनमिति पदं प्रशंसति—

**पिन्वन्त्यपोऽत्यं न मिहे विनयन्ति वाजिनमिति वाजिमद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपम्**, इति ।

**पिन्वन्त्यप** इति तस्या ऋचः प्रक्रमः । **अत्यं न मिह** इति तृतीयः पादः । **पिन्वन्ति** देवता उदकानि सिञ्चन्ति । **मिह** सेचने, सेचननिमित्तं **वाजिनं** मेघं देवताविशेषेण प्रेरयन्ति । वाजिशब्दोऽन्नवाची " अन्नं वै वाजः " इति श्रुतेः । तद्धेतुत्वान्मेघो वाजी । तस्य प्रेर्यस्य मेघस्य दृष्टान्तोऽत्यं **नेति** । अत्यशब्दोऽश्ववाची "अश्वोऽसि" " हयोऽसि " "अत्योऽसि" " नरोऽसि " इत्यश्वमेधगताश्वाभिमन्त्रणमन्त्रे तत्परत्वेन प्रयोगात् । तदीयब्राह्मणे च तथैव व्याख्यातम्—" अत्योऽसीत्याह । तस्मादश्वः सर्वान्पशूनत्येति " इति । नशब्द उपमार्थः । यथा लोकेऽश्वारूढोऽश्वं प्रेरयति तद्वदित्यर्थः । अस्मिन्पादे वाजिशब्दो विद्यते । **इन्द्रस्य रूपमिति(मपि) वाजिमद्** वाजियुक्तमेतद्धरितवर्णैरश्वैरुपेतत्वात् । तथा च श्रूयते—"अस्मभ्यं तद्धर्यश्व प्रयन्धि " [ ऋ० सं० म० ३ सू० ३६ ऋ० ९ ] इति । **ऐन्द्रमित्यादि पूर्ववत्** ।

तस्या ऋचश्चतुर्थपादे स्तनयन्तमिति पदं प्रशंसति—

**अथो उत्सं दुहन्ति स्तनयन्तमक्षितमिति स्तनयद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपम्**, इति ।

---

त्वं सोम क्रतु०—ऋ० सं० म० १ सू० ९१ ऋ० २ । पिन्वन्त्यपोऽत्यं०—ऋ० सं० म० १ सू० ६४ ऋ० ६ । उत्सं दुहन्ति स्त०—ऋ० सं० म० १ सू० ६४ ऋ० ६ ।

वाजिमत्त्वप्रशंसया सह समुच्चयार्थोऽथ(थो) शब्दः । अस्मिन्मन्त्रे प्रतिपाद्या मरुतो देवाः **स्तनयन्तं** गर्जनयुक्तम**क्षितं** क्षयरहित**मुत्सं** जलप्रवाहं **दुहन्ति** संपादयन्ति । अत्र स्तनयन्तमिति पदं विद्यते । **इन्द्रस्य रूपमपि स्तनयद्वै** मेघगर्जनयोपेतमेव तस्य वृष्टिस्वामित्वात् । **ऐन्द्रमित्यादि** पूर्ववत् ।

इत्थं धाय्याभिधा ऋचः प्रशस्यानन्तरं पठनीये प्रगाथे बृहत्पदं प्रशंसति—

**प्र व इन्द्राय बृहत इति यद्वै बृहत्तन्मह-**
**न्महद्वद्रूपसमृद्धमेतस्याह्नो रूपम्** , इति ।

**प्र व** इत्यादिः प्रथमः पादः, तस्य द्वितीयपादगतेन मरुतो ब्रह्माऽऽर्चतेति मरुच्छब्देनान्वयः कर्तव्यः । हे मरुतो **वो** युष्मदर्थं **बृहते** प्रौढायेन्द्राय **ब्रह्म** परिवृढं कर्म **प्रार्चत** प्रकर्षेण संपादयत । तत्र प्रथमपादे **यदेव** बृहदिति पदमस्ति **तन्महदि**त्यमुमर्थमाचष्टे । **एतस्य** महाव्रत**स्याह्नो रूपं महद्व**दत्यन्तं प्रौढमेव प्रयोगस्य बहुलत्वादतः स्वरूपेण समृद्धम् ।

अनन्तरपाठ्ये प्रगाथे बृहत्पदं पूर्ववत्प्रशंसति—

**बृहदिन्द्राय गायतेति यद्वै बृहत्तन्महन्मह-**
**द्वद्रूपसमृद्धमेतस्याह्नो रूपम्** , इति ।

हे सामगा ऋत्विज इन्द्रार्थं बृहन्नामकं प्रौढं वा **साम गायत** । **यद्वा** इत्यादि पूर्ववत् ।

अनन्तरपाठ्ये प्रगाथे द्वितीयपादे शब्दद्वयं प्रशंसति—

**नकिः सुदासो रथं पर्यास न रीरमदिति पर्य-**
**स्तवद्रान्तिमद्रूपसमृद्धमेतस्याह्नो रूपम्**, इति ।

शोभनं फलं दानं यस्येन्द्रस्यास्ति सोऽयमिन्द्रः सुदास्तस्य **सुदासो रथं नकिः पर्यास** नैव पर्यस्तवान्गतः कोऽपि स्वार्थे न चालितवान् । तथा **न रीरम**त्तेन रथेन रमणमपि शत्रुर्न कृतवान् । किंत्विन्द्र एव स्वार्थं पर्यवस्यति स्वयमेव रमते च । अत्र पर्यासेति रीरमदिति पदद्वयस्य श्रुतत्वादे**तस्याह्नो रूपं पर्यस्तव**ल्लोकान्तरगमनाय परितश्चलनवद्रान्तिमद्रमणयुक्तम् । अतो रूपेण समृद्धम् ।

धाय्याभ्यः पुरस्तादुपरिष्टाच्च ये प्रगाथा उदाहृतास्तान्मिलित्वा प्रशंसति—

**सर्वान्प्रगाथाञ्छंसति सर्वेषामह्नामाप्त्यै सर्वेषा-**

---

प्र व इन्द्राय बृह०—ऋ० सं० म० ८ सू० ८९ ऋ० ३ । बृहदिन्द्राय गाय०—ऋ० सं० म० ८ सू० ८९ ऋ० १ । नकिः सुदासो०—ऋ० सं० म० ७ सू० ३२ ऋ० १० ।

**मुक्थानां सर्वेषां पृष्ठानां सर्वेषां शस्त्राणां सर्वेषां प्रउगाणां सर्वेषां सवनानाम् , इति ॥**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥ ( ५ )**

अशेषप्रगाथशंसनेन सर्वेषामहरादीनां प्राप्तिः संपद्यते । अहनि संवत्सरसत्रगतान्यु- **क्थानि** । यज्ञायज्ञीयसाम्न ऊर्ध्वभावीन्युक्थक्रतुनिष्पादकानि स्तोत्राणि **पृष्ठानि** । माध्यंदिनसवनगतानि रथंतरबृहदादिसामसाध्यानि स्तोत्राणि **शस्त्राण्याज्यादीनि** । यद्यपि शस्त्रान्तर्भूतमेव प्रउगं तथाऽपि " ब्राह्मणा आगताः परिव्राजका अप्यागताः " इति न्यायेन वैशिष्ट्यविवक्षा[यां] प्रउगाणां पृथङ्निर्देशः । **सवनानि** प्रसिद्धानि । एतेषां सर्वेषां प्राप्त्यर्थं सर्वप्रगाथशंसनम् । यस्मिन्नृग्द्वयसमूहे प्रगाथनेन[1] तृचः संपाद्यते सोऽयं प्रगाथः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये प्रथमारण्यके द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥ ( ५ )

---

अथ द्वितीयाध्याये द्वितीयः खण्डः । ( षष्ठः )

---

एतस्य महाव्रतगतमरुत्वतीयस्य चतुर्विंशाख्यमहः प्रकृतिः । अत एव **पञ्चमार- ण्यके** वक्ष्यते—"चतुर्विंशान्मरुत्वतीयस्याऽऽतानः" [ऐं० आ० ५ अ० १ ख० १] इति । तत्र यावदतिदिष्टम् "आ त्वा रथम्" इत्यादिकं "नकिः सुदासः" इत्येतदन्तं तत्सर्वं व्याख्यातम् ।

अथ नूतनं किंचित्सूक्तं विधत्ते—

**असत्सु मे जरितः साभिवेगः सत्यध्वृतमिति शंसति सत्यं वा एतदहः सत्यवद्रूपसमृद्धमेतस्याह्नो रूपम् , इति ।**

**असत्सु म** इत्यादिकं चतुर्विंशत्यृचं सूक्तम् । तस्य प्रथमः पादोऽ**भिवेग** इत्यन्तः प्रतीकप्रदर्शनार्थं पठितः । तदीयायां प्रथमायामृचि **सत्यध्वृतमिति** पदं विद्यते, तस्य च पदस्य तत्रत्येन प्रहन्ताऽस्मीत्यनेन संबन्धः[2] । दह( द्रुह्य )तिधातोर्वर्णव्यत्ययेन ध्वृतमिति संपद्यते । तथा सति सत्यद्रोहिणं हनिष्यामीति वाक्यार्थः । तस्य हननेन सत्यं प्रतिष्ठितं भवति । तच्चात्र युक्तं यस्मादेतन्महाव्रताख्यमहः **सत्यं वै** सत्यरूपमेव तस्मादे**तस्याह्नो रूपं सत्यवत्**सत्येन संयुक्तं **रूपसमृद्धं** भवति ।

---

असत्सु मे जरितः०—ऋ० सं० म० १० सू० २७ ऋ० १ ।

---

१ क. °गाथेन । २ क. ख. ग. °न्धः । दह ।

तदेतत्सूक्तमृषिद्वारेण प्रशंसति—

**तदु वासुक्रं ब्रह्म वै वसुक्रो ब्रह्मैत-**
**दहर्ब्रह्मणैव तद्ब्रह्म प्रतिपद्यते,** इति ।

तदु तदपि "असत्सु मे" [ऋ० सं० म० १० सू० २७ ऋ० १] इत्यादिसूक्तं **वासुक्रम्** । वसुक्राख्येण महर्षिणा दृष्टं वासुक्रम् । **वसुक्रो** महर्षिर्**ब्रह्म वै** परब्रह्म-स्वरूपं एतदभिज्ञत्वात् । **एतदपि** महाव्रताख्यम**हर्ब्रह्म**स्वरूपं तत्प्राप्तिहेतुत्वात् । अतो **ब्रह्म**स्वरूपेणैव वासुक्रेण सूक्तेन **ब्रह्म**स्वरूपमहः प्राप्नोति ।

पुनरपि प्रश्नोत्तराभ्यां प्रशंसति—

**तदाहुरथ कस्माद्वासुक्रेणैतन्मरुत्वतीयं प्रतिपद्यत इति न**
**ह वा एतदन्यो वसुक्रान्मरुत्वतीयमुदयच्छन्न विव्या-**
**चेति तस्माद्वासुक्रेणैवैतन्मरुत्वतीयं प्रतिपद्यते,** इति ।

तत्तस्मिन्सूक्ते जिज्ञासवः पृच्छन्ति । सन्ति वेदे बहून्यृष्यन्तरदृष्टानि [सूक्तानि] । अथैवं सति तानि परित्यज्य **कस्मात्**कारणा**द्वासुक्रेण** [वसुक्रेण] दृष्टेनैव सूक्तेन **मरु-त्वतीय**शस्त्रं **प्रतिपद्यते । न ह वा** इत्यादिकमभिज्ञानामुत्तरम् । **वसुक्रान्**महर्षे**रन्यः** कश्चिदपि महर्षि**रेतन्मरुत्वतीया**ख्यं शस्त्रं **नैवोदयच्छ**द्दाशतय्याः सकाशान्नैवोद्धृतवान् । **नापि विव्याचायं** प्रथमस्तृचोऽयं चानुचर इत्यादिविवेकमन्यो न कृतवान् । **तस्माद्व-सुक्रेण** संहितायाः सकाशाच्छस्त्रमुद्धृत्य विवेचितत्वात्तदीये**नैव** सूक्तेन शस्त्रप्राप्तिर्युक्ता ।

पुनरपि प्रजापतिसंबन्धेन सूक्तं प्रशंसति—

**तदनिरुक्तं प्राजापत्यं शंसत्यनिरुक्तो**
**वै प्रजापतिः प्रजापतेराप्त्यै,** इति ।

देवता विस्पष्टं निष्कृष्य यत्रोच्यते तन्निरुक्तं तद्विपरीतम् "असत्सु मे" इत्या-दिकं तादृशम् । न हि तदीयास्वृक्षु काचिदपि देवता नामग्रहपूर्वं विस्पष्टं प्रतीयते, तस्मा**दनिरुक्तं** प्रजापतिदेवताकमित्यवगत्य शंसेत् । **प्रजापतिः** प्रजापालको जग-दीश्वरः, स चा**निरुक्त** ईश्वरस्य कर्मप्रापितदेहाभावेनेन्द्रादिवन्निष्कृष्य मूर्तेर्वक्तुमशक्य-त्वात् । तस्मादनिरुक्तं सूक्तं तथाविधप्रजापतिप्राप्त्यै संपद्यते ।

तस्मिन्सूक्ते द्वाविंशत्या(द्वाविंश्या)मृचीन्द्रायेति पदं तत्प्रशंसति—

**सकृदिन्द्रं निराह तेनैन्द्राद्रूपान्न प्रच्यवते,** इति ।

तस्मिन्पादे "इन्द्राय सुन्वत्" [ऋ० सं० म० १० सू० २७ ऋ० २२] इत्येक-वारमिन्द्रं[२] स्वनाम्ना निष्कृष्य ब्रूते । तेनेन्द्रवचनेन तत्सूक्तमिन्द्रसंबन्धिनः[३] स्वरूपादप्र-च्युतं भवति । अतः पूर्वोक्तरीत्या प्राजापत्यत्वादैन्द्रत्वं तच्छा(च्छं)सनेनोहनीयम् ।

---

१ क. ख. °पमेत° । २ क. ग. घ. °मिन्द्रः स्व° । ३ क. ग. घ. °न्धितः स्व° ।

सूक्तान्तरं विधत्ते—

**पिबा सोममभि यमुग्र तर्द इति शंसति,** इति।

**पिबा सोममित्येतत्पञ्चदशर्चं सूक्तं शंसेत्।**

तस्मिन्सूक्ते प्रथमायामृचि द्वितीयपादे महिशब्दं प्रशंसति—

**ऊर्वं गव्यं महि गृणान इन्द्रेति मह-द्रूपसमृद्धमेतस्याह्नो रूपम्,** इति ।

हे इन्द्र त्वमूर्वमुरु प्रभूतं **गव्यं** पशुप्रदत्वेन गोभ्यो हितं **महि** महत्पूज्यं यथा भवति तथा **गृणानः** कथया(थ्यमा?)नोऽवतिष्ठसे । अत्र महिशब्दस्योक्तत्वादेतस्याह्नो **रूपं** महच्छब्दयुक्तं सद्रूपसमृद्धं भवति ।

ऋषिसंबन्धेन सूक्तं प्रशंसति—

**तदु भारद्वाजं भरद्वाजो ह वा ऋषीणामनूचान-तमो दीर्घजीवितमस्तपस्वितम आस स एतेन सूक्तेन पाप्मानमपाहत तद्यद्भारद्वाजं शंसति पाप्मनोऽपहत्या अनूचानो दीर्घजीवी तप-स्व्यसानीति तस्माद्भारद्वाजं शंसति,** इति ।

**तदु** तदपि सूक्तं "पिबा सोमम्" [ऋ० सं० म० ६ सू० १७ ऋ०१] इत्यादिकं भरद्वाजेन दृष्टम् । स च **भरद्वाजः** सर्वेषा**मृषीणां** मध्ये वेदशास्त्रपारं गतोऽतिशयेन चिरजीव्यतिशयेन **तपस्वी** बभूव । **स** तादृशो भरद्वाज **एतेन** पिबा सोममित्यादि**सूक्तेन** स्वकीयं पापं नाशितवांस्तस्मादेतच्छंसनं पापनाशाय भवति । तस्माद्यः पुमाननूचानत्वादियुक्तो भवानीति कामयते स पुमान्भारद्वाजमेतत्सूक्तं शंसेत् ।

सूक्तान्तरं विधत्ते—

**कया शुभा सवयसः सनीळा इति शंसति,** इति ।

कयेत्यादिकं पञ्चदशर्चं सूक्तम् ।

तस्मिन्सूक्ते चतुर्थ्यामृचि तृतीयपादगतमुक्थशब्दं प्रशंसति—

**आशासते प्रतिहर्यन्त्युक्थेत्युक्थं वा एतदह-रुक्थवद्रूपसमृद्धमेतस्याह्नो रूपम्,** इति ।

---

पिबा सोममभि०—ऋ० सं० म० ६ सू० १७ ऋ० १ । ऊर्वं गव्यं०—ऋ० सं० म० ६ सू० १७ ऋ० १ । कया शुभा सवयसः०—ऋ० सं० म० म० १ सू० १६५ ऋ० १ । आशासते प्रतिहर्य०—ऋ० सं० म० १ सू० १६५ ऋ० ४ ।

---

१ क. ख. ग. °नः कथयानः क° । २ ख. °ष्ठते । अ° ।

आशासते फलं कामयमानाय यजमानायोक्था शस्त्राणि प्रतिहर्यन्त्यपेक्षितं कामं प्रतिपादयन्ति। अत्रोक्थेति पदस्य विद्यमानत्वादेतदहरुक्थरूपमेवैतस्याह्नो रूपमुक्थयुक्तत्वाद्रूपसमृद्धं भवति।

नामधेयमुपजीव्य सूक्तं प्रशंसति—

तदु कयाशुभीयमेतद्वै संज्ञानं संतनि सूक्तं यत्कया-
शुभीयमेतेन ह वा इन्द्रोऽगस्त्यो मरुतस्ते समजा-
नत तद्यत्कयाशुभीयं शंसति संज्ञात्या एव, इति।

तदु तदपि "कया" [ऋ० सं० म० १ सू० १६९ ऋ० १] इत्यादिकं सूक्तं कयाशुभीयनामकं कया शुभेति पदद्वयस्य तत्र विद्यमानत्वात्। तद्यदेतत्कयाशुभीयं सूक्तमस्त्येतदेव संज्ञानं समीचीनज्ञानहेतुः। संतनि सम्यग्विस्तृतं च। एतेनैव सूक्तेनेन्द्रादयो ये सन्ति ते सर्वेऽपि समजानत सम्यग्ज्ञानवन्तोऽभूवन्। तस्मात्कयाशुभीयं शंसतीति यदस्ति तत्सम्यग्ज्ञानार्थमेव संपद्यते।

आयुर्हेतुत्वेन पुनः प्रशंसति—

तद्वायुष्यं तद्योऽस्य प्रियः स्यात्कु-
र्यादेवास्य कयाशुभीयम्, इति।

तदु तदेव सूक्तमायुषः कारणम्। तथा सति यो यजमानोऽस्य होतुः प्रियः स्यादस्य यजमानस्यार्थे कयाशुभीयमवश्यं कुर्यात्।

सूक्तान्तरं विधत्ते—

मरुत्वाँ इन्द्र वृषभो रणायेति शंसति, इति।

मरुत्वानित्यादिकं पञ्चर्चं सूक्तं शंसेत्।

अत्र वृषभशब्दं प्रशंसति—

इन्द्र वृषभ इति वृषण्वद्वा इन्द्रस्य
रूपमैन्द्रमेतदहरेतस्याह्नो रूपम्, इति।

हे इन्द्र त्वं वृषभः कामानां वर्षयिता समर्थ इत्येवं सूक्ते श्रूयते। इन्द्रस्य रूपं वृषण्वद्वै कामानां वर्षणयुक्तम्। ऐन्द्रमेतदित्यादि पूर्ववत्।

ऋषिसंबन्धेन प्रशंसति—

तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस, इति।

तदु तत्सूक्तं विश्वामित्रेण दृष्टं विश्वस्य सर्वस्य जगतो मित्रमित्यनयैव व्युत्पत्त्या मुनिर्विश्वामित्रनामक आस। उत्तरत्राप्येतन्नामधेयमेव निर्वक्ष्यति—" यदस्येदं

---

मरुत्वाँ इन्द्र वृषभो०—ऋ० सं० म० ३ सू० ४७ ऋ० १।

विश्वं मित्रमासीद्यदिदं किंच" [ ऐ० आ० २ अ० २ ख० १ ] [इति।] तस्माद्विश्वामित्रः। ईदृशेन दृष्टत्वात्प्रशस्तमिदमित्यर्थः।

वेदनशंसने प्रशंसति—

विश्वं हास्मै मित्रं भवति य एवं वेद
येषां चैवं विद्वानेतद्धोता शंसति, इति।

सूक्तान्तरं विधत्ते—

जनिष्ठा उग्रः सहसे तुरायेति निविद्धानमैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्नहनि किंच किंच वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति, इति।

"जनिष्ठाः" इत्यादिकमेकादशर्चम्। अस्मिन्सूक्ते षण्णामृचां शंसनं[1] कृत्वा तत ऊर्ध्वमिन्द्रो मरुत्वानित्यादीनि निवित्पदानि सूक्तमध्ये धीयन्ते तस्मादेतन्निविद्धानम्, तदेतदेकाहे मूलप्रकृतिरूपेऽग्निष्टोमे समुत्पन्नमित्यैकाहिकम्। रूपसमृद्धमित्यादि पूर्ववद्व्याख्येयम्। "आ त्वा रथम्" [ऋ० सं० म० ८ सू० ६८ ऋ०१] इत्यारभ्य "जनिष्ठा उग्रः" [ ऋ० सं० म० १० सू० ७३ ऋ० १ ] इत्येतदन्तं मरुत्वतीयं शस्त्रं पञ्चमारण्यके संगृह्य प्रदर्शितम्—"चतुर्विंशान्मरुत्वतीयस्याऽऽतानोऽसत्सु मे जरितः साभिवेगः पिबा सोममभि यमुग्रतर्दः कया शुभा सवयसः सनीळा मरुत्वाँ इन्द्र वृषभो रणाय जनिष्ठा उग्रः सहसे तुरायेति मरुत्वतीयम्" [ ऐ०आ०५अ०१ख०१ ] इति। "आ त्वा रथम्" [ऋ०सं०म०८सू०६८ऋ०१] इत्यारभ्य "असत्सु मे जरितः" [ऋ० सं० म० १० सू० २७ ऋ० १ ] इत्यतः प्राचीन ऋक्समूहो मूलप्रकृतावुत्पन्नश्चतुर्विंशाहे चोदकप्राप्तस्तस्मादपि चतुर्विंशाहादस्मिन्महाव्रते पुनश्चोदकप्राप्तः। "असत्सु मे" इत्यादिकमत्रैव विशेषविहितमेतत्सर्वं मरुत्वतीयं शस्त्रम्।

एतस्मिञ्शस्त्रे विद्यमानानामष्टानामृचां संख्यां प्रशंसति—

ताः पराग्वचनेन सप्तनवतिर्भवन्ति सा या नवतिस्तिस्रस्तास्त्रिंशिन्यो विराजोऽथ याः सप्तातियन्ति यैवैषा प्रशंसा साप्त्यस्य तस्या एव, इति।

---

जनिष्ठा उग्रः सहसे०—ऋ० सं० म० १० सू० ७३ ऋ० १।

---

1 ग. घ. 'देवं निवि'।

अत्र स्तोत्रियानुरूपयोः षड्ऋचः। षट्सु प्रगाथेषु प्रथमानिष्पन्नो१ऽष्टा(न्ना अष्टा)-दर्शचः। धाय्यास्तिस्रः। "असत्सु" [ऋ०सं०म०१०सू०२७ऋ०१] इति सूक्ते चतुर्विंशतिः। "पिबा सोमम्" (ऋ० सं० म० ६ सू० १७ ऋ० १) इत्यत्र पञ्च दश। "कया शुभा" (ऋ० सं० म० १ सू० १६९ ऋ० १) इत्यत्रापि पञ्च-दश। "मरुत्वाँ इन्द्र" [ऋ० सं० म० ३ सू० ४७ ऋ० १] इत्यत्र पञ्च। "जनिष्ठा उग्रः" [ऋ० सं० म० १० सू० ७३ ऋ० १] इत्यत्रैकादश। **ताः** सर्वा मिलित्वाऽऽवृत्तिरहितेन पाठेन **सप्ताधिका नवतिर्भवन्ति**। तत्र **या** ऋचो नव-तिसंख्याका[स्ता]स्त्रेधा विभक्ताः सत्यः प्रत्येकं त्रिंशत्संख्यायुक्ता विराजो भवन्ति। "त्रिंशदक्षरा विराट्" इति श्रुतेः। यादृशो विराजस्तिस्रः। **अथ** नवतिसंख्याया ऊर्ध्वं **या ऋचः** सप्तसंख्या **अतियन्त्यतिरिच्यन्ते**। एवं सति **साप्त्यस्य** सप्तत्वस्यातिरेकनि-मित्ता याः(या) **प्रशस्तिरेषा तस्या एव** [नवतेरेव?] न त्वन्तरेण [तां] प्रशंसा संपद्यते। सप्ताधिकनवतिरित्येवं व्यवह्रियमाणत्वात्।

आवृत्तिविधानपूर्वकं कृत्स्नसंख्यां प्रशंसति—

**तास्त्रिः प्रथमया त्रिरुत्तमयैकशतं भवन्ति,** इति।

त्रिरावृत्तया प्रथमया चोत्तमया सहिताः पूर्वोक्ता ऋच एकाधिकशतसंख्याकाः संपद्यन्ते।

उक्तस्य प्राशस्त्यस्य सिद्धये पुरुषावयवसंख्यासाम्यं दर्शयति—

**पञ्चाङ्गुलयश्चतुष्पर्वा द्वे कक्षसी दोश्चाक्षश्चां-**
**सफलकं च सा पञ्चविंशतिः पञ्चविंशानीत-**
**राणि ह्यङ्गानि तच्छतमात्मैकशततमः,** इति।

एकस्मिन्हस्ते **पञ्च**संख्याका **अङ्गुलयः**। एकैकस्याङ्गुलौ चत्वारि पर्वाणि। पर्व-शब्दो भागवाची। अग्रभागो मध्यभागो मूलभागस्तन्मूलभागश्चेति चत्वारो भागाः। यद्यप्यङ्गुष्ठे भागत्रयमेवोपलक्ष्यते तथाऽपीतरसामान्याय भागचतुष्टयं कृत्वा गणनी-यम्। एवं सत्यङ्गुलिगतपर्वसंख्या विंशतिः संपद्यते। कक्ष[:]शब्देन कक्षस्य पार्श्वद्वयं विवक्षितम्। ततः कक्षे द्विसंख्यासंपत्तिः। दोर्बाहुरेकः। एकोऽक्षश्चक्षुरिन्द्रियमे-कम्। अंसफलकमेकम्। एवं दक्षिणभागे **पञ्चविंशतिः** संपद्यते। एवं वामभाग-गतान्यङ्गान्यपि **पञ्चविंशतिर्भवन्ति**। मिलित्वा पञ्चाशत्संख्या संपन्ना। अनेनैव न्यायेन नाभेरधस्तादुभयोः पादयोरपि पञ्चाशत्संख्योन्नेया। दक्षिणपादे पूर्ववदङ्गुलि-पर्वसंख्या विंशतिरूरू जङ्घे द्वे संधयस्त्रय इत्येवं पञ्चविंशतिः। एवं वामपादेऽपि

१ ग. घ. °न्नोद°।

द्रष्टव्यम् । ततो हस्तयोः पादयोश्च मिलित्वा तत्सर्वमङ्गजातं शतं संपद्यते । आत्मा मध्यदेहः स चैकशतसंख्यापूरकः ।

पुनरप्यायुरादिरूपेण संख्यामेव प्रशंसति—

**यच्छतं तदायुरिन्द्रियं वीर्यं तेजो यजमान एकश-**
**ततम आयुषीन्द्रिये वीर्ये तेजसि प्रतिष्ठितः,** इति ।

तत्र या शतसंख्या सेयमायुरादिरूपा, आयुषः शतसंवत्सरपरिमितत्वात् । आयुषि स्थिते सतीन्द्रियं चक्षुरादिकं प्रवर्तते । **वीर्यं** च **तेजः** कान्तिरित्येतत्सर्वं सुस्थितं भवति । तां शतसंख्यामपेक्ष्य **यजमान** एकशतसंख्यापूरकः सन्नायुरादिषु **प्रतिष्ठितो** भवति ।

" जनिष्ठा उग्रः " [ ऋ० सं० म० १० सू० ७३ ऋ० १ ] इत्यादिष्वृक्ष्ववस्थितं त्रिष्टुप्छन्दः प्रशंसति—

**तास्त्रिष्टुभमभि संपद्यन्ते त्रैष्टुभो हि मध्यंदिनः,** इति ।

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके द्वितीयाध्याये**
**द्वितीयः खण्डः ॥ २ ॥ ( ६ )**

**ताः** शस्त्रगता ऋचोऽन्तिमसूक्तगतं त्रिष्टुबाख्यं छन्द आभिमुख्येन प्राप्नुवन्ति । मध्यंदिनसवनस्य यथोक्तशस्त्रोपेतस्य त्रिष्टुप्संबन्धित्वात् । "त्रैष्टुभं माध्यंदिनं सवनम्" इत्यादिश्रुन्तरप्रसिद्धिद्योतनार्थो हिशब्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यक-
भाष्ये प्रथमारण्यके द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥ ( ६ )

---

अथ तृतीयः खण्डः । ( सप्तमः )

---

माध्यंदिनसवने मरुत्वतीयं शस्त्रं निरूपितम् । अथ निष्केवल्यशस्त्रं निरूपणीयम् । तस्य च प्रेङ्खमारुह्य शंसनीयत्वादादौ प्रेङ्खं विधातुं प्रश्नोत्तराभ्यां तन्निर्वचनं दर्शयति—

**तदाहुः किं प्रेङ्खस्य प्रेङ्खत्वमित्ययं वै प्रेङ्खो योऽयं पवत**
**एष ह्येषु लोकेषु प्रेङ्खत इति तत्प्रेङ्खस्य प्रेङ्खत्वम्,** इति ।

त[त्त]त्र निष्केवल्यशंसनार्थे प्रेङ्खे केचन जिज्ञासवः पृच्छन्ति, लोके प्रेङ्खशब्देन दोलाऽभिधीयते तस्य प्रेङ्खस्य तन्नाम कथं संपन्नमिति । **अयं वा** इत्यादिकमभिज्ञानामुत्तरम् । **योऽयं** वायुरन्तरिक्षे **पवते** संचरत्ययमेव प्रेङ्खशब्दवाच्यः । यस्मादेष वायुरेषु पृथिव्यादिषु **लोकेषु** प्रकर्षेण चलति तस्माद्वायुवदन्तरिक्षे पवते संचरति । प्रकर्षेणेङ्खते चलत इति व्युत्पत्त्या प्रेङ्खनाम संपन्नम् ।

निर्वचनेन प्रेङ्खं प्रशस्य तन्निष्पादके फलके पूर्वपक्षत्वेन परकीयमतमुपन्यस्यति—

**एकं फलकं स्यादित्याहुरेकधा ह्येवायं**
**वायुः पवतेऽस्य रूपेणेति**, इति ।

अन्तरिक्षे वायोरेकेनैव प्रकारेण संचारादस्य वायोः स्वरूपेण प्रेङ्खो निष्पादनीय इत्यभिप्रेत्य केचिदेकमेव फलकमत्र भवेदिति* ।

पूर्वपक्षं निराचष्टे—

**तत्तन्नाऽऽदृत्यम्**, इति ।

त[त्त]स्मिन्प्रेङ्खे तदेकफलकमतं नैवाऽऽदरणीयम् ।

पुनरपि पूर्वपक्षत्वेन मतान्तरमुपन्यस्यति—

**त्रीणि फलकानि स्युरित्याहुस्त्रयो वा इमे**
**त्रिवृतो लोका एषां रूपेणेति**, इति ।

पृथिव्यन्तरिक्षं द्यौरित्येवमेते त्रयः प्रसिद्धा लोकास्ते च त्रिवृत उपर्यधोमध्यभावेन त्रेधा वर्तन्ते । एषां पृथिव्यादीनां रूपेण निष्पादयितुं त्रीणि फलकानि भवेयुरित्येवमन्ये पूर्वपक्षिण आहुः ।

एतमपि पक्षं निराचष्टे—

**तत्तन्नाऽऽदृत्यम्**, इति ।

पूर्ववद्योज्यम् ।

सिद्धान्तत्वेन स्वमतं दर्शयति—

**द्वे एव स्यातां द्वौ वा इमौ लोकावद्धातमाविव**
**दृश्येते य उ एने अन्तरेणाऽऽकाशः सोऽन्त-**
**रिक्षलोकस्तस्माद्द्वे एव स्याताम्**, इति ।

+प्रेङ्खार्थफलं द्वे एव फलके संपादनीये, न त्वेकं नापि त्रीणि । द्वावेव पृथिवी द्यौश्चेतीमौ लोकावद्धातमाविवास्माकमतिशयेन प्रत्यक्षाविव दृश्येते । भूलोकवर्तिनां मनुष्यादीनां द्युलोकवर्तिनां सूर्यचन्द्रादीनां च दृश्यमानत्वात् । यस्तु द्वयोरेतयोर्मध्यमाकाशः प्राणिदर्शनरहितः सोऽन्तरिक्षलोक इत्युच्यते । तस्मादन्तरिक्षस्य निष्प्रयोजनत्वादितरलोकद्वयानुसारेण द्वे एव फलके भवेताम् ।

तत्फलकनिष्पादनार्थं वृक्षविशेषं विधत्ते—

**औदुम्बरे स्यातामूर्ग्वा अन्नाद्यमुदुम्बर**

---

* आहुरिति पूरणीयम् । + प्रेङ्खार्थमित्येव पठितुं युक्तम् ।

---

१ क. ग. घ. 'नां च ।

ऊर्जोऽन्नाद्यस्यावरुद्ध्यै, इति ।

ऊर्क्शब्दो रसवाची । उदुम्बरश्चोर्ग्रस इव तत्फलेषु माधुर्यरसत्वस्य विद्यमानत्वात् । तेषां च पक्वफलानां भक्ष्यत्वेन फलानामुपदंशत्वेनात्तुं योग्यमन्नमुदुम्बरः । अतो रसस्यात्तुं योग्यस्यान्नस्य च प्राप्त्यै ते फलके औदुम्बरे भवतः ।

तयोः फलकयोर्लम्बमानतां विधत्ते—

मध्यत उद्धृते स्यातां मध्यतो वै प्रजा अन्नं धिनोति मध्यत एव तदन्नाद्यस्य यजमानं दधाति, इति ।

ते फलके यथा भूमिं न स्पृशतो यथा चोपरितनं वीतयनामकं तिर्यक्काष्ठं न स्पृशतस्तथैव भूमिवीतययोर्मध्यदेश उद्धृते उर्ध्वं भरणं प्राप्ते भरेषिताम्, ( भवेताम् । ) भुज्यमानमन्नं मध्य एव प्रजाः प्रांणनि(प्रीणयति), तत्तेनोद्धरणेनान्नाद्यस्य भोग्यस्य मध्य एव यजमानं स्थापयति ।

प्रेङ्खबन्धनाय रज्जुद्वयं विधत्ते—

उभय्यो रज्जवो भवन्ति दक्षिणाश्च सव्याश्च दक्षिणा वा एकेषां पशूनां रज्जवः सव्या एकेषां तद्यदुभय्यो रज्जवो भवन्त्युभयेषां पशूनामाप्त्यै, इति ।

दक्षिणहस्तेन निर्मिता रज्जवः प्रदक्षिणावृतो वामहस्तेन निर्मिताः सव्यावृत एवमन्त्रोभयविधा रज्जवो भवेयुः । लोकेऽपि केचित्पशवो दक्षिणावृद्भिर्बध्यन्ते केचित्सव्यावृद्भिः । तदुभयविधपशुप्राप्त्यर्थं द्विविधा रज्जवो भवेयुः ।

तासां रज्जूनां कारणं द्रव्यं विधत्ते—

दार्भ्यः स्युर्दर्भो वा ओषधीनामपहतपाप्मा तस्माद्दार्भ्यः स्युः, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( ७ )

ओषधीनां तृणविशेषाणां मध्ये दर्भस्य शुद्धिहेतुत्वात्पापराहित्यम् , "पवित्रं वै दर्भाः" इति श्रुत्यन्तरात् । तस्माद्रज्जवो दर्भेण निष्पादनीयाः । एतत्सर्वं पञ्चमे संगृहीतम्—"रज्जूभ्यामूर्ध्वमुद्वयति दक्षिणतो दक्षिणयोत्तरतः सव्यया दार्भ्ये त्रिगुणे स्याताम्" [ ऐ०आ०५अ०१ख०२ ] इति । यद्यपि दक्षिणोत्तरभागयोर्द्वे एव रज्जू तथाऽप्येकैकस्यां त्रिगुणत्वात्षट्संख्याकानवयवानभिप्रेत्य रज्जव इति बहुवचनम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( ७ )

---

१ क. प्राणने । २ क. °स्वद्रूपसं° ।

अथ चतुर्थः खण्डः । ( अष्टमः )

भूमिप्रेङ्खयोर्मध्ये व्यवधानस्येयत्तां निश्चेतुं पूर्वपक्षमुपन्यस्य निराचष्टे—

**अरत्निमात्र उपरि भूमेः प्रेङ्खः स्यादित्याहुरेतावता वै स्वर्गा लोकाः संमिता इति तत्तन्नाऽऽदृत्यम्,** इति ।

**अरत्निः** प्रादेशद्वयमात्रप्रमाणम् । **भूमे**रुपरि तावन्मात्रव्यवधाने **प्रेङ्खः** कार्यः । अन्तरिक्षादुपरि वर्तमानभोगहेतवो ये **स्वर्गलोका**स्ते प्रजापतेररत्निमात्रेण सदृशा भवन्ति, तत्प्रशस्तत्वादरत्नेरुपरि प्रेङ्खः स्थापनीय **इति** केचिदाहुः । त[त्त]स्मिन्प्रेङ्खे तन्मतं **ना**ऽऽदरणीयम् ।

पुनरपि पूर्वपक्षत्वेन मतान्तरमुपन्यस्य दूषयति—

**प्रादेशमात्रे स्यादित्याहुरेतावता वै प्राणाः संमिता इति तत्तन्नाऽऽदृत्यम्** , इति ।

**प्राण**वायवो हि देहस्यान्तर्हृदयादूर्ध्वं **प्रादेशमात्रं** संचरन्ति मुखाद्बहिरपि संचरतां प्रादेशमात्रेण **संमिता** भवन्ति । अन्यत्पूर्ववद्व्याख्येयम् ।

सिद्धान्तं दर्शयति—

**मुष्टिमात्रे स्यादेतावता वै सर्वमन्नाद्यं क्रियत एतावता सर्वमन्नाद्यमभिपन्नं तस्मान्मुष्टिमात्र एव स्यात्,** इति ।

**एतावता** मुष्टिपरिमितेन द्रव्येण मोदकदृक्पूरिकादिरूपं **सर्वमन्नाद्यं** निष्पाद्यते, **एतावता** मुष्टिपरिमितेन ग्रासेन **सर्वमन्नाद्यं** मुखे प्राप्तं भवति, **तस्मा**दन्नप्राप्त्यै **मुष्टिमात्र** एवोर्ध्वप्रदेशे प्रेङ्खो भवेत् ।

अथ प्रेङ्खारोहणे कंचित्पूर्वपक्षमुपन्यस्य दूषयति—

**पुरस्तात्प्रत्यञ्चं प्रेङ्खमधिरोहेदित्याहुरेतस्य रूपेण य एष तपति पुरस्ताद्ध्येष इमाँल्लोकान्प्रत्यङ्ङधिरोहतीति तत्तन्नाऽऽदृत्यम्,** इति ।

होता स्वयं पूर्वस्यां दिश्यवस्थाय **प्रत्यञ्चं** पश्चिमदिश्यवस्थितं **प्रेङ्खमधिरोहे**दित्याहुः । तत्रेयमुपपत्तिः—**य** आदित्योऽस्ति स **एष एतस्य रूपेण पुरस्ता**दवस्थाय पश्चिमारोहणरूपेण **तपति** । उदयादूर्ध्वमामध्याह्नं पश्चिमाभिमुखस्याऽऽदित्यस्याऽऽरोहदर्शनात् । अयमेवार्थः प्रसिद्धिवाचकेन हिशब्देनोत्तरवाक्ये स्पष्टीकृतः । तस्मात्पुरस्तादवस्थायाधिरोहेदिति, सोऽयं पूर्व पक्षो नाऽऽदरणीयः ।

पुनरप्यन्यं पूर्वपक्षमुपन्यस्य दूषयति—

**तिर्यञ्चमधिरोहेदित्याहुस्तिर्यञ्चं वा अश्वमधिरोहन्ति**

**तेनो सर्वान्कामानवाप्नवामेति तत्तन्नाऽऽदृत्यम्,** इति ।

पूर्वपश्चिमयोरायतनस्य* प्रेङ्खस्योत्तरदक्षिणविस्तारस्तिर्यक्त्वं तस्यान्यतरस्यां दिश्यवस्थाय तिर्यक्त्वेनावस्थितं प्रेङ्खमधिरोहेदित्यन्य **आहुः** । तत्रेयमुपपत्तिः—अश्वस्य पार्श्वेऽवस्थाय **तिर्यञ्चमश्वं** जना **अधिरोहन्ति** । **तेनो** तेनैव तिर्यगधिरोहेण सर्वकामप्राप्तिरिति तेषामभिप्रायः । अयमपि पक्षो नाऽऽदरणीयः ।

सिद्धान्तिनां मतं दर्शयति—

**अन्वञ्चमधिरोहेदित्याहुरनूचीं वै नावमधिरोहन्ति नौर्वैषा स्वर्ग्याणी यत्प्रेङ्ख इति तस्मादन्वञ्चमेवाधिरोहेत् ,** इति ।

प्रागग्रस्य प्रेङ्खस्य पश्चिमदिश्यवस्थाय प्रागाभिमुख्येनाऽऽरोहणमन्वगारोहणं **तदेव कुर्यादिति** सिद्धान्तिन **आहुः** । लोके नौर्यदा पश्चिमतीरेऽवस्थाय प्राचीनतीरं गच्छति तदानीं जना अपि पश्चिमतीरेऽवस्थाय प्राङ्मुखा **अधिरोहन्ति** । तदिदं नावोऽन्वगारोहणम् । **प्रेङ्ख इति यदस्त्येषा** स्वर्गप्रापिका **नौरेव, तस्मादन्वगारोहणं** युक्तमिति सिद्धान्तः ।

तस्मिन्नधिरोहणे कंचिद्विशेषं विधत्ते—

**छुबुकेनोपस्पृशेच्छुको है वं वृक्षमधिरोहति स उ वयसामन्नादतम इति तस्माच्छुबुकेनोपस्पृशेत्,** इति ।

**छुबुकशब्देन** मुखस्याधरफलकमुच्यते । तेन **प्रेङ्खमुपस्पृशेत्** । लोके **हि शुक**नामकः पक्षी छुबुकस्पर्शनपुरःसरं **वृक्षमधिरोहति । स** तु शुकः पक्षिणां मध्येऽतिशयेनान्नादः, राजामात्यादयो विनोदार्थं शुकं रक्षन्तः क्षीरादिकं भोजयन्ति । **तस्मादन्न**प्राप्त्यै तु **च्छुबुकेनोपस्पृशेत्** ।

यथा छुबुकस्पर्शनमेवमरत्निस्पर्शनं विधत्ते—

**बाहुभ्यामधिरोहेदेवं श्येनो वयांस्यभिनिविशत एवं वृक्षं स उ वयसां वीर्यवत्तम इति तस्माद्बाहुभ्यामधिरोहेत् ,** इति ।

**बाहुशब्देना**त्र कूर्परमारभ्याग्रभागोऽरत्निशब्दवाच्यो विवक्षितः । तथा **च पञ्चमे** पठ्यते—"पश्चार्धे फलकेऽरत्नी प्रतिष्ठापयति" [ ऐ०आ०१अ०१ख०४ ] [इति] । ताभ्यामरत्निभ्यामधिरोहणं कुर्यात् । अनेनैव प्रकारेण **श्येनो** बलवान्पक्षी **वयांस्य**न्यान्पक्षिणोऽभिलक्ष्य तद्दर्शनार्थं तेषां दुर्बलानां पक्षिणामुपर्यरत्निभ्यामुपस्पृश्योपविशति ।

* आयतस्येति पाठ्यम् ।

१ ख. ग. घ. 'न्ति । तेनै'

किंचानेनैव प्रकारेणारत्निस्पर्शनपूर्वकं वृक्षमधिरोहति। यत्तु(स तु?)श्येनः पक्षिणां मध्येऽतिशयेन शक्तिमान्। यस्मादेवं श्येनसादृश्यं भवति तस्मादरत्नी प्रतिष्ठापयेत्।

अरत्निस्थापनादूर्ध्वं प्रेङ्खमारूढवतो होतुरेकेन पादेन भूमिस्पर्शनं विधत्ते—

**अस्यै पादं नोच्छिन्द्यान्नेदस्यै प्रतिष्ठाया उच्छिद्या इति, इति।**

अस्या भूमेः सकाशात्स्वकीयं दक्षिणं सव्यं वा पादमेकमुच्छिन्नं न कुर्यात्किंतु भूमौ पादं प्रतिष्ठापयेत्। नेदित्यव्ययसमूहः परिभयार्थे वर्तते। यद्यहं पादं भूमेर्वियुक्तं कुर्यां तदानीं प्रतिष्ठारूपाया अस्या भूमेः सकाशादहमेवोच्छिन्नो भूयासमित्यभिप्रेत्य स्वकीयं भयं द्योतयन्भीतिपरिहाराय भूमिं स्पृष्ट्वैव तिष्ठेत्।

होतुरुद्गातुश्चाऽऽरोहणस्थानव्यवस्थां विधाय प्रशंसति—

**प्रेङ्खं होताऽधिरोहत्यौदुम्बरीमासन्दीमुद्गाता**
**वृषा वै प्रेङ्खो योषाऽऽसन्दी तन्मिथुनं मिथु-**
**नमेव तदुक्थमुखे करोति प्रजात्यै, इति।**

मञ्चकवच्चतुष्पदोन्नताऽऽसन्दी। होत्रा समारूढः प्रेङ्खः पुंलिङ्गशब्देनाभिधानाद्वृषा रेतःसेचनसमर्थः पुमान्। आसन्दी तु स्त्रीलिङ्गनिर्देशाद्योषा। तदुभयं मिलित्वा मिथुनं संपद्यते। तत्तेनोभयावरोहणेनोक्थमुखे निष्केवल्याख्यशस्त्रस्य प्रारम्भे मिथुनमेव संपादयति। तच्च प्रजोत्पत्त्यै भवति।

एतद्वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद, इति।**

प्रकारान्तरेणोभयं प्रशंसति—

**अथान्नं वै प्रेङ्खः श्रीरासन्द्यन्नं चैव**
**तच्छ्रियं चान्वधिरोहतः, इति।**

पूर्वोक्तमिथुनरूपत्वप्रशंसया सह समुच्चयार्थोऽथशब्दः। प्रेङ्खस्यौदुम्बरत्वादन्नरूपत्वं तच्च फलकविधाने प्रतिपादितम्। श्रियं प्राप्ता राजादय उच्चासनमधिरोहन्ति। अतः श्रीरासन्दी। तदुभयमन्नश्रीरूपमेतावुभावनुक्रमेणाधिरोहतः। तदेतदुभयं यजुर्वेद आम्नातम्—"आसन्दीमुद्गाताऽऽरोहति साम्राज्यमेव गच्छन्ति प्रेङ्खं होता नाकस्यैव पृष्ठं रोहन्ति" इति।

इतरेषामासनानि विधत्ते—

**बृसीर्होत्रकाः समधिरोहन्ति सब्रह्मकाः, इति।**

तृणविशेषवंशशकलादिविनिर्मिता आसनविशेषा बृस्यः कूर्चशब्दाभिधेयाः। अत एव पञ्चमे वक्ष्यते—"कूर्चान्होत्रकाः समारोहन्ति ब्रह्मा च" [ऐ० आ० ५

अ० १ ख० ४ ] इति। प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेत्येते होत्रकास्ते च ब्रह्मणा सहिता बृसीरधिरोहेयुः ।

तदधिरोहणं प्रशंसति—

**समुत्सृप्य वा ओषधिवनस्पतयः फलं गृह्णन्ति तद्य-देतस्मिन्नहनि सर्वशः समधिरोहन्तीषमेव तदू-र्जमन्नाद्यमधिरोहन्त्यूर्जोऽन्नाद्यस्यावरुद्ध्यै,** इति ।

**ओषधयो** ब्राह्मीयवाद्या **वनस्पतयः** पनसौदुम्बराद्यास्ते च सर्वे **समुत्सृप्य** सम्य-गुन्नता भूत्वा पश्चात्फलन्ति । तत्तथा सति यद्येतस्मिन्महाव्रतनामकेऽह्नि सर्वे ब्रह्मादय आसनान्यधिरोहेयुस्तत्तेनाधिरोहणेनेषमन्नमूर्जं तद्रसमन्नाद्यं भक्षणयोग्यप्रशस्तान्नं चाधिरूढा भवन्ति । तस्मात्क्षीरादिरसस्य शाल्याद्यन्नस्य च प्राप्त्यै तदधिरो-हणं संपद्यते ।

यद्यप्यवरोहस्य नायं कालस्तथाऽप्यारोहणप्रसङ्गाद्बुद्धिस्थावरोहणं विधातुं कांचि-त्पूर्वपक्षमुपन्यस्य दूषयति—

**वषट्कृत्यावरोहेदित्याहुस्तत्तन्नाऽऽदृत्यमकृता वै साऽपचितिर्यामपश्यते करोति,** इति ।

होता **वषट्**शब्दमुच्चार्यानन्तरमेव प्रेङ्खादवरोहेदिति केचिदाहुस्तन्मतं नाऽऽद्-रणीयम् । कुतः । भक्षस्यापचित्यर्थं हि प्रेङ्खादवरोहणं सा वा(चा)पचितिः पूजनीये भक्षे समागत्य निरीक्षमाणे सति कर्तव्या । यद्यप्यपश्यते भक्षस्यापचितिः क्रियेत तदा-नीमियमकृतैव स्यान्नहि वषट्कारानन्तर्यं भक्षागमनस्यावसरस्तस्यानुवषट्कारादूर्ध्व-भावित्वात् ।

पुनरप्यन्यं पक्षमुपन्यस्य दूषयति—

**निगृह्य भक्षमवरोहेदित्याहुस्तत्तन्नाऽऽदृत्यमकृता वै साऽपचितिर्यामध्यूढाय करोति,** इति ।

**निगृह्य** नितरां हस्ते गृहीत्वा पश्चादवरोहणमित्येतदपि मतं नाऽऽदरणीयम्[1] । अवरोहलक्षणोपचारकालस्यातिक्रान्तत्वात् । अध्यूढायाधिकृतेन समीपं प्रापाय **याऽ-पचितिः सेयं** कृताऽपि कालातिक्रमादकृतैव भवेत् ।

सिद्धान्तं दर्शयति—

**प्रतिख्याय भक्षमवरोहेदेषा वा अपचितिर्यां पश्यते करोति तस्मात्प्रतिख्यायैव भक्षमवरोहेत्,** इति ।

---

१ ख, °मीयप्रा° ।

प्रतिख्यायाऽऽगच्छन्तं भक्षं दृष्ट्वा तदानीमेव तस्मिन्भक्षे पश्यति सति येयमवरोहणरूपाऽपचितिः सा मुख्या पूजा। लोकेऽपि हि शिष्टा आचार्यादीनामागमनात्प्रागपि स्वासनान्नोत्तिष्ठन्ति। तेष्वागत्योपविष्टेषु पश्चादपि नोत्तिष्ठन्ति। किं तर्हि यावता देशव्यवधानेन ते पश्यन्ति तावति देशे तद्दृष्टिपातकाल एव सहसोत्तिष्ठन्ति, तस्माद्भक्ष्यं(क्षं) प्रतिख्यायावरोहेदित्येष एव सिद्धान्तः।

तस्मिन्नवरोहे कंचिन्नियमं विधत्ते—

प्राङ्वरोहेत्प्राग्वै देवरेत[ः?] संप्रजायते
तस्मात्प्राङ्वरोहेदवरोहेत्, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके द्वितीयाध्याये
चतुर्थः खण्डः ॥ ४ ॥ (८)

## इति बह्वृचब्राह्मणारण्यकाण्डे प्रथमारण्यके द्वितीयोऽध्यायः ॥ २ ॥

पश्चिमदिशि समारूढो होता स्वयं प्राङ्मुखः सन्प्राच्यां दिश्यवरोहेत्। प्राग्वै प्राच्यामेव दिशि देवानामिन्द्रादीनां रेतः पुत्रादिरूपेणोत्पद्यते। देवलोकस्य पूर्वदिग्वर्तित्वात्। तस्माद्देवत्वाय प्राङेवावरोहेन्न तु प्रत्यङ्। अभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये
प्रथमारण्यके द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ (८)

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यकभाष्ये प्रथमारण्यके द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ प्रथमारण्यके तृतीयोऽध्यायः।

तत्र प्रथमः खण्डः। (नवमः)

---

पूर्वाध्याये निष्केवल्यशस्त्रप्रशंसनार्थं पूर्वाधिरोहणमुक्तम्। अतस्तच्छंसनं[1] विविच्यते। तत्राऽऽदौ पक्षिणामित्येतस्य शब्दस्योच्चारणं विधत्ते—

हिङ्कारेणैतदहः प्रतिपद्येतेत्याहुः, इति।

अहःशब्देनात्र तदीयं शस्त्रमुपलक्ष्यते। तच्च हिंकारेण प्रारभेतेत्येवमभिज्ञा आहुः। यद्ययं हिंकारशब्दश्चोदकेनैव प्राप्तस्तर्ह्यर्थवादसंबन्धार्थं तद्विध्यनुवाद इति द्रष्टव्यम्। एवमन्यत्राप्राप्तो विधिः प्राप्तस्य प्रशंसार्थमनुवादः।

---

१ ग. घ. अत्र तच्छं°।

हिंकारवेदनं प्रशंसति—

**ब्रह्म वै हिंकारो ब्रह्मैव तदहर्ब्रह्मणैव**
**तद्ब्रह्म प्रतिपद्यते य एवं वेद,** इति ।

हिंकारस्याह्नश्च ब्रह्मप्राप्तिहेतुत्वाद्ब्रह्मत्वम् । अतो ब्रह्मरूपेणैव हिंकारेणैतद्ब्रह्मरूपमहः प्राप्नोति ।

पुनरपि हिंकारं प्रशंसति—

**यदेव हिंकारेण प्रतिपद्यता३इ वृषा वै हिंकारो**
**योषर्क्तन्मिथुनं मिथुनमेव तदुक्तमुखे करोति**
**प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद,** इति ।

आ(अ)कारः प्लुत इकारश्चेत्येतदुभयं प्रतिपद्यत इत्येकारस्य स्थाने विहितम् । आदरातिशयद्योतनार्थं प्लुतिः । हिंकारेण शस्त्रं प्रारभ्यत इति यदस्ति तत्र हिंकारस्य पुंलिङ्गशब्देन निर्देशादृचश्च स्त्रीलिङ्गशब्देन व्यवहारादुभयं मिलित्वा मिथुनं संपद्यते । मिथुनमेवेत्यादि पूर्ववद्व्याख्येयम् ।

पुनः प्रकारान्तरेण प्रशंसति—

**यद्वेव हिंकारेण प्रतिपद्यता३इ यथा वा**
**अभ्रिरेवं ब्रह्मणो हिंकारो यद्वै किंचाभ्रि-**
**याऽभितितृत्सत्यभ्येवैनत्तृणत्त्येवम्,** इति ।

यद्शब्दोऽपि चेत्यस्मिन्नर्थे वर्तते । स च पूर्वप्रशंसया समुच्चयार्थः । हिंकारेणैव प्रारभ्यत इति यदस्ति तत्र यथैव लोकेऽभ्रिः खननहेतुः काष्ठविशेष एवं ब्रह्मणो वेदस्य हिंकारो वेदसारस्य निधिस्थानीयस्य खननहेतुः । एवं च सति लोके यदेव किंचित्कठिनं भूतलमभ्रिया खननसाधनभूतयाऽभितितृत्सति सर्वतस्तार्दितुं खनितुमिच्छति स पुमानेतत्कठिनं भूतलमभितृणत्त्येव सर्वथा खनत्येवमयं होता वेदे दुर्लभं लभत इत्यर्थः ।

हिंकारवेदनं प्रशंसति—

**यं कामं कामयते हिंकारेणाभ्येवैनं तृणत्ति य एवं वेद,** इति ।

पुनरपि प्रकारान्तरेण हिंकारं प्रशंसति—

**यद्वेव हिंकारेण प्रतिपद्यता३इ वाचो वा एषा व्यावृत्ति-**
**र्दैव्यै च मानुष्यै च यद्धिंकारः स यद्धिंकृत्य प्रतिपद्यते**
**वाचमेव तद्व्यावर्तयति दैवीं च मानुषीं च,** इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयाध्याये
प्रथमः खण्डः ॥ १ ॥ (९)

स्तोत्रशस्त्रादिरूपा वैदिकी वाग्दैवी । अशनाच्छादनादिविषया लौकिकी वाङ्मानुषी । एवं सति हिंकार इति यदस्ति सैषा द्विविधाया वाचः परस्परव्यावृत्तिहेतुः । दैव्या वाचा हिंकारः प्रयुज्यते न तु मानुष्या तदेतद्धिंकारस्य व्यावर्तकत्वम् । अतो यदि हिंकृत्य शस्त्रं प्रारभेत तदानीमयं होता द्विविधामपि वाचं परस्परव्यावृत्तां करोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥ ( ९ )

---

अथ द्वितीयः खण्डः । ( दशमः )

---

शस्त्रप्रारम्भकाले मनोवाचोरत्यन्तसाधनत्वमभिप्रेत्य प्रश्नोत्तराभ्यां तदुभयं प्रशंसति—

**तदाहुः कैतस्याह्नः प्रतिपदिति मनश्च वाक्चेति ब्रूयात्, इति ।**

अहरुपलक्षितस्यैवास्य शस्त्रस्य का प्रतिपत्किं प्रारम्भसाधनमिति तदाहुस्तस्मिञ्शस्त्रे जिज्ञासवः पृच्छन्ति । तत्र मनश्चेत्यभिज्ञश्नो(स्यो)त्तरम् । मनश्च वाक्चेत्येतदुभयं प्रारम्भसाधनमित्युत्तरं ब्रूयात् । अप्रमत्तेन मनसा प्रथमं शस्त्रं पर्यालोच्य पश्चादप्रमत्तया वाचा शंसेदित्यर्थः । निष्केवल्यस्य बहुविधविप्रकीर्णमन्त्रसमुदायरूपत्वाद्वाङ्मनसयोरत्र विशेषेणाप्रमत्तत्वाभिधानम् ।

मनश्च वाक्चेत्यनयोः पृथगुपयोगं दर्शयति—

**सर्वेऽन्यस्मिन्कामाः श्रिताः सर्वानन्यान्कामान्दुहे, इति ।**

तयोरुभयोर्मध्ये यदन्यन्मनःशब्दवाच्यं तस्मिन्सर्वे कामाः श्रिताः प्राप्ताः । या त्वन्या वागस्ति सा सर्वान्कामान्दुहे दुग्धे संपादयति ।

मनसः कामाधारत्वं विशदयति—

**मनसि वै सर्वे कामाः श्रिता मनसा हि सर्वान्कामान्ध्यायति, इति ।**

कामा अभिलाषा मनोवृत्तिविशेषत्वान्मनस्येवावता[1]ऽपि(स्थिताः?) । अत एव सर्वे लोकाः काम्यमानान्पदार्थान्मनसा ध्यायन्ति ।

एतद्वेदनं प्रशंसति—

**सर्वे हास्मिन्कामाः श्रयन्ते य एवं वेद, इति ।**

वाचः कर्मसंपादकत्वं विशदयति—

**वाग्वै सर्वान्कामान्दुहे वाचा हि सर्वान्कामान्वदति, इति ।**

---

१ क. ख. °स्येताव° ।

वागेव सर्वानभिलषितान्पदार्थान्संपादयति । यस्माल्लोके ममैते पदार्थाः सन्त्विति दातॄणामग्रे वाचा याचते ते च दातारः प्रयच्छन्ति तदिदं वाचः कामसंपादकत्वम् ।

वेदनं प्रशंसति—

**सर्वान्हास्मै कामान्वाग्दुहे य एवं वेद**, इति ।

वाङ्मनसयोरप्रमत्तत्त्वं विधाय हिंकारादूर्ध्वं व्याहृतित्रयोच्चारणं विधातुं प्रस्तौति—

**तदाहुर्नैतदहर्ऋचा न यजुषा न साम्ना प्रत्यक्षात्प्रति-
पद्येत नर्चो न यजुषो न साम्न इयादिति**, इति ।

अयं कर्मविशेष ऋगादिभ्यो नेयान्नापगच्छेदित्यभिप्रेत्य **तदेतदहः प्रत्यक्षा**दव्यवधानादृगादिभिर्न प्रारभेतेत्येव **तदाहुः**, तस्मिञ्शास्त्रेऽभिज्ञाः कथयन्ति ।

तदव्यवधानं वारयितुं व्यवधानहेतुमन्त्रं विधत्ते—

**तदेता व्याहृतीः पुरस्ताज्जपेत्**, इति ।

यस्माद्धिंकारस्यर्गादीनां च मध्ये व्यवधानमपेक्षितं तस्मादृगादिभ्यः **पुरस्तादेता** एव वक्ष्यमाणा व्याहृतीर्जपेत् ।

व्याहृतीनां स्वरूपं तत्प्रशंसां च दर्शयति—

**भूर्भुवः स्वरित्येता वाव व्याहृतय इमे त्रयो वेदा
भूरित्येव ऋग्वेदो भुव इति यजुर्वेदः स्वरिति
सामवेदस्तन्नर्चा न यजूषा न साम्ना प्रत्यक्षा-
त्प्रतिपद्यते नर्चो न यजुषो न साम्न एति**, इति ॥

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयाध्याये
द्वितीयः खण्डः ॥ २ ॥ ( १० )**

भूरित्यादिमन्त्रत्रयरूपा एव व्याहृतयः । इमे च मन्त्रा वेदत्रयप्रतिनिधिरूपाः । स एवार्थो भूरित्येवेत्यादिना स्पष्टी क्रियते । तत्तथा सति व्याहृतीनां मध्ये प्रयोगादृगादिभिरव्यवधानात्प्रारम्भो न भवति तस्मादृगादिभ्यो नापगच्छति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यक-
भाष्ये प्रथमारण्यके तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥ ( १० )

---

अथ तृतीयः खण्डः । ( एकादशः )

---

निष्केवल्यशस्त्रस्याऽऽदौ हिंकारं व्याहृतीश्च विधाय "तदिदास" [ऋ० सं० म० १० सू० १२० ऋ० १] इत्यादिसूक्तस्याऽऽदौ यस्तच्छब्दस्तमेनं(तं) प्रशंसति—

**तदिति प्रतिपद्यते तत्तदिति वा अन्नमन्नमेव तदभिप्रतिपद्यते**, इति ।

सदित्यनेन शब्देन शस्त्रं प्रतिपद्यते। लोके हि देशान्तरे कालान्तरे च यदन्यदन्नं समीचीनं भुक्तं तत्सर्वमन्नं पुनः पुनस्तत्तदित्येवमनुस्मर्यते। अतोऽत्रापि तच्छब्दोपक्रमेणान्नमेवाभिलक्ष्य प्रारब्धवान्भवति।

प्रकारान्तरेण तच्छब्दं प्रशंसति—

**एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरां ततेति तातेति *तथैवैतत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरां ततेति तातेति तथैव तत्ततवत्या वाचा प्रतिपद्यते,** इति।

पुरा प्रजापतिर्जगत्सृष्ट्वैतामेव तकारादिकां **प्रथमां वाचमुक्तवान्।** कीदृशीं वाचम्। **एकाक्षरद्व्यक्षराम्।** एकेन ह्रस्वेनोपेतैकाक्षरा। द्वाभ्यां ह्रस्वदीर्घाभ्यामुपेता द्व्यक्षरा। सैवोभयविधोदाहृत्य प्रदर्श्यते। **ततेत्ये**काक्षरा। **तातेति** द्व्यक्षरा। स प्रजापतिर्जगदीश्वरः प्रथमतः सृष्टं हिरण्यगर्भं पुत्रमभिलक्ष्योपात्तयोस्तस्मिन्यथोक्तं पितृवाचकं शब्दद्वयं प्रयुक्तवान्। अत एवेदानींतना अपि स्तनंधयं पुत्रं पितृवाचकशब्देनोपलालयन्ति। यद्वा प्रजापतिर्हिरण्यगर्भः प्रथमं भाषामभ्यस्यत्त(स्यंस्त)तेति वा तातेति वा वाचं व्याहरति। एवं सति सूक्तादौ तच्छब्दं प्रयुञ्जानो होता ततशब्दोपेतया प्रजापतिप्रयुक्तया तयैव [प्रारब्धवान्भवति]। ईषद्वैलक्षण्येऽपि तच्छब्दस्य ततशब्दोपक्रमसाम्यात्। (+यथोक्तस्य तच्छब्दस्योपक्रमसाम्यात्।)

यथोक्तस्य तच्छब्दस्य महिमानं प्रकाशयितुं कांचिदृचमुदाहरति—

**तदुक्तमृषिणा,** इति।

यत्पूर्वेण ब्राह्मणवाक्येन तच्छब्दमाहात्म्यमुदितं **तदे**वर्**षिणा**ऽतीन्द्रियार्थदर्शिना मन्त्रेणोक्तम्। स च मन्त्रविशेषोऽत्रैव दाशतय्यामेवमाम्नातः—

"बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः।
यदेषां श्रेष्ठं यदरिप्रमासीत्प्रेणा तदेषां निहितं गुहाऽऽविः" (ऋ० सं० म० १० सू० ७१ ऋ० १) इति।

तस्य मन्त्रविशेषस्यायमर्थः—हे बृहस्पते जातस्य पुत्रस्य नामधेयं दधानाः पित्रादयो विचार्येतरस्या वाचोऽग्रं श्रेष्ठं यत्पदं प्रथमं प्रैरत प्रयुक्तवन्तः। हे कुमार त्वं विष्णुशर्मा रुद्रशर्माऽसीत्येवमादि दक्षिणकर्णे पठन्ति। यन्नामैषां तदीयबन्धुभिर्व्यवह्रियमाणानां मध्ये श्रेष्ठं "द्व्यक्षरं चतुरक्षरं वा" इत्यादिशास्त्रीयलक्षणोपेतमासीद्यन्नामारिप्रं पापरहितं लोकशास्त्रविरोधरहितमासीत्। एषां संभावितानां मध्ये यन्नामधेयं यद्यथा प्रोक्तं नाम प्रेणा प्रेम्णा बृहस्पतिसंबन्धिना स्नेहेन च[नि]हितं संपादितम्,

---

* अत्र घ. पुस्तकातिरिक्तेषु भाष्यपुस्तकेषु यथैवेति पाठो वर्तते। + एतच्चिह्नान्तर्गतमधिकं सर्वेषु पुस्तकेषु।

तच्च नाम कीदृशम्। गुहा गूढमुपनयनात्पूर्वं मातापितृभ्यां गोपितम्। तथा चाऽऽश्वलायनः—"तन्मातापितरौ विद्यातामोपनयनात्" इति। यथा मनुष्येषु यन्नाम गूढं तथा देवेष्वाविः प्रकटम्। देवा हि सर्वज्ञत्वाद्गूढमपि जानन्ति।

एतस्य मन्त्रस्य प्रथमपादमनूद्य व्याचष्टे—

**बृहस्पते प्रथमं वाचो अग्रमित्येतद्ध्येव प्रथमं वाचो अग्रम्, इति।**

प्राथमिकनामधेयस्य विचार्य निर्मितत्वादितरवाचामपेक्षया श्रेष्ठार्थत(ता)द्योतनार्थो हिशब्दः।

द्वितीयपादमनूद्य व्याचष्टे—

**यत्प्रैरत नामधेयं दधाना इति वाचा हि नामधेयानि धीयन्ते, इति।**

यस्मान्नामधेयानां वाङ्निष्पाद्यत्वं तस्मादुच्चारणवाचिनः प्रैरतेति शब्दस्य प्रयोगो युक्त इत्यर्थः।

तृतीयपादमनूद्य व्याचष्टे—

**यदेषां श्रेष्ठं यदरिप्रमासीदित्येतद्ध्येत्र श्रेष्ठमेतदरिप्रम्, इति।**

विचार्य संपादितस्य नाम्नो लक्षणोपेतत्वं विरोधराहित्यं च प्रसिद्धम्।

चतुर्थपादमनूद्य व्याचष्टे—

**प्रेणा तदेषां निहितं गुहाऽऽविरितीदमु ह गुहाऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति, इति॥**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयाध्याये तृतीयः खण्डः॥ ३॥ (११)**

आत्मानं लोकप्रसिद्धं देहेन्द्रियादिसंघातमधिकृत्य वर्तत इत्यध्यात्मं तस्मिन्देहादिसंघात आस्थिता इमा अग्न्यादिदेवताः, "अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशत्" [ ऐ० आ० २ अ० ४ ख० २ ] इत्यादिश्रुतेः। तासां देवतानामस्मच्छरीरे गूढं यत्स्वरूपमिदमेवात्र गुहेत्युच्यते। शरीरमध्ये गुहा देवा एवैतन्नाम जानन्ति न मनुष्या इति गुहाशब्दस्य तात्पर्यम्। दैवतानि स्वर्गलोकनिवा-

---

बृहस्पते प्रथमं वाचो अग्रम्०—ऋ० सं० म० १० सू० ७१ ऋ० १। यत्प्रैरत नामधेयं गुहाऽऽ०—ऋ० सं० म० १० सू० ७१ ऋ० १। यदेषां श्रेष्ठं यदरिप्रमासीत्०—ऋ० सं० म० १० सू० ७१ ऋ० १। प्रेणा तदेषां निहितं गुहाऽऽ०—ऋ० सं० म० १० सू० ७१ ऋ० १।

---

१ ख. ग. घ. °धेयो°।

सीन्यधिकृत्य वर्तत इत्यधिदैवतम्[१]। +स्वर्गनिवासिषु देवेषु प्रसिद्धं यन्नामाद[२]उ एतदेव प्रकटमित्युच्यते। इत्येतदभिप्रायद्वयं तत्तेन चतुर्थपादेनोक्तं भवति। अस्मिन्मन्त्रे प्राथमिकनाम्नः प्राशस्त्यं प्रतीयते। प्राथमिकं च तद्यत्तदिदासेति, सूक्तादावपि तकारः प्रयुक्तस्तस्मात्सूक्तं प्रशस्तमित्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके तृतीयाध्याये तृतीयः खण्डः॥ ३ ॥ ( ११ )

---

अथ चतुर्थः खण्डः। ( द्वादशः )

---

इत्थं महता प्रबन्धेन सूक्तादिस्तच्छब्दः प्रशस्तः। अथ सूक्तादौ यस्तृचो राजनसाम्नः "स्तोत्रियो राजनस्तोत्रियेण प्रतिपद्यते" [ ऐ० आ० ९ अ० १ ख० ९ इति पञ्चमे वक्ष्यमाणत्वात्तमिमं तृचं क्रमेण व्याचिख्यासुरादौ प्रथमाया ऋचः प्रथमपादं "तदिदास" इत्यादिनाऽनुवदति। सेयमृग्दाशतय्यामेवमाम्नाता—

"तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष नृम्णः।
सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदन्त्यूमाः" इति।

[ ऋ० सं० म० १ सू० १२० ऋ० १ ]

भुवनेषु पृथिव्यादिषु मध्ये तदित्सर्ववेदप्रसिद्धं जगत्कारणं ब्रह्म ज्येष्ठमासातिशयेन वृद्धं बभूव कारणत्वेन जगतः पूर्वं विद्यमानत्वात्। यतो यस्मात्कारणाद्ब्रह्मणस्त्वेष नृम्णः प्रदीप्तानल उग्रः स्वभावतोऽग्निर्जज्ञे समुत्पन्नः। सोऽग्निर्जज्ञान उत्पन्न एव सन्सद्यस्तदानीमेव शत्रून्निरिणाति निराकरोति। अवन्तीत्यूमा रक्षका विश्वे सर्वे देवादयः प्राणिनो यमग्निं हृष्यन्तमनु स्वयमधिहृष्यन्ति, नोऽग्निर्जात इति पूर्वत्रानु[३]चयः।

अस्या ऋचः प्रथमपादमनूद्य व्याचष्टे—

तदिदास भुवनेषु ज्येष्ठमिति प्रतिपद्यत
एतद्वाव भुवनेषु ज्येष्ठम् , इति ।

तदित्यादिना शस्त्रं प्रारभेत। तच्छब्दोक्तस्य परब्रह्मण आदित्यमण्डलोपाधिकत्वेन दृश्यमानत्वादेतद्वावेत्युक्तम्।

---

तदिदास भुव०—ऋ० सं० म० १० सू० १०२ ऋ० १।

---

+ अत्र ख. ग. पुस्तकयोर्बहिः शोधितः पाठोऽस्मच्छरीरेष्विति वर्तते।

---

१ क. °म्। अस्मच्छरीरेषु। २ क. °द आविरित°। ३ घ. °नुचयः।

द्वितीयपादार्थस्य हिशब्देन प्रसिद्धतां दर्शयति—

यतो जज्ञ उग्रस्त्वेष नृम्ण इत्यतो
ह्येष जात उग्रस्त्वेष नृम्णः, इति ।

तृतीयपादे शत्रून्निरिणातीति पदद्वयस्य पापविनाशपरत्वं दर्शयति—

सद्यो जज्ञानो निरिणाति शत्रूनिति सद्यो
ह्येष जातः पाप्मानमपाहत, इति ।

चतुर्थपादे विश्व ऊमा इत्यनेन पदद्वयेन सर्वप्राणिविवक्षां दर्शयति—

अनु यं विश्वे मदन्त्यूमा इति भूतानि वै विश्व
ऊमास्त एनमनु मदन्त्युदगादुदगादिति, इति ।

ब्रह्मरूपोपाधिभूत आदित्यो दिव्युदितवानग्निश्च भूमावुदितवान् । अतः सर्वव्यवहारसिद्धिरित्येवं प्राणिनां हर्षः ।

द्वितीयामृचं संहितायामेवमामनन्ति—

"वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु" इति ।

[ऋ० सं० म० १० सू० १२० ऋ० २]

अयमादित्यमण्डलस्थः परमेश्वरो वह्न्युपाधिर्वेद्रो(देवो) वा शवसा[1] बलेन वावृधानोऽतिशयेन वर्धमानो भूर्योजाः प्रभूततेजोयुक्तो भवति । शत्रुः शत्रुशातयिता सन्दासायोपक्षयणीयाय वैरिणेऽतिभीतिं[2] बाधां ते(च) संपादयन्ति(ति) । विशेषेणानिति चेष्टत व्यनत्प्राणोपेतं जङ्गममव्यनत्प्राणरहितं स्थावरं तदुभयमप्यग्निः[सस्नि] सूयते[3](शोधयति) । इति तवोदये सैंति[4] प्रभृताः संध्यावन्दनार्थं प्रकर्षेणोद्युक्तानि प्राणिजातानि मदेषु निमित्तभूतेषु संनवन्त सम्यगेव स्तुवन्तीत्येतस्या ऋचोऽर्थः ।

तत्र प्रथमपादे प्रतिपाद्ये मण्डले लक्ष्यमाण[5] आदित्य इत्येतद्दर्शयति—

वावृधानः शवसा भूर्योजा इत्येष वै
वावृधानः शवसा भूर्योजा इति, इति ।

---

यतो जज्ञ उग्रः०—ऋ० सं० म० १० सू० १२० ऋ० १ । सद्यो जज्ञानो निरिणाति०—ऋ० सं० म० १० सू० १२० ऋ० १ । अनु यं विश्वे०—ऋ० सं० म० १० सू० १२० ऋ० १ । वावृधानः शवसा०—ऋ० सं० म० १० सू० १२० ऋ० २ ।

---

१ क. ग. घ. सहसा । २ ख. ग. घ. 'या वैरिणीतीदं भी' । ३ ख. ग. घ. सूर्योदये ते । ४ ख. घ. सन्ति । ५ ख. लब्धमभक्ष्यसान आ° । ग. घ. लब्धमभशामान आ° ।

द्वितीयपादे सर्वं जगदेतस्मादादित्यमण्डलवर्तिनोऽन्तर्यामिणो भीतं बभूवेत्यमु-मर्थं दर्शयति—

**शत्रुर्दासाय भियसं दधाति, इति ।**

सर्वं जगदेतस्माद्बिभेति ।

तृतीयपादे स्थावरजङ्गमविवक्षां दर्शयति—

**अव्यनच्च व्यनच्च सस्नीति यच्च**
**प्राणि यच्चाप्राणकमित्येव तदाह, इति ।**

चतुर्थपादे सर्वस्य जगतः सूर्याधीनत्वलक्षणमभिप्रायं दर्शयति—

**सं ते नवन्त प्रभृता मदेष्विति तव सर्वं वश इत्येव तदाह, इति ।**

तृतीयामृचं संहितायामेवमामनन्ति—

"त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सुमधु मधुनाऽभियोधीः"इति ।
[ ऋ० सं० म० १० सू० १२० ऋ० ३ ]

अस्या [अ]यमर्थः । हे सूर्य विश्वे सर्वे प्राणिनः क्रतुमपि क्रियमाणं कर्मापि त्वे त्वयि वृञ्जन्ति समर्पयन्ति । न केवलं कर्म किं तु सर्वे प्राणिनस्तेषां च सर्वाणि मनांसि त्वय्येव समर्पयन्त इत्येवमपिशब्दस्यार्थः । किंच यद्वौ पुरुषौ द्विः पूर्वं द्विसंख्योपेतौ भूत्वा पश्चादेते पुत्रेण सहितास्त्रिस्त्रिः(स्त्रि)संख्याकाः परस्पररक्षका भवन्ति । हे सूर्य स्वादोः स्वादीयः प्रीतिविषयाद्गृहक्षेत्रधनादेरप्यत्यन्तं प्रियमप्यपत्यं स्वादुनोऽपि रसात्प्रियहेतुना मातृ(ता)पितृरूपेण मिथुनेन संयोजय । स्वादीय इत्यनेन यदपत्यमुक्तं तदेवादःशब्देन परमुच्यते । तच्च पुत्ररूपमपत्यं स्नुषया सह मिथुनं भूत्वा सुष्ठु मधु प्रियं भवति । तादृशं मधु मधुना पौत्ररूपेण प्रियेण संयोज्याभियोधीः सर्वतः संपादय । धातूनामनेकार्थत्वाद्युधिधातुरत्र संपादने वर्तते ।

एतस्या ऋचः प्रथमं पादं व्याचष्टे—

**त्वे क्रतुमपि वृञ्जन्ति विश्व इति त्वयीमानि सर्वाणि भूतानि**
**सर्वाणि मनांसि सर्वे क्रतवोऽपि वृञ्जन्तीत्येव तदाह, इति ।**

---

शत्रुर्दासाय भियसं०—ऋ० सं० म० १० सू० १२० ऋ० २ । अव्यनच्च व्यनच्च०—ऋ० सं० म० १० सू० १२० ऋ० २ । सं ते नवन्त प्रभृता०—ऋ० सं० म० १० सू० १२० ऋ० २ । त्वे क्रतुमपि वृञ्जन्ति०—ऋ० सं० म० १० सू० १२० ऋ० ३ ।

---

१ ख. °त्स्वेवं श° । २ ग. घ. °व श° । ३ ख. ग. घ. मानः पि° ।

अत्र क्रतुशब्दः प्राणिना(नां) मनसा(सां) चोपलक्षकेण(णेन) व्याख्यातः।

द्वितीयपादं व्याचष्टे—

द्विर्यद्देते त्रिर्भवन्त्यूमा इति द्वौ वै सन्तौ
मिथुनौ प्रजायेते प्रजात्यै, इति।

वेदनं प्रशंसति—

प्रजायते प्रजया पशुभिर्य एवं वेद, इति।

तृतीयपादं व्याचष्टे—

स्वादोः स्वादीयः स्वादुना सृजा समिति मिथुनं वै
स्वादु प्रजा स्वादु मिथुनेनैव तत्प्रजां संसृजति, इति।

चतुर्थपादं व्याचष्टे—

अदः सुमधु मधुनाऽभियोधीरिति मिथुनं वै मधु
प्रजा मधु मिथुनेनैव तत्प्रजामभियुध्यति, इति।

इत्थं सूत्रोक्तं[1] स्तोत्रीयं तृचं व्याख्याय तदीयेऽर्थे संवादाय शाखान्तरीयमृक्पादमुदाहृत्य व्याचष्टे—

तदुक्तमृषिणा स्वां यत्तनूं तन्वामैरयतेत्यस्यां
शारीर्यामिमां छन्दोमयीमित्येव तदाह, इति।

"स्वादोः स्वादीयः" [ऋ० सं० म० १० सू० १२० ऋ० ३] इत्यादिना पादद्वयेन मातापितृजन्यं शरीरं प्रकृतशास्त्रोपयुक्तं प्रतिपादितं यदस्ति तदेवमृषिणा स्वां यदित्यादिना मन्त्रभागेन(ण) प्रकटीकृतम्। यद्वा "तदिदास" [ऋ० सं० म० १० सू० १२० ऋ० १] इत्यादिकस्य कृत्स्नस्य शास्त्रस्य तात्पर्यं यदस्ति तत्सर्वमृषिणा[2] मन्त्रपादेन संगृह्योक्तम्। स तु पाद एवं योजनीयः। यद्यस्मात्कारणात्पूर्वोक्ततृचप्रतिपाद्य आदित्योपाधिक ईश्वरः स *स्वां तनूं यजमानरूपं शरीरं तदीयमातापितृरूपशरीर ऐरयत प्रेरितवांस्तस्मात्स्वादोः स्वादीय इत्यादिकमुपपन्नम्। अथवा तन्वां यजमानशरीरे स्वां तनूं स्वकीयां तदतिशयेत्यादिकानन्दरूपां तनूं

द्विर्यद्देते त्रिर्भव०—ऋ० सं० म० १० सू० १२० ऋ० ३। स्वादोः स्वादीयः स्वादुना०—ऋ० सं० म० १० सू० १२० ऋ० ३। अदः सुमधु मधुना०—ऋ० सं० म० १० सू० १२० ऋ० ३।

* अत्र स्वां यत्तनूमित्येव पाठः सकलादर्शपुस्तकेषु।

१ ग. घ. सूत्रान्तं। २ ख. ग. घ. °र्वोक्तं तृचं प्र°।

यजमानसंस्कारकत्वेन यस्मात्संपादितवांस्तस्मादिदं निष्केवल्यशस्त्रं प्रशस्तम्। तदेतद्द्वितीयं व्याख्यानमस्यामित्यादिना ब्राह्मणेन स्पष्टी क्रियते। अस्यां दृश्यमानायां शारीर्यां यजमानशरीरसंबन्धिन्यामावृतामिमां तादिदासेत्यादिकां[1][2] छन्दोमयीं वेदरूपां तनूं संस्कारकत्वेन संपादितवानित्येतन्मन्त्रवाक्यं ब्रूते। तेन( तस्य? ) शस्त्रस्य शिरःपक्षादिकल्पनाया वक्ष्यमाणत्वात् [ ऐ० आ० १ अ० ४ ख० २ ]छन्दोमयशरीरत्वं युक्तम्।

पुनरपि शस्त्रस्तुत्यर्थमन्यमन्त्रपादं शब्दतो व्याचष्टे—

तनूरेव तन्वो अस्तु भेषजमित्यस्यै
शारीर्या इयं छन्दोमयीत्येव तदाह, इति।

शारीर्याशब्दः पूर्वोदाहरणेन समुच्चयार्थः। न केवलमृषिणा पूर्वेणैव तदुक्तं किंतु तनूरेवेत्यादिनाऽप्यृषिणा तदुक्तम्। मन्त्रपादश्चैवं योजनीयः। तनूः[3] "तदिदास" (ऋ० सं० म० १० सू० १२० ऋ० १) इत्यादिका छन्दोमयी तन्वो[4] यजमानशरीरस्य भेषजं पापव्याधिनिवर्तकमौषधमस्तु। मन्त्रे तनू[स्तन्व]रि(इ)त्यनयोः षष्ठ्यन्तप्रथमान्तयोरर्थौ ब्राह्मणेन स्पष्टीकृतः।

इत्थं मन्त्रद्वयोदाहरणेन शस्त्रं प्रशस्य बहुविधच्छन्दोन्तर्भावेनापि शस्त्रं प्रशंसति—

तस्यै यान्यष्टावक्षराणि सा गायत्री यान्येकादश
सा त्रिष्टुब्यानि द्वादश सा जगत्यथ यानि दश
सा विराड्दशिन्येषु त्रिषु च्छन्दःसु[5] प्रतिष्ठिता, इति।

"तदिदास भुवनेषु" ( ऋ० सं० म० १० सू० १२० ऋ० १ ) इत्यादिका [या ऋक्,] तस्या ऋचः प्रथमपादो दशाक्षरः। तस्यै तस्या ऋचः संबन्धीनि यान्यष्टौ प्रथमपादाक्षराणि सन्ति सेयमष्टाक्षररूपा गायत्री संपद्यते। यानि तृतीयपाद एकादशाक्षराण्याम्नातानि सेयमेकादशाक्षरा त्रिष्टुप्संपद्यते। प्रथमपादे यदवशिष्टमक्षरद्वयं तद्द्वितीये (* चतुर्थे द्वा) दशाक्षरयुक्ते पादे योजनीयम्। तथा सति यानि द्वादशाक्षराणि सा जगती संपद्यते। अथ प्रथमे द्वितीये तृतीये चतुर्थे वा पादे यान्याम्नातानि दशाक्षराणि सा विराट्छन्दोरूपा। एवमेषा दशिनी दशाक्षरोपेता स्वतः सिद्धा विराट्। एवमुक्तरीत्या संपादितेषु गायत्रीत्रिष्टुब्जगतीरूपेषु त्रिषु छन्दःसु विराट्प्रतिष्ठिता पर्यवस्थिता।

---

* अत्र किंचित्त्रुटितमिति भाति। अधिकं वैतत् "चतुर्थे द्वा" इति।

---

१ ग. °तेति श°। २ ख. घ. ते श°। ३ ख. तन्वस्तदि°। ग. घ. तन्यस्तदि°। ४ ख. ग. घ. °न्वो न य°। ५ ख. ग. घ. °सु त्रिष्टुप्प्राति°।

अथैतस्यां प्रथमायामृच्यक्षरत्रयप्रक्षेपं विधत्ते—

**पुरुष इति त्र्यक्षरं स उ विराजि, इति ।**

यदेतत्त्रयरूपं पदं तदेतस्यामृचि प्रक्षेपणीयमित्यध्याहारः । स यः सोऽप्यक्षरः(?) ।

[*पूर्वोक्तच्छन्दश्चतुष्टयस्य सकलच्छन्दोरूपत्वकथनपुरःसरं तद्वेदनफलं दर्शयति—]

**एतानि वाव सर्वाणि च्छन्दांसि यान्येतानि**
**विराट् चतुर्थान्येवमु हैवैवं विदुष एतदहः**
**सर्वैश्छन्दोभिः प्रतिपन्नं भवति, इति ॥**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके द्वितीयाध्याये**
**चतुर्थः खण्डः ॥ ४ ॥ ( १२ )**

विराट्छन्दश्चतुःसंख्यापूरकं येषां गायत्रीत्रिष्टुब्जगतीनां तानि **विराट्चतुर्थानी-**दृशानि **यान्येतानि** चत्वारि सन्ति तान्येतानीति निरंन्यववा( न्येव सकलान्यव )शिष्टश्छ(च्छ)न्दोरूपाणि । गायत्र्यादीनां स्तवननिष्पादकत्वेन मुखत्वात्सर्वच्छन्दोरूपत्वोपचारः । **एवमु** हैव यथोक्तेन प्रकारेण विराजि गायत्र्यादीनां त्रयाणामन्तर्भावो विराट्सहितानां चतुर्णां सर्वच्छन्दोरूपत्वोपचार इत्येवं **विदुषो** यजमानस्यैतन्महाव्रतमहः **सर्वैश्छन्दोभिः** संपादितं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये
प्रथमारण्यके तृतीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( १२ )

---

अथ पञ्चमः खण्डः । ( त्रयोदशः )

---

अथ शस्त्रस्य विहरणं विधत्ते—

**ता नदेन विहरति पुरुषो वै नदस्तस्मा-**
**त्पुरुषो वदन्त्सर्वः संनदतीव, इति ।**

**ताः** शस्त्रगताः " तदिदास " [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिका ऋचो **नदेन** नदलिङ्गकेन मन्त्रेण **विहरति** व्यतिषजति मिश्रयेदित्यर्थः । नदशब्दः पुरुषस्वरूप एव यस्मात्तस्माल्लोके **सर्वः पुरुषो** भाषमाणः सम्यग्ध्वनिं करोतीव दृश्यते । गम्भीरो हि पुरुषस्य ध्वनिः । नदलिङ्गकश्च मन्त्रः संहितायामेवमाम्नातः—

" नदं व ओदतीनां नदं योयुवतीनाम् ।
पतिं वो अघ्न्यानां धेनूनामिषुध्यसि " इति ।

[ ऋ० सं० म० ८ सू० ६९ ऋ० २ ]

---

* एतच्चिह्नान्तर्गतो ग्रन्थः प्रकल्प्यात्र निवेशित इति बोध्यम् ।

---

१ ग. घ. 'मायां दिश्यक्ष' । २ ख. 'यामक्ष' । ३ क. 'रः । ए' । ४ क. 'ति च्छन्दो' ।
५ क. विवरणां । ख. विहरणां ।

एतन्मिश्रप्रकरणं पञ्चमे स्पष्टमभिधास्यते—“ नदं व ओदतीनामित्येतयैतानि व्यतिषजति पादैः पादान्बृहतीकारम् ” ( ऐ० आ० ५ अ० १ ख० ६ ) इति। तत्तथा तत्रैवोदाहृत्यापीति प्रदर्शितम्—“ तदिदास भुवनेषु ज्येष्ठं पु नदं व ओदतीनां यतो जज्ञ उग्रस्त्वेष नृम्णोरु नदं योयुवतीनां सद्यो जज्ञानो निरिणाति शत्रून्पतिं वो अघ्न्यानामनु यं विश्वे मदन्त्यूमाः षो धेनूनामिषुध्यसोम् ” [ ऐ० आ० ५ अ० १ ख० ६ इति। नदलिङ्गकस्य मन्त्रस्यायमर्थः—ओदतीनां तृतीयसवन ऋजीषमुन्दतीनामहन्तव्यानां वो युष्माकं पतिं पालकं यजमानं रक्षत। हे इन्द्र त्वं धेनूनां धेनुवत्प्रीणयितॄणामपामिषुयसि, ईश्वरोऽसि। “ इषुध ऐश्वर्ये ” [ क० ग० ५० ] इति धातुः।

अस्या ऋचः प्रथमपादं व्याचष्टे—

नदं व ओदतीनामिती३ँ आपो वा ओदत्यो
या दिव्यास्ता हीदं सर्वमुन्दन्त्यापो वा ओदत्यो
या मुख्यास्ता हीदं सर्वमन्नाद्यमुन्दन्ति, इति।

अस्मिन्पाद ओदतीशब्देनाऽऽप एव विवक्षिताः। यस्माद्या आपो दिव्यभवन्वृष्टिद्वारेणाऽऽगतास्ता आपः सर्वमिदं भूत[जात]मुन्दन्ति क्लेदयन्ति, तथा मुखे भवा आस्योदकरूपा या आपस्ताः सर्वमन्नाद्यं शुष्कमपि पृथगिव शष्कुल्यादिकं सर्वं खाद्यं द्रवी कुर्वन्ति, तस्मादोदत्य इत्युच्यन्ते। इति शब्दस्योपरि योऽयं सानुनासिकः प्लुतः सोऽयं पादप्रतिग्रहणेऽन्यतमादरार्थः।

[*द्वितीयपादं व्याचष्टे—

नदं योयुवतीनामिती३ँ आपो वाव योयुवत्यो या
अन्तरिक्ष्यास्ता हि पोप्लूयन्त इवाऽऽपो वाव योयुवत्यो याः स्वेदते ता हि सरीसृप्यन्त इव, इति।]

तृतीयपादं व्याचष्टे—

पतिं वो अघ्न्यानामिती३ँ आपो वा अघ्न्या या अग्नेर्धूमा-

---

नदं व ओदतीनामि०—ऋ० सं० म० ८ सू० ६९ऋ० २। नदं योयुवतीना०—ऋ० सं० म० ८ सू० ६९ ऋ० २। पतिं वो अघ्न्यानाम्—ऋ० सं० म० ८ सू० ६९ ऋ० २।

---

* एतच्चिह्नान्तर्गतो मूलातिरिक्तो ग्रन्थस्त्रुटितत्वात्प्रकल्प्य निवेशितः। मूलं तु मूलपुस्तकेभ्य उद्धृत्य निवेशितम्।

---

१ क. ख. घ. ंच्यते। इ ँ।

ज्जायन्त आपो वा अघ्न्या याः शिश्नात्प्रसृज्यन्ते, इति ।

अग्नेरुत्पन्नो योऽयं धूमः स एव मेघाकारो भूत्वा वृष्टिरूपेण वा अन्नं जनयति। यदा(तो) धूमोऽग्निरित्येतदुभययुक्तस्यान्नाद्यनिष्पादकत्वमत एव कैश्चिदुक्तम्—"धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः" ( पूर्वमे० श्लो० ५ ) इति । तस्मान्मेघादुत्पन्ना आप ओषधिवनस्पतिरूपेण परिणताः सत्यो न केनापि हननीयाः, किंतु सर्वेणापि वर्धनीया एवम्(एव) । तथा शिश्नादुत्पन्ना रेतोरूपा आपः पुत्रादिरूपेण परिणताः सत्यो न केनापि हननीयाः ।

चतुर्थपादं व्याचष्टे—

धेनूनामिषुध्यसीतीँ३ आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्तीषुध्यसीति यदाह पतीयसीत्येव तदाह, इति ।

यथा धेनवः क्षीरप्रदानेन प्रीणयन्त्येवमाप ओषधिवनस्पत्यादिकं प्रीणयन्त्यतो धेनुसाम्याद्धेनुत्वम् । इषुध्यसीति शब्दो यदभिधेयं धत्ते तत्पतीयसीत्यस्यैव शब्दस्याभिधेयं ब्रूते । पतिवत्स्वामिवदाचरती(सी)त्यर्थः ।

"नदं वः" [ ऋ० सं० म० ८ सू० ६९ ऋ० २ ] इत्यादिकामृचं व्याचष्टुं (ख्याय) तदुभयोर्विहरणं [*लौकिकोदाहरणोक्तिपूर्वकं प्रशंसति—

त्रिष्टुभं चानुष्टुभं च विहरति वृषा वै त्रिष्टुब्योषाऽनुष्टुप्तन्मिथुनं तस्मादपि पुरुषो जायां वित्त्वा कृत्स्नतरमिवाऽऽत्मानं मन्यते, इति ।

विहरणं] नाम स्त्रीपुरुषवत्परस्परव्यतिषङ्गः । तत्र त्रिष्टुभः प्रवृद्धत्वाद्वृषत्वं सेचनसमर्थपुरुषत्वमनुष्टुभो न्यूनत्वाद्योषित्त्वम् । तदुभयं मिलित्वा मिथुनं संपद्यते । यस्मान्मेलनेन मिलितत्वं प्रशस्तं तस्माल्लोकेऽपि पुरुषो ब्रह्मचारी विवाहेन जायां लब्ध्वाऽतिशयेन संपूर्णो जातोऽस्मीत्येवं परितुष्यति ।

प्रथमायामृच्यावृत्तिविधिपूर्विकां संख्यां प्रशंसति—

तास्त्रिः प्रथमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुतेऽथो पञ्चविंशं

---

धेनूनामिषुध्यसि०—ऋ० सं० म० ८ सू० ६९ ऋ० २ ।

---

* एतच्चिह्नान्तर्गतो मूलग्रन्थो मूलपुस्तकेभ्य उद्धृत्यान्यश्च प्रकल्प्यात्र निवेशितः ।

---

१ क. विधत्ते ।

वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्वे एव पञ्चविंशतिर्भवन्ति, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( १३ )

"तदिदास" [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिकं सूक्तं नवर्चं "तां सुते" [ ऋ० सं० म० १० सू० ९४ ऋ० १ ] इति सूक्तं षड्ऋचं " भूय इद्वावृधे" [ ऋ० सं० म० ६ सू० ३१ ऋ० १ ] इति पञ्चर्चं " नृणामु त्वा " [ ऋ० सं० म० ३ सू० ५१ ऋ० ४ ] इत्ययमेकस्तृच इत्येताः सर्वास्त्रयोविंशतिर्भवन्ति । तत्र प्रथमायास्त्रिरावृत्तौ सत्यां पञ्चविंशतिः संपद्यते । आत्मा यजमानः । अथाधिदैवं प्रजापतिश्चतुर्मुखोऽपि पञ्चविंशावयवोपेतः । दश हस्त्या इत्यादि पूर्ववद्व्याख्येयम् [ ऐ० आ० १—१—२ ] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( १३ )

---

अथ षष्ठः खण्डः । ( चतुर्दशः )

---

" तदिति प्रतिपद्यते " [ऐ० आ० १ अ० ३ ख० ३] इत्ययं खण्डः पूर्वं तद्दस्य व्याख्यानार्थं पठितोऽपि पुनः कृत्स्नशस्त्रप्रशंसार्थं पठ्यते—

तदिति प्रतिपद्यते तत्तदिति वा अन्नमन्नमेव तदभिप्रतिपद्यत एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरां ततेति ताततेति तथैवैतत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरां ततेति ताततेति तथैव तत्तत्वत्या वाचा प्रतिपद्यते तदुक्तमृषिणा बृहस्पते प्रथमं वाचो अग्रमित्येतद्ध्येव प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधाना इति वाचा हि नामधेयानि धीयन्ते यदेषां श्रेष्ठं यदरिप्रमासीदित्येतद्ध्येव श्रेष्ठमेतदरिप्रं प्रेणा तदेषां निहितं गुहाऽऽविरितीदमु ह गुहाऽध्यात्ममिमा देवता अद

---

बृहस्पते प्रथमं वाचो अग्र०—ऋ० सं० म० १० सू० ७१ ऋ० १ । यत्प्रैरत नाम०—ऋ० सं० म० १० सू० ७१ ऋ० १ । यदेषां श्रेष्ठं०—ऋ० सं० म० १० सू० ७१ ऋ० १ । प्रेणा तदेषां०—ऋ० सं० म० १० सू० ७१ ऋ० १ ।

उ आविरधिदैवतमित्येतत्तदुक्तं भवति, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥ ( १४ )

अक्षरार्थः पूर्वमेव [ ऐ० आ० १ अ० ३ ख० ३ ] व्याख्यातः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥ ( १४ )

अथ सप्तमः खण्डः । ( पञ्चदशः )

सूक्तमपि प्रशस्य सामान्येन प्रशंसामभिधाय पुनर्विशेषाकारेण प्रशंसाऽभिधीयते । तत्र प्रथमं सूक्तं प्रशंसति—

**तदिदास भुवनेषु ज्येष्ठमिति प्रतिपद्यते यद्वै ज्येष्ठं तन्महन्महद्वद्रूपसमृद्धमेतस्याह्नो रूपम्, इति ।**

प्रथमे शस्त्रं प्रारभते । अतिशयेन बहुवृद्धं ज्येष्ठं तादृशम् ।

[*तां सु त इत्यादि प्रशंसति—

**तां सु ते कीर्तिं मघवन्महित्वेति महद्वद्रूपसमृद्धमेतस्याह्नो रूपम्, इति ।**

भूय इदित्यादि प्रशंसति—]

**भूय इद्वावृधे वीर्यायेति वीर्यवद्रूपसमृद्धमेतस्याह्नो रूपम्, इति ।**

भूय इदित्थमिन्द्रो वीर्याय शौर्यार्थं वावृधे वृद्धिं प्राप्तवान् । वीर्यशब्दस्य श्रुतत्वादह्नो रूपस्य वीर्यवत्त्वम् ।

अथ तृचं प्रशंसति—

**नृणामु त्वा नृतमं गीर्भिरुक्थैरित्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपम्, इति ।**

उत्तिष्ठत्युत्कर्षं प्राप्नोत्येभिरित्युक्थानि शस्त्राणि तद्रूपाभिर्गीर्भिर्हे इन्द्र नृणामु

तदिदास भुवनेषु०—ऋ० सं० म० १० सू० १२० ऋ० १ । तां सु ते की०—ऋ० सं० म० १० सू० ५४ ऋ० १ । भूय इद्वावृ०—ऋ० सं० म० ६ सू० ३१ ऋ० १ । नृणामु त्वा०—ऋ० सं० म० ३ सू० ५१ ऋ० ४ ।

* एतच्चिह्नान्तर्गतो मूलग्रन्थो मूलपुस्तकेभ्य उद्धृत्यान्यश्च प्रकल्प्यात्र निवेशितः ।

सर्वेषामपि पुरुषाणां मध्ये नृतममुत्तमं पुरुषं त्वामृत्विजोऽर्चन्तीति *प्रष्टव्यम् । तदेतन्महाव्रताख्यमहरुक्थमुत्कर्षहेतुत्वात् । उक्थवदित्यादि पूर्ववत् [ ऐ० आ० १ अ० २ ख० २ ] ।

सूक्तं प्रशस्य व्यतिषक्तपादयोरक्षरन्यूनतां प्रशंसति—

न्यूनाक्षरे प्रथमे पदे विहरति न्यूने वै रेतः सिच्यते न्यूने प्राणा न्यूनेऽन्नाद्यं प्रतिष्ठितमेतेषां कामानामव- रुद्ध्या एतान्कामानवरुन्धे य एवं वेद, इति ।

"तदिदास" [ऋ० सं० म० १२ सू० १२० ऋ० १] इत्ययं प्रथमपादो दशाक्षरत्वादेकेनाक्षरेण त्रिष्टुभो न्यूनो "नदं वः" [ ऋ० सं म० ८ सू० ६९ ऋ० २ ] इत्ययं पादः सप्ताक्षरत्वादेकेनाक्षरेण न्यूनाऽनुष्टुप्पादद्वयं व्यतिषक्तं भवति। न्यूने वा इत्यादिकं पूर्वमेव [ ऐ० आ० १ अ० १ ख० २ ] व्याख्यातम् ।

"तदिदास" [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यस्यामृचि द्वितीयपादाक्षरसंख्यां प्रशंसति—

[+द्वे दशाक्षरे भवत उभयोरन्नाद्ययोरुपाप्त्यै यच्च पद्वद्यच्चापादकमित्यष्टादशाष्टादशाक्षराणि भवन्ति यानि दश नव प्राणा आत्मैव दशमः साऽऽत्मनः संस्कृति- रष्टावष्टा उद्यन्तेऽश्नुते यद्यत्कामयते य एवं वेद, इति ।]

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयाध्याये सप्तमः खण्डः ॥ ७ ॥ ( १९ )

*शिरसि सप्तच्छिद्राणि, अधोभागे द्वे, तन्निष्ठत्वेन प्राणानां नवत्वम् । अनेनै- वाभिप्रायेण श्रुत्यन्तरे पठ्यते—"सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चाविति नव" [इति] । दशमाक्षरं तज्जीवात्मस्वरूपम् । यथोक्तनवप्राणापेक्षया दशमत्वात् । अतो या दशाक्षरोक्तिः सेयमात्मनः संस्कृतिः, अतिशयहेतुः । चतुर्विधेषु व्यतिषिक्ता- र्थेषु प्रत्यक्षरोपचये सत्यष्टावष्टावक्षराण्युद्यन्ते, अवशिष्टानि शिष्यन्ते । तान्येवमुक्त- प्रकारेण यो वेद स पुमान्यद्यत्कामयते तत्तत्प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यक- भाष्ये प्रथमारण्यके तृतीयाध्याये सप्तमः खण्डः ॥ ७ ॥ ( १९ )

---

* द्रष्टव्यमिति ग. पुस्तके शोधितः पाठः । + एतच्चिह्नान्तर्गतं मूलं मूलपुस्तकेभ्य उद्धृत्यात्र निवेशितम् । * एतस्मात्प्राक् किंचित्त्रुटितम् ।

---

१ ख. ग. घ. 'रुक्थं चेदुत्क' । २ घ. 'त्वादुक्थस्वरूपमेव । उ' ।

अथाष्टमः खण्डः । ( षोडशः )

"तदिदास" [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिसूक्तगतानामृचां "नदं वः" [ ऋ० सं० म० ८ सू० ६९ ऋ० २ ] इत्यादिकया सह यो व्यतिषङ्गः पूर्वं [ ऐ० आ० १ अ० ३ ख० ५ ] विहितस्तमेतं विधिमनूद्य नदशब्दं व्याचष्टे—

ता नदेन विहरति प्राणो वै नदस्तस्मात्प्राणो नदन्त्सर्वः संनदतीव, इति ।

नदशब्दवान्मन्त्रो नद इत्युच्यते । ताः सूक्तगता ऋचो नदशब्दोपेतमन्त्रेण सह विहरति व्यतिषजति । तस्मिन्मन्त्रे यो नदशब्दः स प्राणमाचष्टे । प्राणस्य कायोपेतत्वात् । यस्मादेवं तस्मादखिलेषु देहेष्ववस्थितः सर्वः प्राणो नदञ्शब्दं कुर्वन्संनदतीव, सुषुप्त्यादौ समाश्वासरूपेण सम्यग्ध्वनिं करोत्येव ।

नदशब्दोपेतस्य मन्त्रस्याक्षराणि पादांश्च प्रशंसति—

नदं व ओदतीनामिती३ँ उष्णिगक्षरैर्भवत्यनुष्टुप्पादैरायुर्वा उष्णिग्वागनुष्टुप्तदस्मिन्नायुश्च वाचं च दधाति, इति ।

नदं व इत्यस्या ऋचश्चत्वारोऽपि पादाः प्रत्येकं सप्ताक्षराः । तृतीये पादेऽग्निया इत्यत्र पकारादिः पृथगक्षरत्वेन गणनीयः । तथा सत्यष्टाविंशत्यक्षरोष्णिक्संपद्यते । पादसंख्यया त्वियमनुष्टुप्[1] । चत्वारो ह्यत्र पादाः पठ्यन्ते । उष्णिहस्तु त्रय एव पादाः । एवमक्षरैः पादैश्च च्छन्दोद्वयसंपत्तिः । अत्रोष्णिह आयुर्हेतुत्वादनुष्टुभो वाग्विषयत्वाच्च द्यात्मकस्य तस्य पाठेनास्मिन्यजमान आयुर्वाचं च संपादयति ।

अस्या नदवत्या ऋचोऽहःसूक्तत्रये तृचे च प्रत्यृचं व्यतिषङ्गे सति वा प्रथमाऽऽवृत्तिः संपद्यते । "तदिदासः" [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यनयो प्रथमया सह व्यतिषिक्ताया नदवत्यास्त्रिरावृत्तौ सत्यां मिलित्वा पञ्चविंशतिसंख्या संपद्यते । तामेतां नदवत्याः संख्यामृगक्षरसंख्यावत्प्रशंसति—

तास्त्रिः प्रथमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंश-

नदं व ओदतीनां०—ऋ० सं० म० ८ सू० ६९ ऋ० २ ।

१ क. °संख्यायास्त्विय° । २ क. °या पाठेन प्र° ।

**स्तमिममात्मानं पञ्चविंशं संस्कुरुतेऽथो पञ्चविंशं वा एत-**
**दहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते**
**तस्माद्वे एव पञ्चविंशतिर्भवन्तीत्यध्यात्मं पञ्चविंशः, इति ।**

पञ्चविंशतिर्भवन्तीत्यन्तं पूर्ववत्—[ ऐ० आ० १ अ० ३ ख० ९ ]व्याख्येयम् । अत्राध्यात्ममधिदैवतं[1] चेत्युभयथा संख्या प्रशस्यते । तत्र हस्तपादादिगणनया योऽयं पञ्चविंशत्यवयवसमूहोऽभिहितः सोऽयमध्यात्मं द्रष्टव्यः । आत्मानं यजमानस्य देहेन्द्रियादिसंघातमधिकृत्य वर्तत इत्यध्यात्मम् ।

यद्यपि पञ्चविंशः प्रजापतिरित्युक्तत्वादधिदैवतप्रशंसाऽपि कृतैव तथाऽपि प्रकारान्तरेण पुनः प्रशंसति—

**अथाधिदैवतं चक्षुः श्रोत्रं मनो वाक्प्राणस्ता एताः**
**पञ्च देवता इमं विष्टाः पुरुषं पञ्चो हैवैता देवता**
**अयं विष्टः पुरुषः सोऽत्राऽऽ लोमभ्य आ**
**नखेभ्यः सर्वः साङ्ग आप्यते तस्मात्सर्वाणि**
**भूतान्या पिपीलिकाभ्य आप्तान्येव जायन्ते, इति ।**

**अथ** मनुष्यशरीरगतपञ्चविंशतिसंख्याप्रशंसानन्तरम् । **अधिदैवतं** देवताशरीरगता पञ्चविंशत्यन्तर्भूता पञ्चसंख्या प्रशस्यते । तद्यथा—**चक्षुरादयः प्राणान्ता एत**च्छब्दाभिधेया या देवताः सन्ति **ता एता देवताः पञ्च**संख्याका **इमं पुरुषं** मनुष्यदेहं **प्रविष्टाः** । तथा चोपरिष्टादाम्नास्यते—"आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" [ ऐ० आ० २ अ० ४ ख० २ ] इत्यादिना । यथा देवताः पुरुषशरीरं प्रविष्टास्तथाऽयं **पुरुषः पञ्चाप्येता देवताः** प्राविशत् । एवमत्रान्योन्यप्रवेशो नाम तादात्म्यापत्तिः । सैव विस्पष्टी[2] क्रियते—स पुरुषो देवताभिः[3] प्रविष्टः स्वयं च देवताः प्रविश्यात्रास्मिञ्शरीरे लोकवर्ष्मतन्नाशपर्यन्तं च **सर्वोऽपि साङ्गः** संपूर्णावयव **आप्यते** प्राप्तो दृश्यते । यस्मादेवं चक्षुराद्यभिमानिदेवतानामादित्यादीनां देहस्य च परस्परतादात्म्यं **तस्मात्पिपीलिकापर्यन्तं सर्वे** प्राणाश्चक्षुरादीन्द्रियैस्तत्तद्गोलकैश्च संपूर्णा एव **जायन्ते** । अनया देवतागतपञ्चसंख्यारूपावयवप्रशं[4]सायास्त(सया त)[5]दवयविरूपा पञ्चविंशतिसंख्या प्रशस्ता वेदितव्या ।

ब्राह्मणोक्तेऽर्थे संपा(वा)दकमन्त्रमुदाहरति—

**तदुक्तमृषिणा, इति ।**

---

१ ग. घ. °दैवं चे° । २ ग. घ. °स्पष्टा क्रि° । ३ ग. घ. °तानामादित्यादिभिः । ४ ख. ग. °संख्यया रू° । घ. संख्ययाऽव° । ५ ख. ग. घ. °सा तद° ।

चक्षुराद्यभिमानिदेवतानां तत्तदिन्द्रियद्वारा देहप्रवेशाद्देहस्य च ताभिस्तैरिन्द्रियैस्तादात्म्यापत्तेश्च पिपीलिकान्ताः सर्वे प्राणिनः संपूर्णा उत्पद्यन्त इति यद्ब्राह्मणेनोक्तं तदेवर्षिणा सहस्रधेत्यादिना मन्त्रेणाप्युक्तम् ।

सोऽयं मन्त्रः संहितायामेवं[1] समाम्नायते—

"सहस्रधा पञ्चदशान्युक्था यावद्द्यावापृथिवी तावदित्तत् ।
सहस्रधा महिमानः सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक्" इति ।
[ ऋ० सं० म० १० सू० ११४ ऋ० ८]

अस्यायमर्थः—सहस्रधा सहस्रसंख्याकेषु ब्रह्मादिपिपीलिकान्तेषु देहेषु पञ्चदशसंख्याकान्युक्थोत्कृष्टानि विद्यन्त इति शेषः । चक्षुः श्रोत्रं मनो वाक्प्राण इत्येतत्पञ्चकं तदाधारत्वेन मातापित्रोः सकाशादुद्गतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि तानि मातृसंबन्धीनि पितृसंबन्धीनि मिलित्वा दश संपद्यन्ते, चक्षुरादिपञ्चकं चेत्येवं पञ्चदशाङ्गान्युत्कृष्टानि । इत्थं प्राणिदेहेषूपपन्नेषु देहेषु (*द्यावापृथिव्योर्यत्परिमाणकमेव(णं विद्यते) तत्प्रमाणे(णं) देहजाते(तं) संपन्नम् ।) सहस्रधा सहस्रसंख्याकेषु देहेषु सहस्रं महिमानः सहस्रसंख्याका महान्तो व्यवहारविशेषा दृश्यन्ते । प्रतिविषयं प्रतिक्षणं दर्शनश्रवणादिव्यवहाराणां निष्पत्तेः । ब्रह्म जगत्कारणं सत्यज्ञानादिरूपं वस्तु तस्तु(त्तु) नानाविधप्राणिदेहरूपेण यावदभिधेयं भूत्वा विशेषेण स्थितं तावती तत्परिमाणा वाग्भवति । एकैकस्याभिधेयार्थस्यैकैकनामापेक्षणात् । अत एवा[न्य]त्र श्रूयते—"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" [ तै० आ० प्र० ३ अ० १२ ] इति ।

तस्यैतस्य व्याख्यातस्य मन्त्रस्य प्रथमपादं त्याचष्टे—

**सहस्रधा पञ्चदशान्युक्थेति[2] पञ्च हि दशतो भवन्ति, इति ।**

चक्षुरादीनि पञ्चाऽऽकाशादीनि मातृपितृसंबन्धीनि भूत्वा दशैकात्संपूर्णदेहरूपेण निष्पाद्यन्ते ।

द्वितीयपादं व्याचष्टे—

**यावद्द्यावापृथिवी तावदित्तदिति यावती**

सहस्रधा पञ्चदशान्युक्था०—ऋ० सं० म० १० सू० ११९ ऋ० ८ । यावद्द्यावापृथि०—ऋ० सं० म० १० सू० ११९ ऋ० ८ ।

* एतच्चिह्नान्तर्गतो ग्रन्थः किंचिदसंबद्ध इति तत्स्थाने संहिताभाष्ये विद्यमानो ग्रन्थोऽत्र लिख्यतेऽर्थबोधस्य सौलभ्याय । स यथा—"द्यावापृथिव्योर्यावद्यत्परिमाणमस्ति तावदित्तत्परिमाणमेवाऽऽत्माधिष्ठितं प्राणिदेहजातं भवति । किंच" इति ।

१ क. ख. घ. °मेव स° । २ क. ग. घ. °न्युक्थ° । ३ ख. ग. घ. °शदशका° ।

वै द्यावापृथिवी तावानात्मा, इति ।

आत्मा देहविशिष्टो जीवात्मा । द्यावापृथिव्योर्लोकयोर्जीवदेहे पूर्णत्वादात्मनस्तत्समानपरिमाणत्वं द्रष्टव्यम् ।

तृतीयपादं व्याचष्टे—

सहस्रधा महिमानः सहस्रमित्युक्था-
न्येव तदनु मदति महयति, इति ।

यावन्त्युक्थान्युत्कृष्टानि चक्षुरादीनि सन्ति तान्येव तत्तेन महिमा(म)शब्देनानुवदन्नयमृषिर्मन्त्रो मदति हर्षति । तथा महिमा(म)शब्दप्रयोगात्तान्यङ्गानि महयति ।

चतुर्थपादं व्याचष्टे—

यावद्ब्रह्म विष्ठितं तावती वागिति यत्र ह क्व च ब्रह्म
तद्वाग्यत्र वा वाक्तद्वा ब्रह्मेत्येतत्तदुक्तं भवति, इति ।

ब्रह्मैवाभिधेयं जगत्पदार्थरूपेण [यत्र] यत्रास्ति तत्र तत्राभिधायकं नाम । तथा यत्र यत्र वाचकः शब्दस्तत्र तत्राभिधेयपदार्थं ब्रह्मेत्येवमन्योन्यव्याप्तिस्वरूपं भवति । तदेवमुदाहृतेन मन्त्रेण चक्षुरादिपञ्चकोपेतजगत्सृष्टिप्रशंसनाचक्षुरादिगतपञ्चसंख्याद्वारेण पञ्चविंशतिसंख्या "नदं वः" [ ऋ० सं० म० ८ सू० ६९ ऋ० २ ] इत्येतदङ्गावृत्तिरूपा प्रशस्ता भवतीति द्रष्टव्यम् ।

अथ तत्तत्सूक्तगतामृक्संख्यां[1] क्रमेण प्रशंसितुमाद्यसूक्तगतां संख्यां प्रशंसति—

एषां वा एषां सूक्तानां नवर्चं प्रथमं
नव वै प्राणाः प्राणानां क्लृप्त्यै, इति ।

विविधानि सूक्तानि शस्त्रार्थं "नदं वः" [ ऋ० सं० म० ८ सू० ६९ ऋ० २ ] इत्यादिकया व्यतिषक्तानि केवलानि चेति । तत्राऽऽद्येनैषामित्यनेन पदेन व्यतिषिक्तानि परामृश्यन्ते । "ता नदेन विहरति" इत्येवं व्यतिषक्तानामनन्तरमेव प्रकृतत्वात् । द्वितीयेनैषामित्यनेन व्यतिषक्तान्तर्भूतानि केवलानि परामृश्यन्ते । तानि च "तदिदास" ( ऋ० सं० म० १० सू० १२० ऋ० १ ) इत्यादिव्याख्यानप्रकृतानि । तत्र याऽ(चा)क्षरयोजना—एषां व्यतिषक्तानां मध्ये यानि केवलानि सन्ति, ये-(ए)षां केवलानां मध्ये यत्प्रथमं तदिदासेति सूक्तं तन्नवर्चम् । प्राणाश्च देहगतच्छिद्रवर्तिनां( नो ) नवसंख्याका अतः प्राणसंपादनार्थं तत्सूक्तं संपद्यते ।

---

सहस्रधा महिमानः सहस्रं०—ऋ० सं० म० १० सू० ११९ ऋ० ८ । यावद्ब्रह्म विष्ठितं तावती०—ऋ० सं० म० १० सू० ११९ ऋ० ८ ।

---

१ क. ग. घ. तत्सू° ।

"तां सुते" [ ऋ० सं० म० १० सू० ९४ ऋ० १ ] इत्यादिद्वितीयसूक्तगतामृक्संख्यां प्रशंसति—

**षळृचं भवति षड्वा ऋतव ऋतूनामाप्त्यै, इति ।**

"भूयः" [ ऋ० सं० म० ६ सू० ३१ ऋ० १ ] इत्यादितृतीयसूक्तगतामृक्संख्यां प्रशंसति—

**पञ्चर्चं भवति पञ्चपदा पङ्क्तिः पङ्क्तिर्वा अन्नमन्नाद्यस्यावरुद्ध्यै, इत्यादि* ।**

पङ्क्तिश्छन्दः पञ्चभिच्छन्दःपादैरुपेतमन्नं+ च पाङ्क्तच्छन्दःसाध्यत्वात्क्षेत्रेषु पङ्क्तिरूपेणोक्त(प्त)त्वाद्वा पङ्क्तिरूपम् । तस्मादियं पञ्चसंख्याऽन्नप्राप्त्यै भवति ।

"नृणामु त्वा" [ ऋ० सं० म० ३ सू० ९१ ऋ० ४ ] इत्यादिको यस्तृचस्तद्गतामृक्संख्यां प्रशंसति—

**तृचो भवति त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै, इति ।**

"त्रयो वा" इत्यादि पूर्वमेव [ ऐ० आ० १ अ० १ ख० २ ] व्याख्यातम् ।

केवलानि सूक्तान्यृचश्च संख्याद्वारा प्रशस्यैतानि प्रकारान्तरेण प्रशंसति—

**ता अभि संपद्यन्ते बृहतीं छन्दोऽमृतं देवलोकमेष आत्मैवमु हैवैवंविदेतयैव संपदाऽमृतमेवाऽऽत्मानमभिसंभवति संभवति, इति ॥**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयाध्यायेऽष्टमः खण्डः ॥ ८ ॥ ( १६ )**

## इति बह्वृचब्राह्मणारण्यकाण्डे प्रथमारण्यके तृतीयोऽध्यायः ॥ ३ ॥

ताः सूक्तगता ऋचोऽभि सर्वतो बृहतीं छन्दः संपद्यन्ते । तद्यथा—त्रिष्टुप्छन्दस्कास्वृक्ष्वेकैकः पाद एकादशाक्षरोऽष्टाक्षरेण "नर्द्द वः" ( ऋ० सं० म० ८ सू० ६९ ऋ० २ ) इत्यादिमन्त्रगतेन पादेन संयुज्यते, तदेतदष्टादशाक्षरात्मकं पादद्वयमेकमर्धं भवति । तादृशे द्वे अर्धे षट्त्रिंशदक्षरां बृहतीं प्राप्नुतः । एवं त्रयोविंशतिसंख्या ऋचः सर्वा अपि "नर्द्द वः" इत्यादिसहिताः षट्चत्वारिंशद्बृहत्यो भवन्ति । तदेवं बृहतीं छन्दो विनाशरहितं देवलोकं तत्प्राप्तिहेतुत्वात्तादृशं छन्दः संपद्यत इति

* अत्रेतिशब्द एव केवलोऽपेक्षितः, सर्वत्र तन्मात्रस्यैव ग्रहणात्, ग्रहीतुमुचितत्वाच्च । परं चैवमेव पाठः सकलादर्शपुस्तकेषु । + व्रीहियवादिरूपम् ।

१ क. ख. पञ्चरू° । २ ग. घ. °ष्टाक्ष° ।

पूर्वत्रान्वयः। एष ईदृशो बृहतीसंघ आत्मा पक्ष्याकारस्य शस्त्रस्य मध्यदेहः। पक्षपुच्छादिभागाश्चोपरिष्टादभिधास्यन्ते। **एवमु हैवानेनैव** प्रकारेण पक्ष्याकारस्य मध्यदेहः। संपादित इति शेषः। यः पुमानेवं वेत्ति ध्यायति स पुमानेतयैव संपदा पक्षिदेहमध्यसंपादनेनामृतमेवाऽऽत्मानं विनाशरहितं स्वरूपमभिसंभवति, तद्ध्यानसहिते महाव्रते कर्मणा मनुष्यवच्छीघ्रं विनाशरहितं देवजन्म प्राप्नोतीत्यर्थः। अभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके तृतीयाध्यायेऽष्टमः खण्डः॥ ८॥ (१६)

**इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके तृतीयोऽध्यायः॥ ३॥**

---

## अथ प्रथमारण्यके चतुर्थोऽध्यायः।

तत्र प्रथमः खण्डः। (सप्तदशः)

---

तृतीयेऽध्याये निष्केवल्यशस्त्रस्य पक्ष्याकारस्य मध्यदेशभागस्तृचोत्तरसूक्तावयवनिष्पाद्योऽभिहितः। अथ चतुर्थे ग्रीवादिभागान्विधत्ते। तत्राऽऽद्यावात्मभागस्यावसाने पठनीयामृचं विधत्ते—

**अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति,** [इति।]

अथ शस्त्रस्य मध्यभागकथनानन्तरं **सूददोहाः** पठनीया। सूदं स्वादं सरसं दोग्धीति सूददोहाः कामधेनुरित्यर्थः। तद्वाचकोऽयं शब्दो यस्यामृचि "ता अस्य सूददोहसः" [ऋ० सं० म० ८ सू० ६९ ऋ० ३] इत्येवंरूपा या वर्तते साऽप्यृक्सूददोहास्तां सूददोहसमृचं पठेत्। सेयमृक्सूददोहःशब्देनाभिधीयते। सेयं प्राणस्वरूपणै(पिण्ये)व। यथा प्राणवायुः सूत्रात्मा सन्सर्वेषां शरीरावयवानां संधाता भवति, एवमियमृक्सर्वेषां शस्त्रभागानां(णां) मध्ये देहग्रीवादीनां संयन्त्री(धात्री) तस्मात्प्रत्यवयवं पठनीया स्यात्। अस्य मध्यभागस्यान्ते तत्पाठोऽभिहितः।

मध्यदेहभागं समाप्य ग्रीवाभागं विधत्ते—

**अथातो ग्रीवास्ता आचक्षते यथा छन्दसमुष्णिह इति,** इति।

अथ मध्यदेहकथनानन्तरं यस्मात्षड्वीरास्यभागः(?) पक्ष्याकारस्यापेक्षितोऽतः कारणाद्ग्रीवारूपा ऋचः शंसेत्। ता ऋचः शाखान्तराभिज्ञा **आचक्षते**। अत एव

---

१ क. ख. घ. °देशः सं°। २ क. ख. घ. °षः। पुमानेवं यः।

पञ्चमे शौनकेनोदाहृताः—"ग्रीवा यस्येदमारजः" [ऐ० आ० ५ अ० २ ख० १] इत्यादिना। ताश्च तिस्र ऋचो यथाछन्दसमध्या[1]पकप्रसिद्धवेदपाठमनतिक्रम्यर्गक्षरगणनया तिस्र उष्णिहः संपद्यन्ते। तत्र च्छन्दःपूरणायाक्षरान्तरप्रक्षेपं पुरुष इत्यादिवदपेक्षन्ते।

ग्रीवाभागानन्तरमपि पूर्ववत्सूददोह[2]सं विधत्ते—

**अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति, इति।**

ग्रीवाभागं समाप्य शिरोभागं विधत्ते—

**अथातः शिरस्तद्गायत्रीषु भवत्यग्रं वै छन्दसां गायत्र्यग्रमङ्गानां शिरस्तदर्कवतीषु भवत्यग्निर्वा अर्कस्ता नव भवन्ति नवकपालं वै शिरो दशमीं शंसति त्वक्केशा इत्येव सा भवत्यथो स्तोमातिशंसनाया एव तौ त्रिवृच्च स्तोमौ भवतो गायत्रं च च्छन्द एतयोर्वै स्तोमच्छन्दसोः प्रजापतिमनु सर्वमिदं प्रजायते यदिदं किंच प्रजात्यै, इति।**

ग्रीवानन्तरं शिरसोऽपेक्ष(क्ष्य)त्वाच्छिरोभागं शंसेत्। स च शिरोभागो गायत्रीछन्दस्कास्वृक्षु द्रष्टव्यः, शिरोगायत्र्योरग्रत्वसाम्यात्। सिसृक्षोः प्रजापतेः प्रथमं मुखतो गायत्री समुत्पन्ना। [एतच्च] यजुर्ब्राह्मणे द्रष्टव्यम्। उत्पद्यमानस्य देहस्य शिरः प्रथमं योनेर्निर्गच्छतीति शिरसोऽप्यग्रत्वम्। गायत्रीणां बहूनां विद्यमानत्वादर्कवतीष्विति विशेष्यते। "इन्द्रमिद्गाथिनः" [ऋ० सं० म० १ सू० ७ ऋ० १] इत्यादिकं सूक्तं दशर्चं तत्रत्या ऋचोऽर्कवत्यः। "इन्द्रमर्केभिरर्किणः" [ऋ० सं० म० १ सू० ७ ऋ० १] इत्येवमर्कशब्दयुक्तत्वादर्कवत्य इत्युच्यन्ते। अतोऽग्नियुक्ते(क्तत्वे)न प्रशस्तत्वादर्कवतीः शंसेत्। तास्विन्द्रमिद्गाथिन इत्यादिकानां य एकश्चर्षणीनामित्यन्तानां संख्या प्रयता नवेति वाक्येन प्रशस्यते। नवसंख्याकानि कपालान्येकधा संयोज्य प्रजापतिना मनुष्यशिरो निर्मितम्। एतच्च (अयं च(?)) मृतपुरुषस्य शिरसि[3] शीर्षेणे(षेण)[4] त्वगादावपगते सत्यस्थिगतो विभागो बुद्धिमद्भिरुद्भेत्तुं शक्यते। एतदेवाभिप्रेत्य तैत्तिरीयकाश्चाऽऽमनन्ति—"तस्मान्नवधा शिरो विष्यूतम्" [तै० सं० अ० ६ प्र० २ अ० १] इति। या तु "इन्द्रं वो विश्वतस्परि" [ऋ० सं० म० १ सू० ७ ऋ० १०] इति दशमी तच्छंसने शिरःकपालानामुपरि त्वक्संपादिता भवति। तस्यां त्वच्यपि केशाः संपादिता भवन्ति। अपि चेयं दशमी सा सामगा[5]नां संबन्धिनस्त्रिवृ-

---

१ क. °ध्यायक°। २ ख. ग. घ. °हस्य वि°। ३ क. °सि रोमशो°। ४ क. °षणग तत्व°। ख. घ. °षणत्व°। ५ क. ख. °गानी सं°।

दार्व्यस्तोमविशेषातिशयेन शंसनार्थं संपद्यते । सामगा हि शिरोभागं स्तुवन्त इन्द्रमिद्गाथिन इत्यादिषु नवस्वृक्षु चाऽऽवृत्तिरहितं त्रिवृत्स्तोमं संपादयन्ति[१] । न त्वत्र तेषां दशमी विद्यते । होता तु नवसंख्याकास्ता अतिक्रम्य दशमीमपि शंसति । तदेतदतिशंसनमत्र त्रिवृत्स्तोमेनाऽऽवृत्तिराहित्यं च यथा सामवेदेऽवगम्यते तथा तैत्तिरीयब्राह्मणेऽप्यवगम्यते—"त्रिवृच्छिरो भवति । त्रेधा विहितं हि शिरः । लोम च्छवीरस्थि । पराचा स्तुवन्ति" [ तै० ब्रा० का० १ प्र० २ अ० ६ ] इति । एवं सति योऽत्र सामगै(गैः)स्त्रिवृत्स्तोमो यदप्यृगतं गायत्रीछन्दस्तावेतौ द्वौ प्रजोत्पत्तिहेतू संपद्येते । तयोश्च स्तोमच्छन्दसोः प्रजोत्पादनमनु लोके यत्किंचिदिदं प्राणिजातं दृश्यते तदिदं सर्वमुत्पन्नं भवति । अतः शिरोभागशंसनं प्रजोत्पादनाय संपद्यते ।

एतद्वेदनं प्रशंसति—

प्रजायते प्रजया पशुभिर्य एवं वेद, इति ।

शिरोभागशंसनानन्तरं पूर्ववत् "ता अस्य" [ ऋ० सं० म० ८ सू० ६९ ऋ० ३ ] इत्येतामृचं विधत्ते—

अथ सूददोहाः प्राणो वै सूद-
दोहाः प्राणेन पर्वाणि संदधाति, इति ।

शिरोभागं समाप्यानन्तरं पक्ष्याकारस्य पक्षमूलभागापेक्षणात्तत्तद्भागशंसनं विधत्ते—

अथातो विजवस्ता विराजो भवन्ति तस्मात्पुरुषः पुरु-
षमाह वि वा अस्मासु राजसि ग्रीवा वै धारय-
सीति स्तभमानं वा यद्वा छुताः संबाह्ळतमाः
सत्योऽन्नतमां मत्यच्यन्तेऽन्नं हि विराळन्नमु वीर्यम्, इति ।

विशेषेण जवो वेगो यस्मिन्पक्षमूले [स] विजवः । यद्वा ग्रीवाया अधस्तना अस्थिविशेषा विजव इत्यनेनोच्यन्ते । तद्भाव(ग)त्वेन संपाद्यमानास्ता ऋचो विराट्छन्दस्का भवन्ति । ताश्च पञ्चमे शौनकेन शाखान्तरमाश्रित्य पठिताः—"सुतस्ते सोम उपयाहि" [ ऐ० आ० ५ अ० २ ख० १ ] इत्यादिना । यस्माद्ग्रीवाया अधोवर्ती पक्षमूलभागोऽस्थिभागो वा विराट्छन्दस्कमन्त्ररूपो य(यस्त)स्माल्लोके कश्चित्पुरुष इतरं पुरुषं श्रुताध्ययनसंपन्नं स्वामिनं प्रत्येवं प्रब्रूते[२] । अस्मासु मध्ये त्वमेव विराजसीति । अथवा स्तभमानं प्रणिपातादिविनयरहितमुत्कंधरं स्तब्धं पुरुषमुपालम्भं[३] कुर्वन्नेतद्ब्रूते । ग्रीवावयवानेव त्वं धारयसीति । यद्यप्यनेनैवोद्धत्याह्वयने(त्याह्वाने)न स्तुतिर्न प्रतीयते तथाऽपि ग्रीवाधारत्वाकारेणात्र स्तुतिर्द्रष्टव्या । इत्थं लौकिकोक्तिमुपजीव्य विराट्छन्दस्कानामृचां प्रशंसा कृता । अथान्नहेतुत्वमुपजीव्य प्रशंसार्थं यद्वेति

---

१ ग. घ. °पि प्रशं° । २ ग. °थ लोके स्त° । ३ क. °म्भं निन्दां कु° ।

पक्षान्तरोपन्यासः । ग्रीवाया अधोभागरूपाः सुतस्ते सोम इत्यादिका ऋचो दुताः प्राप्ताः । "दु गतौ" [ भ्वा० प० ] इत्यस्माद्धातोरुत्पन्नः शब्दः । संबाह्ळतमा अतिशयेन परस्परसंश्लिष्टास्थिरूपत्वेन दृष्टाः सत्योऽतिशयेनान्नरूपां विराजं प्रत्यच्यन्ते प्राप्यन्ते । यस्मादन्नहेतुत्वेन विराडन्नं तच्च शक्तिहेतुत्वाद्वीर्यं तस्माद्विराजः शंसेदित्यर्थः ।

"ता अस्य सूददोहसः" [ ऋ० सं० म० ८ सू० ६९ ऋ० ३ ] इत्येतामृचं विधत्ते—

**अथ सूददोहाः प्राणो वै सूददोहाः**
**प्राणेन पर्वाणि संदधाति, इति ॥**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥ ( १७ )**

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥ ( १७ )

अथ द्वितीयः खण्डः । ( अष्टादशः )

पक्ष्याकारस्य शस्त्रस्य पक्षापेक्षत्वादादौ दक्षिणं पक्षं विधत्ते—

**अथातो दक्षिणः पक्षः सोऽयं लोकः सोऽयमग्निः सा वाक्तद्रथंतरं स वसिष्ठस्तच्छतं तानि षड्वीर्याणि भवन्ति संपात एव कामानामभ्याप्त्यै प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः , इति ।**

योऽयं द्वितीयभागो दक्षिणः पक्षः सोऽयं भूलोकाम्यः(भूलोकः) प्रथमभावित्वात् । भूलोकस्याग्निना देवेनाधिष्ठितत्वादयं (*पक्षो निःसरूपत्वश्च) "अग्निर्वाग्भूत्वा मुखं प्राविशत्" [ऐ०आ० २-४-२] इति श्रुतेरग्निसंबन्ध(द्ध)त्वाद्वा[ग्रूपोऽयं पक्षः । वा]ग्रूपस्य "वाग्वै रथंतर[स्य रूपम्" [ ऐ० आ० ३ अ० १ ख० ६ ] इति रथंतर]सामरूपत्वम्+ । एतस्मिन्दक्षिणे पक्षे शतमृचः संपद्यन्ते । ताश्च पञ्चमे शौनकेनोदाहृताः "रथंतर[स्य] स्तोत्रियाभि(नु)रूपौ" [ ऐ० आ० ५ अ० २

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने "पक्षोऽग्निस्वरूपः । वाचश्च" इति पाठो युक्तः । + एतदनन्तरं—' रथन्तरस्य च वाग्रूपत्वेन "वाग्वाव वसिष्ठः" इति च्छन्दोगश्रुतेर्वसिष्ठत्वम् ' एवमाद्याकारो ग्रन्थोऽपेक्षितः ।

---

१ क. ग. घ. °ख ए° ।

ख० १] इत्यादिकाः। तत्र स्तोत्रिये तृचे तदनुरूपे च तृचान्तरेण षट्संख्याका ऋचः। "इन्द्रस्य नु वीर्याणि" [ऋ० सं० म० १ सू० ३२ ऋ० १] इति सूक्तं पञ्चदशर्चम्। "त्वे ह यत्पितरः" [ऋ० सं० म० ७ सू० १८ ऋ० १] इत्येतस्मिन्पञ्चविंशत्यृचे दशर्चोऽपठनीयाः। "यस्तिग्मशृङ्गः" [ऋ० सं० म० ७ सू० १९ ऋ० १] इति सूक्तमेकादशर्चम्। "उग्रो जज्ञे" [ऋ० सं० म० ७ सू० २० ऋ० १] इति सूक्तं दशर्चम्। "उदु ब्रह्माणी" [ऋ० सं० म० ७ सू० २४ ऋ० १] इति सूक्तं षडृचम्। आ ते मह इत्यादीनि पञ्च सूक्तानि। तेषु प्रथमम् "आ ते महः" [ऋ० सं० म० ७ सू० २५ ऋ० १] इति सूक्तं षेड्ऋचम्। "न सोमः" ऋ० सं० म० ७ सू० २७ ऋ० १] इति द्वितीयं पञ्चर्चम्। "इन्द्रं नरः" [ऋ० सं० म० ७ सू० २८ ऋ० १] इति तृतीयमपि पञ्चर्चम्। "ब्रह्माणः" [ऋ० सं० म० ७ सू० २९ ऋ० १] इत्येतच्चतुर्थमपि पञ्चर्चम्। "अयं सोमः" [ऋ० सं० म० ७ सू० ३० ऋ० १] इत्येतत्पञ्चममपि पञ्चर्चम्। "आ न इन्द्रो दूरात्" [ऋ० सं० म० ४ सू० २० ऋ० १] इति सूक्तमेकादशर्चम्। तदेतत्संपातसूक्तमिति नाम्ना व्यवह्रियते। "इत्था हि सोमः" [ऋ० सं० म० १ सू० ८० ऋ० १] इत्येषा पङ्क्तिच्छन्दस्कर्गेका, तस्याः पङ्क्तेः प्राचीनं सर्वमृचां शतं संपद्यते। एतस्मिन्दक्षिणे पक्षे पूर्वोक्तभूलोकाग्निवाग्रथंतरवसिष्ठशतसंख्यारूपाणि यानि तानि षट्संख्याकानि **वीर्याणि भवन्ति**। "आ नः" इत्यादिसूक्तगतर्क्संपात एव सम्यक्प्राप्तिहेतुरेव। अतोऽयं **कामानाम**भितः प्राप्त्यर्थं भूलोके **प्रतिष्ठार्थमन्नाद्य**प्राप्त्यर्थं च। तच्छतं संपद्यते तस्माच्छतस्योपरि "इत्था हि सोमः" इत्यादिका पङ्क्तिः पठनीया।

तत ऊर्ध्वं "ता अस्य" [ऋ० सं० म० ८ सू० ६९ ऋ० ३] इत्येतामृचं विधत्ते—

> **अथात उत्तरः पक्षः सोऽसौ लोकः सोऽसावादित्यस्तन्मनस्तद्बृहत्स भरद्वाजस्तच्छतं तानि षड्वीर्याणि भवन्ति संपात एव कामानामभ्याप्त्यै प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः**, इति।

**य उत्तरः सोऽसौ** द्युलोकस्वरूपः। भूलोकरूपा(प)दक्षिणपक्षोनन्तर्भा(रभा)वित्वात्। [तथा स] आदित्यस्य द्युलोकवादि(सि)त्वात्तद्रूप[ः।]स्य(स) च [मनोरूपः।] यद(द्य)पि मनसश्चन्द्रमा देवता तथाऽपि चन्द्रादित्ययोरभेद[स्य] *विवक्षितत्वादित्य-

* एतदादिमनोरूपत्वमित्यन्तग्रन्थस्थाने "विवक्षितत्वान्मनोरूपत्वम्" इति ग्रन्थोऽपेक्षितः।

१ क. ग. घ. °शर्चः प°। २ क. ख. ग. षळ्ऋ°। ३ क. ख. ग. षळ्ऋ°। ४ क. ग. घ. °क्षावन्त°।

ड़ादिमनोरूपारूपत्तमनोरूपत्वम् । [ तच्च बृहत् । ] "मनो वै बृहत्" इति श्रुतेः । [ तस्य च ] बृहत्सामानन्तरं "भरद्वाजो बृहत्य:(त्)" इति श्रुतेर्भरद्वाजरूपत्वम् । तदुत्तरपक्षस्वरूपमृचां शतं संपद्यते । तच्च शतं पञ्चमे "त्वामिद्धि" [ ऐ० आ० ५ अ० २ ख० १ ] इत्यादिना शौनक उदाजहार । "त्वामिद्धि हवामहे" [ ऋ० सं० म० ६ सू० ४६ ऋ० १ ] "त्वं ह्येहि चेरवे" [ ऋ० सं० म० ८ सू० ६१ ऋ० ७ ] इत्यनयोस्तृचयोः षैड्ऋचः । "तमु ष्टुहि" इत्येतत्पञ्चदशर्चं सूक्तम् । *तत्त्वमित्यादिसूक्तानि । "सुते" [ ऋ० सं० म० ६ सू० २३ ऋ० १ ] इत्येतत्प्रथमं दशर्चम् । "वृषा मदः" [ ऋ० सं० म० ६ सू० २४ ऋ० १ ] इत्येतद्द्वितीयमपि सूक्तं [दशर्चम् । "या त ऊतिरवमा"] [ ऋ० सं० म० ६ सू० २५ ऋ० १ इति ] नवर्चम् । "अभूरेकः" इत्यादीन्यष्टौ सूक्तानि । तेषु "अभूरेकः" [ ऋ० सं० म० ६ सू० ३१ ऋ० १ ] इति प्रथमं सूक्तम् । "अपूर्व्या पुरुतमानि" [ ऋ० सं० म० ६ सू० ३२ ऋ० १ ] इति द्वितीयम् । "य ओजिष्ठः" [ ऋ० सं म० ६ सू० ३३ ऋ० १ ] इति तृतीयम् । "सं च त्वा" [ ऋ० सं० म० ६ सू० ३४ ऋ० १ ] इति चतुर्थम् । "कदा भुवन्" [ ऋ० सं० म० ६ सू० ३५ ऋ० १ ] इति पञ्चमम् । "सत्रा मदासः" [ ऋ० सं० म० ६ सू० ३६ ऋ० १ ] इति षष्ठम् । "अर्वाग्रथः" [ ऋ० सं० म० ६ सू० ३७ ऋ० १ ] इति सप्तमम् । "अपात्" [ऋ० सं० म० ६ सू० ३७ ऋ० १ ] इत्यष्टमम् । तान्येतान्यष्टौ सूक्तानि । तान्येतान्यपि प्रत्येकं पञ्चर्चानि । "कथा महाम्" [ऋ० सं० म० ४ सू० ३३ ऋ० १ ] इत्येतत्सूक्तमेकादशर्चं तच्च संपातशब्देन व्यवह्रियते । "इन्द्रो मदाय" [ ऋ० सं० म० १ सू० ८१ ऋ० १ ] इत्येका पङ्क्तिच्छन्दस्का । तस्याः पङ्क्तेः प्राचीना ऋचो यद्यप्येकाधिकशतसंख्याकास्तथाऽपि तत्र न(श)तस्य विद्यमानत्वात्तच्छतमित्युच्यते । तानि षड्वीर्याणीत्यादिकं पूर्ववत् ।

दक्षिणोत्तरपक्षयोर्न्यूनातिरिक्तभावं प्रशंसति—

**ता ऊनातिरिक्तौ भवतो वृषा वै बृहद्योषा रथंतर-**
**ऽतिरिक्तं वै पुंसो न्यूनं स्त्रियै तस्मात्** , इति ।

एकयर्चा न्यूनो दक्षिणः पक्षः । उत्तरस्त्वेकयर्चाऽतिरिक्तः । तस्योत्तरस्य बृहद्रूपता बृहतश्च पुंरूपत्वेनाङ्गाधिक्यं युक्तम् । दक्षिणस्याऽऽर्ध्यत्वाद्रथंतरत्वं तस्य स्त्रीरूपत्वान्न्यूनाङ्गत्वं युक्तम् । तस्मादुभौ पक्षौ न्यूनातिरिक्तौ कर्तव्यौ ।

---

* " सुत इत्यादीनि त्रीणि सूक्तानि " इत्यपेक्षितो ग्रन्थः ।

---

१ ख. ग. °डारादि° । २ ख. ग. °रूप° । ३ क. °नयोः ष° । ४ क. ख. ग. षळृक्° । ५ क. °श्च पुरुषाधिक्यत्वे° । ग. °श्च पुरुधिक्यत्वे° । ६ क. ग. °द्यन्तत्वा° ।

प्रकारान्तरेण न्यूनाधिकभावं प्रशंसति—

**ऊनातिरिक्तौ भवतोऽथो एकेन ह वै पुत्रेण सुपर्णस्योत्तरः पक्षो ज्यायांस्तस्मादे-कयर्चोत्तरः पक्षो भूयान्भवति, इति ।**

लोके पक्षिण उत्तरपक्ष एकं पत्रमधिकं भवति, अतोऽत्राप्युत्तरः पक्ष एकयर्चाऽ-धिकः कर्तव्यः ।

"ता अस्य" [ ऋ० सं० म० ८ सू० ६९ ऋ० ३ ] इत्येवं विधत्ते—

**अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति , इति ।**

पक्षानन्तरं पुच्छभागस्यापेक्षितत्वात्पुच्छं विधत्ते—

**अथातः पुच्छं ता एकविंशतिर्द्विपदा भवन्त्येकविंश-तिर्हीमानि प्रत्यञ्चि सुपर्णस्य पत्राणि भवन्ति, इति ।**

याः पुच्छभागरूपा ऋचस्ताः प्रत्येकं पादद्वयोपेता मिलित्वैकविंशतिसंख्याकाः । ताश्च पञ्चमे शौनकेन "इमा नुकम्" [ ऐ० आ० ९ अ० २ ख० २ ] इत्यादिनो-दाहृताः । "इमा नुकम्" [ ऋ० सं० म० १० सू० १९७ ऋ० १ ] इत्यस्मि-न्सूक्ते पञ्चर्चः । "आ याहि वनसा सह" [ ऋ० सं० म० १ सू० १७२ ऋ० १ ] इत्यस्मिन्सूक्ते चतस्रः । ता एता नवसंख्याका द्विपदाः शाकल्यसंहितायामाम्नाताः । प्र व इन्द्रायेत्यादिका नवसंख्याका द्विपदाः शाखान्तरगताः । [ "एष ब्रह्मा" इति तिस्रः ] इत्येवमेकविंशतिः । लोकेऽपि पक्षिणः पुच्छे प्रत्यङ्मुखानि पत्राण्येकविंश-तिर्भवन्ति, तस्मात्तावतीर्ऋचः शंसेत् ।

प्रकारान्तरेण संख्यां प्रशंसति—

**अथो एकविंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठा पुच्छं वयसाम् , इति ।**

सामवेदप्रसिद्धास्त्रिवृत्पञ्चदशसप्तदशैकविंशनामका ये स्तोमा अग्निष्टोमनिष्पादका-स्तेषां मध्य एकविंश एव प्रतिष्ठा समाप्तिहेतुः । पक्षिणां च पुच्छं प्रतिष्ठा, उत्पन्न(त न)वृक्षारोहणस्थित्यादावुपयुक्तत्वात् । अतः पुच्छस्यैकविंशतिसंख्या युक्ता ।

अत ऊर्ध्वम् "आधूर्ष्वस्मै" [ ऋ० सं० म० ७ सू० ३४ ऋ० ४ ] इत्येता-मन्यां द्विपदां विधत्ते—

**द्वाविंशीं शंसति प्रतिष्ठयोरेव तद्रूपं क्रियते तस्मा-**

---

१ क. पक्ष्युत्त ।

**त्सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुच्छम् ,** इति ।

अत्र द्वाविंशत्याः शंसनेन विंशतेरुपरि ये द्वे ऋचौ **तदेतत्प्रतिष्ठयोः** पादयोरेव **रूपं क्रियते** द्वित्वसंख्यायाः समानत्वात् । तस्मादेव पुच्छस्य प्रतिष्ठाहेतुत्वम् । तस्मात्सर्वेऽपि पक्षिणः **पुच्छेन प्रतितिष्ठन्ति** भूमौ वृक्षादौ वा पुच्छं पृष्ठत आधारं कृत्वा स्थैर्येणावतिष्ठन्ते । तथा **पुच्छेनैव** भूमाववस्थितेन **प्रतिष्ठाय** सकृत्स्थैर्येण स्थित्वा पश्चात्प्रबलेनोत्साहेनो**त्पतन्ति** । यस्मात्**पुच्छं प्रतिष्ठा** तस्मादेतद्युक्तम् ।

पुनरपि द्वाविंशतिसंख्यां प्रकारान्तरेण प्रशंसति—

**स एष द्वाभ्यां दशिनीभ्यां विराड्भ्यामनयोर्द्वाविंश्योर्द्विपदयोरयं पुरुषः प्रतिष्ठितस्तस्य यत्सुपर्णरूपं तदस्य कामानामभ्याप्त्या अथ यत्पुरुषरूपं तदस्य श्रियै यशसेऽन्नाद्यायापचित्यै,** इति ।

द्वाविंशतिसंख्याकानामृचां मध्ये द्वे अवसानगते ऋचौ परिशेष्य ततः पूर्वभाविनी या ऋचां विंशतिस्तस्या द्वे दशिन्यौ दश संख्योपेतसमूहावत एव तयोर्विराट्त्वम् । **द्वाभ्यां [दशिनीभ्यां] स एष** शस्त्ररूपः सुपर्णः प्रतिष्ठित इत्यन्वयः । ये तूत्तरापूरिके द्वे ऋचौ द्विपदारूपे तयोर्ऋचोरयं **पुरुषो** द्विपाद्यजमानः **प्रतिष्ठितः** । तथा सति **तस्य** शस्त्रस्य दशकद्वयात्मकं **यत्सुपर्णरूपं तदस्य** यजमानस्य **कामाना**मभितः प्राप्त्यै संपद्यते । अनन्तरमृग्द्वयात्मकं यत्पुरुषरूपमुक्तं **तदस्य** यजमानस्य **श्रीयशोन्नाद्यपूजार्थं** संपद्यते ।

यथोक्तद्वाविंशतेरूर्ध्वमुभयतः सूददोहसां चेष्टितं "यद्वावान पुरुतमम्" [ ऋ० सं० म० १० सू० ७४ ऋ० ६ ] इति धाय्यां [च?] विधत्ते—

**अथ सूददोहा अथ धाय्याऽथ सूददोहा वृषा वै सूददोहा योषा धाय्या तदुभयतः सूददोहसा धाय्यां परिशंसति तस्माद्वयो रेतः सिक्तं सदेकतामेवाप्येति योषामेवाभ्यत आजाना हि योषाऽतः प्रजाना तस्मादेनामत्र शंसति,** इति ॥

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥ ( १८ )**

उभयतः पठितायाः सूददोहस आधिक्यात्पुरुषत्वम् । मध्ये पठिताया यद्वावानेति धाय्याया अल्पत्वेन स्त्रीरूपत्वम् । तस्मान्मिथुनसिद्ध्यर्थमुभयथा(तः) **सूददो-**

१ क. °य्या सू° ।

हसा युक्तां धाय्यां परिशंसेत् । पुरुषपरिष्वक्तयोषिद्वत्सूददोहसा सह धाय्या संयोजिता, तस्मादेव लोकेऽपि द्वयोः स्त्रीपुरुषयोः संबन्धि रेतो गर्भाशये निषिक्तं सदेकत्वमेवाभिलक्ष्य तन्मिलितमेवावतिष्ठते न पुरुषशरीरः (?)। हि यस्मात्कारणादियं योषाऽऽजानाना(षाऽऽजाना), अस्मान्मिलिताद्रेतोद्वयात्साकल्येन शारीरो व्यवतिष्ठते यस्यां योषायां सेयमतः प्र(त आ)जाना। अथवा विवक्ष्यते—"तद्यथा(दा) स्त्रियां सिञ्चत्यथैनज्जनयति" [ऐ० आ० २ अ० ९ ख० १] इति। अतः कारणादियं योषा प्रजानाना(प्रजाना)। प्रकृष्टो जातः(नः?) पुत्रपौत्रोत्पादनं यस्याः सा प्रजाना। यस्मादेवं धाय्या प्रशस्ता तस्मादेतां धाय्यामस्मिन्विजवभागे पठेत्। पक्षमूला ऋचो विजवा विवक्षिताः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥ ( १८ )

---

अथ तृतीयः खण्डः। ( ऊनविंशः )

---

अथ तस्य पक्षिणोऽन्नरूपा अशीतयो वक्तव्यास्तत्रैकाऽशीतिः—

[*गायत्रीं तृचाशीतिं शंसत्ययं वै लोको गायत्री तृचाशीतिर्यदेवास्मिँल्लोके यशो यन्महो यन्मिथुनं यदन्नाद्यं याऽपचितिस्तदश्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदिति, इति।

गायत्री तृचाशीतिरयमेव लोकोऽतो यदस्मिँल्लोके] यशः कीर्तिर्यच्च महः पूजा यच्च मिथुनं भार्यासंबन्धि यच्चान्नाद्यं भक्ष्यभोज्यादिकं याऽपचितिः पूजा। वेदशास्त्रप्रयुक्ता पूजा महःशब्देन पूर्वमुक्ता। तेजो वा तत्रोक्तमत्र तु धनधान्यादिसमृद्धिरूपा पूजोच्यते। तद्यशःप्रभृतिकमपचित्यन्तं सर्वमश्नवै प्राप्त(व्याप्न)वानि। पुत्रपौत्रादिषु तत्संपदधीनत्वं व्याप्तत्वम्। तत्सिद्ध्यर्थमादौ तद्यशःप्रभृतिकमाप्नवानि संपादयामि। संपादितं तत्सर्वं †तदवरुणधै स्वाधीनं करवाणि। तच्च स्वाधीनं मे मदीयगृहेष्वसत्, अस्तु। तदानीमित्यभिप्रेत्य गायत्रीं तृचाशीतिं पठेत्। "ता अस्य" [ऋ० सं० म० ८ सू० ६९ ऋ० ३] इत्येतामृचं विधत्ते—

अथ सूददोहाः प्राणो वै सूददोहाः

[*प्राणेनेमं लोकं संतनोति, इति।

---

* एतच्चिह्नान्तर्गतं मूलं मूलपुस्तकेभ्य उद्धृत्य तदतिरिक्तं च प्रकल्प्यात्र निवेशितम्।

† तच्छब्दोऽयमधिकः। * एतच्चिह्नान्तर्गतं मूलं मूलपुस्तकेभ्य उद्धृतं तदतिरिक्तं कल्पितम्।

---

१ ख. ग. घ. °स्तु। दानिमित्य°।

बृहतीछन्दस्कां तृचाशीतिं विधत्ते—

बार्हतीं तृचाशीतिं शंसत्यन्तरिक्षलोको वै बार्हती तृचाशीतिर्यद्देवान्तरिक्षलोके यशो यन्महो यन्मिथुनं यदन्नाद्यं याऽपचितिस्तदश्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदित्यथ सूददोहाः प्राणो वै सूददोहाः] प्राणेनान्तरिक्षलोकं संतनोति, इति ।

सेयं बार्हती तृचाशीतिः "मा चिदन्यः" (ऐ० आ० ५ अ० २ ख० ४) इत्यादिः पञ्चमे शौनकेनोदाहृता । द्वितीयत्वादस्या अन्तरिक्षरूपत्वम् । अन्यत्पूर्ववद्व्याख्येयम् ।

उष्णिक्छन्दस्कां तृचाशीतिं विधत्ते—

औष्णिहीं तृचाशीतिं शंसत्यसौ वै लोको द्यौरौष्णिही तृचाशीतिर्यद्देवामुष्मिल्ँलोके यशो यन्महो यन्मिथुनं यदन्नाद्यं याऽपचितिर्यद्देवानां दैवं तदश्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदित्यथ सूददोहाः प्राणो वै सूददोहाः प्राणेनामुं लोकं संतनोति संतनोति, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके चतुर्थाध्याये तृतीयः खण्डः ॥ ३ ॥ ( १९ )

## इति बह्वृचब्राह्मणारण्यकाण्डे प्रथमारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

सेयमौष्णिही पञ्चमे—"य इन्द्र सोमपातमः" [ ऐ० आ० ५ अ० २ ख० ५ ] इत्यादिनोदाहृता । अस्या उपरितनत्वाद्द्युलोकरूपत्वम् । यद्यपि प्रायेण वेदेष्वयं लोकोऽसौ लोक इति भूलो[कद्युलो]कावेवाभिधीयेते तथाऽपि द्यौरित्यभिधानं विस्पष्टार्थम् । देवानामिन्द्रादीनां दैवं पूज्यं ब्रह्म । तथा च श्वेताश्वतरा आमनन्ति—"तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्" इति । अन्यत्पूर्ववद्व्याख्येयम् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके चतुर्थाध्याये तृतीयः खण्डः ॥ ३ ॥ ( १९ )

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यकभाष्ये प्रथमारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

## अथ प्रथमारण्यके पञ्चमोऽध्यायः ।

### तत्र प्रथमः खण्डः । ( विंशः )

---

चतुर्थे शस्त्रपक्षिणो ग्रीवास्यभाग उक्तः । अन्ते तृचाशीतयोऽन्नरूपा अभिहिताः । तस्यान्नस्य धारणार्थमुदरं वक्तव्यमतस्तद्रूपं वशनामकं शस्त्रभागं विधत्ते—

**वशं शंसति वशे म इदं सर्वमसदिति, [ इति । ]**

यदिदं स्थावरजङ्गमरूपं जगदस्ति तत्सर्वं मे वशे भूयादित्यभिप्रेत्य वशाख्यं शस्त्रभागं *पाठं पठेत् । स च भागः "त्वाऽवतः पुरूवसो " [ ऐ० आ० ५ अ० २ ख० ९ ] इत्यादिना पञ्चमे स्पष्टमुदाहृतः । वशनामकेन महर्षिणा दृष्टत्वात्तदेतत्सूक्तं वशमित्युच्यते ।

तत्सूक्तगतामृक्संख्यां प्रशंसति—

**ता एकविंशतिर्भवन्त्येकविंशतिर्हि ता अन्तरुदरे विकृतयः, इति ।**

" त्वाऽवतः " [ ऋ० सं० म० ८ सू० ४६ ऋ० १ ] इत्यारभ्य " सनितः सुसनितः " [ ऋ० सं० म० ८ सू० ४६ ऋ० २० ] इत्यन्ता विंशतिः । ततः सूददोहा एकेत्येवमेकविंशतिर्द्रष्टव्या । हि यस्मादुदरमध्ये विद्यमानाः क्लोमप्लीहाद्यवयवरूपा विकृतय एकविंशतिसंख्याकास्तस्माद्वशभागे संख्या प्रशस्ता । ते चावयवास्तत्र तत्रानुवर्तमानप्रकरणादौ द्रष्टव्याः ।

प्रकारान्तरेण संख्यां प्रशंसति—

**अथो एकविंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठोदरमन्नाद्यानाम्, इति ।**

त्रिवृदादिस्तोमानां मध्य एकविंशस्तोमस्य प्रतिष्ठात्वं पूर्वत्रोक्तम् । उदरस्यान्नाधारत्वं प्रसिद्धम् ।

तास्वृक्षु विद्यमानं परस्परविलक्षणच्छन्दस्त्वं प्रशंसति—

**ता विच्छन्दसो भवन्ति विक्षुद्रमिव वा अन्त-**
**स्त्यमणीय इव च स्थवीय इव च, इति ।**

"त्वाऽवतः" [ऋ० सं० म० ८ सू० ४६ ऋ० १] इत्यादिका ऋचो वशनाम्ना विहिताः परस्परविलक्षणच्छन्दोयुक्ताः । एतच्चानुक्रमणिकायां विस्पष्टमुक्तम्—"त्वाऽवतस्त्रयस्त्रिंशद्वशाख्या आद्या पादनिचृत्" इत्यारभ्य "पञ्चम्यादिककुप्प्रगाथगायत्री-

---

* अत्र पाठशब्दोऽधिक इव भाति ।

---

१ क. ख. घ. °मकैः शस्त्रैर्भागं । २ क. °माना या लोम° । ख. ग. घ. °माना या क्लो° । ३ ख. ग. घ. °मग्रीवाद्य° । ४ ख. ग. ध. तत्र यमुर्वर्त° । ५ क. ख. ग. घ. °का या ऋ° ।

बृहत्यनुष्टुप्ततो बृहती गायत्री" इत्यादि। तदेतन्नानाछन्दस्त्वमुदररूपस्य वशस्य योग्यम्। लोकेऽप्यन्तस्त्यमुदरमध्यवर्ति क्लोमप्लीहादिकं विक्षुद्रमिव वै विविधत्वेनाल्पमेवाल्पत्वेन दृश्यते। एकस्मादितरदल्पं ततोऽप्यन्यदल्पमित्येवं विविधं क्षुद्रत्वम्। तदेवाणीय इत्यादिनोदाह्रियते। द्विविधमात्रं(न्त्रं) स्थूलं सूक्ष्मं च तस्मादुभयातिशयेन स्थूलं हृदयमत्र। एवं क्लोमप्लीहादिषु यथायोग्यं द्रष्टव्यम्।

शंसने प्रकारविशेषं विधत्ते—

**ताः प्रणावं छन्दस्कारं यथोपपादं शंसति यथोपपादमिव वा अन्तस्त्यं ह्रसीय इव च द्राघीय इव च, इति।**

या ऋचः—"त्वाऽवतः" [ ऋ० सं० म० ८ सू० ४६ ऋ० १ ] इत्यादिकाः सन्ति तासां शंसनकाले प्रणावं प्रणुत्य पुनः पुनः प्रणवमुच्चार्य च्छन्दस्कारं तत्तच्छन्दो यथा न विपर्येति तथा तत्र कृत्वा यथोपपादमुक्तनियममनतिक्रम्य यथा शंसनमुपपद्यते तथा शंसेत्। एतदर्थमेव संदिग्धामृचं विभज्य शौनको दर्शयति—"ददीरेक्ण इति द्विपदा नूनमथेत्येकपदा" [ ऐ० आ० ९ अ० २ ख० ९ ] इति। तत्र शंसनप्रकार आश्वलायनेनोदाहृतः—" पच्छो द्विपदा उपसंतनुयादेकपदाः " इति। अयमर्थः—या ऋचो द्विपदाः सन्ति ताः पच्छः शंसनीयाः, प्रथमपादं पठित्वा ततोऽवसाय पश्चाद्द्वितीयं पादं पठित्वाऽन्ते प्रणवं कुर्यात्। या एकपदाः सन्ति ताः पुरस्तादुपरिष्टाच्च प्रणवाभ्यां संतनुयात्। मध्ये च नावस्येती(दी)दृशं शंसनं यथोपपादमित्युच्यते। अन्तस्त्यमुरो मध्येऽवस्थितमप्यत्र क्लोमप्लीहादिकं यथोपपन्नं भवति तथैवावतिष्ठते। किंचिदङ्गमतिह्रस्वमिवान्यदङ्गमतिदीर्घमिव स्थितं तस्मात्तत्सादृश्याय न्यूनाधिकच्छन्दांसि यथा तथा शंसेत्।

ता अस्येत्येतामृचं विधत्ते—

**अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति, इति।**

वशाभागस्य शंसनादूर्ध्वं "ता अस्य" [ ऋ० सं० म० ८ सू० ६९ ऋ० ३ ] इत्यस्या ऋचः परित्यागं विधत्ते—

**तामत्रोत्सृजति द्वादशकृत्वः शस्त्वा द्वादशविधा वा इमे प्राणाः सप्त शीर्षण्या द्वौ स्तन्यौ त्रयोऽवाञ्चोऽत्र वै प्राणा आप्यन्तेऽत्र संस्क्रियन्ते तस्मादेनामत्रोत्सृजति, इति।**

---

१ क. °र्ति यक्कलोम°। २ ग. घ. पादमवसायान्ते।

तां सूददोहसं द्वादशवारं पठित्वा तत ऊर्ध्वमत्र वशशंसनस्थाने परित्यजेत् । न त्वित ऊर्ध्वमूरुभागस्थाने तां सूददोहसं पठेत् । शस्त्रपक्षिणः पूर्वोक्ता एकादशावयवा आत्मा ग्रीवा शिरो विजवो द्वौ पक्षौ पुच्छं तृचाशीतिरूपाणि त्रीण्यन्नानि वशाख्य-मुदरं चेति, तत्र सर्वत्र सूददोहाः सकृत्पठिता पुच्छे तु धाय्यायाः पुरस्तादुपरिष्टाच्च द्विः पठिता, एवं द्वादशावृत्तिः । शरीरगता इमे प्राणाश्च च्छिद्रभेदेन द्वादशविधाः । शिरसि सप्त च्छिद्राणि, स्तनयोर्द्वे छिद्रे, नाभ्यां पायुगुदयोश्च त्रीणि । एतेषु द्वादशसु च्छिद्रेष्वेव सर्वे प्राणाः प्राप्यन्ते । अत एव मन्त्रात्मना ते प्राणाः संस्क्रियन्ते । यस्मा-द्द्वादशविधप्राणसाम्यमत्र समाप्तं तस्मादेनामृचमत्र परित्यजेत् । न तूपरितन ऊरुभागे पठेत् ।

उदरभागमुक्त्वा शस्त्रपक्षिण ऊरुभागं विधत्ते—

**इन्द्राग्नी युवं सु न इत्यैन्द्राग्ना ऊरू उर्वष्ठीवे प्रतिष्ठे, इति ।**

“ इन्द्राग्नी युवम् ” इत्यादिसूक्तं द्वादशर्चं तच्च शस्त्रपक्षिण ऊरुत्वेन पठनीयम् । अस्मिन्सूक्ते याविन्द्राग्नी प्रतीयेते तयोः संबन्धिनौ पक्षिण ऊरू । “ इन्द्राग्नी वै देवा-नामोजिष्ठौ बलिष्ठौ ” [ तै० ब्रा० का० ३ प्र० ८ अ० ७ ] इति तयोः प्रबलत्व-श्रवणादूर्वोश्च गमनादिव्यवहारहेतुत्वेन प्रबलत्वात् ।

[एतत्सूक्तगतानामृचां षट्पदत्वं प्रशंसति—]

**ताः षट्पदा भवन्ति प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्वि-प्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, इति ।**

अस्मिन्सूक्ते द्वितीयस्या अन्तिमायाश्च विशेषस्य वक्ष्यमाणत्वाद्या अवशिष्टा दशर्चः सन्ति ताः प्रत्येकं षट्पदा भवन्ति । तच्च प्रतिष्ठार्थमेव संपद्यते । तत्कथमिति तदु-च्यते—लोके मनुष्यः पादद्वयेन भूमौ प्रतितिष्ठति । पशवस्तु चतुष्पादा वर्तन्ते । एवं सत्यत्रापि तत्तेन पादषट्कपाठेन पादद्वयोपेतं यजमानं चतुष्पात्सु प्रतिष्ठितं करोति ।

द्वितीयायां—“न हि वां वव्रयामहे” [ ऋ० सं० म० ८ सू० ४० ऋ० २ ] इत्येतस्यामृचि विशेषं विधत्ते*—

**द्वितीया सप्तपदा भवति तां गायत्रीं चानुष्टुभं च करोति ब्रह्म वै गायत्री वागनुष्टुब्ब्रह्मणैव तद्वाचं संदधाति, इति ।**

---

इन्द्राग्नी युवं सु०—ऋ० सं० म० ८ सू० ४० ऋ० १ ।

---

* क. ख. पुस्तकयोरेतदग्रे—“ एकस्मिन्पादेऽवसायोत्तरस्मिन्पादे प्रणवप्रयोगः पादशं-सनम् । इत्यधिकम् ।

द्वितीयस्या ऋचः संबन्धिभिः सप्तभिः पादैर्गायत्रीं कृत्वा शंसेत् । पादद्वयेऽवसाय तृतीयपादे प्रणवो गायत्रीकरणम् । अवशिष्टेन पादचतुष्टयेनानुष्टुभं कृत्वा शंसेत् । पादद्वयेऽवसाय चतुर्थपादे प्रणवप्रयोगोऽनुष्टुप्करणम् । तत्र या त्वत्र निष्पाद्या गायत्री सा ब्रह्मैव "तत्सवितुर्वरेण्यम्"—[ ऋ० सं० म० ३ सू० ६२ ऋ० १० ] इत्यनया गायत्र्या परब्रह्मणः प्रतिपादितत्वात् । या तु पादचतुष्टयसंपन्नाऽनुष्टुप्सा वाग्रूपा वाग्विशेषाणां मध्ये प्रशस्तत्वात् । गायत्र्यनुष्टुभोः संपादनेन परब्रह्मणैव सह वाग्देवता संयोजिता भवति ।

[*अन्तिमाया विशेषं विधत्ते—

**त्रिष्टुभमन्ततः शंसति वीर्यं वै त्रिष्टुब्वीर्येणैव तत्पशून्परिगच्छति तस्मात्पशवो वीयमनूपतिष्ठन्त ईर्यतां चैवाभ्युत्थानं च, इति ॥ ]**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥ ( २० )**

अन्ततः सूक्तस्यावसाने या त्रिष्टुप्छन्दस्काऽऽम्नाता तां त्रिष्टुभः समयेनैव शंसेत् । ( +तदेव त्रिष्टुप्समयः । ) त्रिष्टुभो वीर्यहेतुत्वाद्वीर्यरूपत्वं तत्तेन त्रिष्टुप्शंसनेनायं पुरुषः स्वसामर्थ्येनैव पशून्परितः प्राप्नोति । यस्मादेवं तस्माल्लोके पशवो वीर्यमनूपतिष्ठन्ते वाक्पारुष्येण दण्डपारुष्येण वा गोपालवीर्यमवधार्य प्रत्याव्रजन्ति । तथा तद्वीर्यवशादीर्यतां च शयनादभ्युत्थानं च प्राप्नुवन्त्ये(*व न) वेति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥ ( २० )

---

अथ द्वितीयः खण्डः । ( एकविंशः )

---

[ अथ शस्त्रपक्षिणोऽन्यावयवविधानार्थं सूक्तान्तरविधानार्थं च खण्डान्तरारम्भः । ] तस्य चैवाऽऽरम्भे सूक्तान्तरं विधत्ते—

**प्र वो महे मन्दमानायान्धस इत्यैन्द्रे निष्केवल्ये**

---

प्र वो महे०—ऋ० सं० म० १० सू० ९० ऋ० १ ।

---

* एतच्चिह्नान्तर्गतो मूलातिरिक्तो ग्रन्थः प्रकल्प्य मूलग्रन्थश्च मूलपुस्तकेभ्य उद्धृत्यात्र निवेशितः । + एतच्चिह्नान्तर्गतो ग्रन्थोऽधिकः । * एतच्चिह्नान्तर्गतमधिकम् । अथवा वाशब्दस्थाने नशब्दं पठित्वा योज्यम् ।

---

१ ख. ग. घ. °तू । को नाम गा° ।

निविदं दधाति प्रत्यक्षाद्ध्येव तदात्मन्वीर्यं धत्ते, इति ।

"प्र वो महे" इत्यादिकं सप्तर्चं सूक्तं तत्रेन्द्र एव नाम[?] तदाद्यादि[?] निष्केवल्यशस्त्रं प(पा)ठ्यम् । तत्रेदानीं निवित्संज्ञकं तदवशेषज्ञानं (?) प्रक्षिपेत् । इन्द्रो देवः सोम पिन्वमान इत्यादिकं निवित्पदजातं निवित्संज्ञके संघे पठितम् । सूक्तगतासु सप्तस्वृक्षु चतस्रः पठित्वा तिस्रोऽवशेष्य मध्ये निविदं दध्यात्तत्तेन निवित्प्रक्षेपेण प्रत्यक्षाद्ध्येव मुख्यमेव वीर्यमत्र शस्त्ररूपे पक्षिणि संपादयति ।

तत्सूक्तगतानामृचां छन्दोद्वयं दर्शयति—

तास्त्रिष्टुब्जगत्यो भवन्ति, इति ।

आदौ पञ्च त्रिष्टुभ उत्तरे द्वे जगत्यौ । यद्वा प्रथमा सप्तमी चोभे जगत्याववशिष्टास्त्रिष्टुभः । तदाहानुक्रमणिकाकारः—"प्र वो महे सप्त द्विजगत्याद्यन्तम्" इति ।

सप्तसु च्छन्दोद्वयविशिष्टास्वृक्षु निवित्प्रक्षेपं प्रश्नोत्तराभ्यां विशदयति—

तदाहुरथ कस्मात्त्रिष्टुब्जगतीषु निविदं दधातीति न ह वा एतस्याह्न एकं छन्दो निविदं दाधार न विव्याचेति तस्मात्त्रिष्टुब्जगतीषु निविदं दधाति, इति ।

[ *प्रकृतस्याह्नो निविद्वैशिष्ट्यं त्रिधा विधत्ते—

तदेतदहस्त्रिनिवित्कं विद्याद्वशो निविद्वालखिल्या निविन्निविदेव निविदेवमेनत्त्रिनिवित्कं विद्यात्, इति ।

सूक्तान्तरशंसनं विधत्ते—

अथ सूक्ते वनेन वायो न्यधायि चाकन्यो जात एव प्रथमो मनस्वानिति, इति ।

शंसने फलविशेषं दर्शयति—

तयोरस्त्यन्ने समस्य यदसन्मनीषा इत्यन्नाद्यस्यावरुद्ध्यै, इति ।

अन्यासामृचां शंसनं सफलं विधत्ते—]

अथाऽऽवपनमेते अन्तरेणैन्द्रीणां दशतीनां त्रिष्टुब्जगतीनां संपन्नानां यावतीरावपन्ते तावन्त्यूर्ध्वमायुषो वर्षाणि जीवन्त्येतेन हैवाऽऽवपनेनाऽऽयुराप्यते, इति ।

---

वनेन वा०—ऋ० सं० म० १० सू० २९ ऋ० १ । यो जातः प्रथमः०—ऋ० सं० म० २ सू० १२ ऋ० १ ।

---

* एतच्चिह्नान्तर्गतो मूलातिरिक्तो ग्रन्थः प्रकल्प्य मूलग्रन्थश्च मूलपुस्तकेभ्य उद्धृत्यात्र निवेशितः ।

---

१ ख. ग. घ. °मकं त° ।

**अथ पूर्वयोः** सूक्तयोरेकस्य शंसनानन्तरमेते अन्तरेणैतयोः "वनेन वा" [ ऋ० सं० म० १० सू० २९ ऋ० १ ] "यो जातः" [ ऋ० सं० म० २ सू० १२ ऋ० १ ] इति सूक्तयोर्मध्ये कासांचिदिन्द्रदेवताकानां त्रिष्टुब्जगत्याख्यच्छन्दोद्वययुक्तानां स्वबुद्धिकौशलेन बृहतीत्वमापादितानामृचां मध्ये **यावतीर्ऋच आवपेत्तावन्ति वर्षाणि** कृप्ताच्छतसंवत्सरादायुष ऊर्ध्वं यजमाना जीवन्ति । **एतेन**-र्गावपनेनैवावश्यमायुः प्राप्यते । अत्र बुद्धिकौशलेन त्रिष्टुभां जगतीनां कथं बृहतीत्वसंपत्तिवश(?) उच्यते । तिसृषु बृहतीषु चतुष्टये(?) संपादिते सति* ।

सजनीयसूक्तस्य शंसने फलविशेषं दर्शयति—

**प्रजां मे पशवोऽर्जयन्नित्येव सजनीयमनु शंसति, इति ।**

मदीयां पुत्रादिरूपां **प्रजां** गवाश्वादयः +पशवो मार्जयन्नित्यभिप्रेत्याऽऽवपनमनु **सजनीयसूक्तं शंसेत् ।**

अथ—"त्यमू षु" [ ऋ० सं० म० १० सू० १७८ ऋ० १ ] इत्येतत्सूक्तं तृचरूपं विधत्ते—

**ताक्ष्यं शंसति स्वस्त्ययनं वै ताक्ष्यः स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते, इति ।**

ताक्ष्र्यो गरुडः [१] स एवैष देवो यस्य "त्यमू षु" इत्यादिसूक्तस्य तत्सूक्तं **ताक्ष्यं शंसेत्** । तस्मिन्सूक्ते प्रतिपाद्यो यस्ताक्ष्यः सोऽयं **स्वस्त्ययनं वै** क्षेमप्राप्तिमेव संपादयतीति शेषः । अतस्तत्सूक्तं **स्वस्तितायै** संपद्यते यस्मात्तस्मादयं होता तत्तेन शंसनेन **स्वस्त्ययनमेव** क्षेमप्राप्तिमेव कुरुते ।

तत ऊर्ध्वम्—"इन्द्रो विश्वं विराजति" इति । तस्या एकपदाया ऋचः शंसनं विधत्ते—

**एकपदां शंसत्येकधेदं सर्वमसानीत्यथो सर्वा छन्दस्कृतिमाप्नवानीति, [इति] ।**

एकेनैव प्रयत्नेनेदं **सर्वमसानि** प्राप्तव्यं फलमाप्नवामीत्यभिप्रेत्य **तामेकपदां शंसति** । अपि च **सर्वां छन्दस्कृतिं** सर्वेषामपि च्छन्दसां संपादनं प्राप्नवानीत्येतां शंसेत् । न ह्येकपदाया अर्वाचीनं किंचिच्छन्दोऽस्ति । उत्तरेषु तु द्विपदादिषु सर्वेष्वपि च्छन्दःस्वेकपदम् ।

---

* एतदग्रे त्रुटितं किंचित् । + पशवोऽर्जयन्नित्येव पाठोऽपेक्षितः ।

---

१ क. ख. 'क्ते ससूक्तो प्र° ।

अथ—" इन्द्रं विश्वाः " [ ऋ० सं० म० १ सू० ११ ऋ० १ ] इत्यादिकमष्टर्चं सूक्तं प्रयोगप्रकारविशेषयुक्तं विधत्ते—

**इन्द्रं विश्वा अवीवृधन्निति पदानुषङ्गास्ताः सप्तानुषजति सप्त वै शीर्षन्प्राणाः शीर्षन्नेव तत्प्राणान्दधात्यष्टमीं नानुषजति वागष्टमी नेन्मे वाक्प्राणैरनुषक्ताऽसदिति तस्माद्रु सा वाक्समानायतना प्राणैः सत्यननुषक्ता,** इति ।

" **इन्द्रं विश्वाः** " इत्यस्मिन्नष्टर्चे सूक्ते पादानां परस्परमनुषङ्गः कर्तव्यः । तत्र सूक्तस्य यः प्रथमोऽर्धर्चो यश्चान्तिमस्तावुभावर्धर्चौ यथाध्ययनमेव पठनीयौ न त्वनुषज(ञ्ज)नीयौ । तयोर्मध्ये ये चतुर्दशार्धर्चास्तेष्वेकैकपादान्तरितत्वेन परस्परानुषङ्गः कर्तव्यः । तद्यथा—प्रथमायामृचि यस्तृतीयः पादस्तं द्वितीयस्यामृचि प्रथमपादेन संयोज्यैकोऽर्धर्चः कर्तव्यः । तथा प्रथमायामृचि यश्चतुर्थः पादः सोऽयं द्वितीयस्यामृचि द्वितीयपादेन संयोजनीयः । एतेनार्धर्चद्वयेनर्गेका संपद्यते । अनेनैव प्रकारेण सूक्तस्याऽऽद्यन्तयोरर्धर्चयोर्मध्यगतास्ताः **सप्तर्चः** परस्परमनुषजेत् । शिरसि च्छिद्रगताः **प्राणाः सप्तैव** तेन सप्तानामनुषङ्गेण शिरस्येव प्राणान्संपादयति । **अष्टमीशब्देन** सूक्तस्य चरमोऽर्ध एको विवक्षितस्तस्यानुषङ्गो नास्ति । उपरितनपादस्य कतमस्याप्यभावात् । अत एव **शौनकः पञ्चमे**—" प्रथमायाः पूर्वमर्धर्चं शस्त्वा " [ ऐ० आ० ५ अ० ३ ख० १ ] इत्यादिना " प्रकृत्या शेषः " इत्यन्तेन ग्रन्थेन सूक्तगतयोराद्यन्तयोरर्धर्चयोर्यथापाठमभिधाय मध्यगतानामेव चतुर्दशानामर्धर्चानां पादव्यतिषङ्गमुक्तवान् । केनाभिप्रायेणाष्टम्या व्यतिषङ्गो नास्तीति चेद्येनेयमृगष्टमी सा **वाग्रूपा** । अत एव **वाजसनेयिन**श्चक्षुरादीन्द्रियेषु गौतमभरद्वाजर्षिध्यानमधीयानाः " वागष्टमी ब्रह्मणा संविदाना" इत्येवं वाचोऽष्टमीत्वमामनन्ति । ईदृगष्टमी मदीया **वाक्प्राणै**रन्यै**रनुषक्ता** सती व्यतिषक्ता भवेदिति भीत्या तामष्टमीं नानुषजेत् । **नेदिति** निपातो भयद्योतनार्थः । यस्मादेवमष्टमीं नानुषजति **तस्मादेव** कारणात्साऽष्टमी वागन्यैः **प्राणै**र्जिह्वात्वगादिभिः **समानायतनै**काधारा **सत्यपि** स्वयम**ननुषक्ता** तैः सह नैव संकीर्णा किंतु विविक्ता सती शब्दमुच्चारयति ।

अथ—"पिबा सोममिन्द्र" [ ऋ० सं० म० ७ सू २२ ऋ० १ ] इत्यादिकानां विराट्छन्दस्कानां शंसनं विधत्ते—

**विराजः शंसत्यन्नं वै विराजोऽन्नाद्यस्यावरुद्ध्यै,** इति ।

विराट्छन्दसोऽन्नहेतुत्वादन्नत्वं तस्मात्तच्छंसनमन्नप्राप्तये संपद्यते । यद्यपि—"पिबा

---

इन्द्रं विश्वा अवीवृधन्०—ऋ० सं० म० १ सू० ११ ऋ० १ ।

सोमम्" [ ऋ० सं० म० ७ सू० २३ ऋ० १ ] इत्यादिकं नवर्चं सूक्तं तथाऽप्यन्तिमास्तिस्रः परित्यज्य प्राचीनाः षडेव पठेत् । अत एव शौनकः—" पिबा सोममिन्द्र मन्दतु त्वेति षट् " [ ऐ० आ० ९ अ० ३ ख० १ ] इत्याह ।

तत ऊर्ध्वं वसिष्ठदृष्टेन—"योनिष्ट इन्द्र सदने अकारि" [ ऋ० सं० म० ७ सू० २४ ऋ० १ ] इत्येतेन सूक्तेन निष्केवल्यशस्त्रस्य समापनं विधत्ते—

**वासिष्ठेन परिदधाति वसिष्ठोऽसानीति, इति ।**

अहं वसिष्ठः सर्वेषामतिशयेन निवासहेतुर्भवानीत्यभिप्रेत्य वासिष्ठसूक्तेन परिधानं कुर्यात् । परिधानं समापनम् ।

तत्र कंचिद्विशेषं विधत्ते—

**एष स्तोमो मह उग्राय वाह इति महद्वत्या रूपसमृद्धया, इति ।**

"योनिष्टे" [ ऋ० सं० म० ७ सू० २४ ऋ० १ ] इत्यादिकं षडर्चं सूक्तं तत्र षष्ठ्या परिधानं प्राप्तं तदपोह्य—"एष स्तोमः" [ ऋ० सं० म० ७ सू० २४ ऋ० ९ ] इत्यनया पञ्चम्या परिदध्यात् । सा च महद्वती मह उग्रायेति तत्र पठितत्वात्तस्मादियं रूपसमृद्धेति तया परिधानं न्याय्यम् । एतच्च शौनको विस्पष्टं दर्शयति—"योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसंतत्योपोत्तमया परिदधाति" [ ऐ० आ० ९ अ० ३ ख० १ ] इति ।

तस्याः परिधानीयाया द्वितीयपादे धुरीति पदं व्याचष्टे—

**धुरी वात्यो न वाजयन्नधायीत्यन्तो वै**
**धूरन्त एतदहरेतस्याह्नो रूपम् , इति ।**

येयं धूः सेयं रथस्यान्तोऽश्वयोजनस्थानम् । अस्य(त्र) हि धूरशब्दे(धूःशब्द) वाच्ये रथस्यान्तभागे ते(तौ) युग्यौ योज्येते । एतन्महाव्रताख्यमहश्च संवत्सरसत्रस्यान्त एतस्या ऊ(स्यो)र्ध्वमुदयनीयातिरात्रेणाह्नः समाप्यमानत्वात् । अतो धुरश्चान्तर(त्व)साम्याद्धूःशब्दयुक्तो मन्त्र एतस्याह्नः स्वरूपम् ।

तृतीयपादेऽर्कशब्दं प्रशंसति—

**इन्द्र त्वाऽयमर्क ईट्टे वसूनामित्यर्कवत्या रूपसमृद्धया, इति ।**

अर्ववाचकोऽयमर्कशब्दस्तच्छब्दयुक्तत्वादियमृग्रूपसमृद्धा, ततस्तया परिधानं युक्तम् ।

---

एष स्तोमो महे०—ऋ० सं० म० ७ सू० २४ ऋ० ९ । धुरी वात्यो न०—ऋ० सं० म० ७ सू० २४ ऋ० ९ । इन्द्र त्वाऽयमर्क ईट्टे०—ऋ० सं० म० ७ सू० २४ ऋ० ९ ।

चतुर्थपादयुक्तं प्रशंसति—

**दिवीव द्यामधि नः श्रोमतं धा इति यत्र ह क्व च ब्रह्मण्या वागुद्यते तद्धास्य कीर्तिर्भवति यत्रैवं विद्वानेतया परिदधाति तस्मादेवं विद्वानेतयैव परिदध्यात् , इति ।**

**इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके पञ्चमाध्याये द्वितीयः खण्डः ॥ २ ॥ ( २१ )**

हे देव नोऽस्माकं श्रोमतं श्रवणीयकीर्तिं दिवीव द्युलोके यथा संपादयसि तथा द्यामधि द्युलोकस्योपरि[१] सोमलोकादावपि धा निधेहि संपादयेत्यर्थः । एतस्य[२] पादस्य पाठेन यत्र क्वापि वेदशास्त्रविद्बहुले देशे ब्रह्मण्या वागुद्यते वेदनसंबन्धि वाक्यं पठ्यते तत्रास्य यजमानस्य कीर्तिः प्रसवति । यत्र यस्मिन्महाव्रते य एवं विद्वान्कीर्तिहेतुमृचं विद्वानेतयर्चा परिधानं करोति तस्मिन्महाव्रते य(त)स्य यजमानस्य कीर्तिर्भवतीति पूर्वत्रान्वयः । यस्मादेवं तस्या ऋचो महिमा भूयांस्तस्मादेवं विद्वान्मन्त्रमहिमानं जानन्पुमानेतयैवर्चा परिदध्यात् । निष्केवल्यं समापयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके पञ्चमाध्याये द्वितीयः खण्डः ॥ २ ॥ ( २१ )

---

अथ तृतीयः खण्डः । ( द्वाविंशः )

---

माध्यंदिनसवने शस्त(शंसित)व्यं निष्केवल्यं समापितं तृतीयसवने शस्तव्य(शंसित)स्य वैश्वदेवशस्त्रस्यर्ग्द्वयं विधत्ते—

**तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरावैकाहिकौ रूपसमृद्धौ, इति ।**

प्रतिपद्यते प्राप्यते शस्त्रं येन तृचेन सोऽयं प्रतिपत्स च तत्सवितुरित्यादिकस्तृचस्तं तृचमनुचरति तदनन्तरं पद्य(ठ्य)त इत्यनुचरोऽद्या नो देव सवितरित्यादिकस्तृचस्तावेतौ वैश्वदेवशस्त्रस्य प्रतिपदनुचरौ महाव्रतस्य प्रकृतिभूते विश्वजिदाख्य एकाहे तस्यापि मूलप्रकृतिभूतेऽग्निष्टोमाख्य एकाहे भवत इत्यैकाहिकावत एव स्वरूपेण समृद्धौ तस्मात्तृचौ कर्तव्यौ ।

---

दिवीव द्याम् —ऋ० सं० म० ७ सू० २४ ऋ० ६ । तत्सवितुर्वृणीमहे०—ऋ० सं० म० ५ सू० ८२ ऋ० १ । अद्या नो देव सवितः०—ऋ० सं० म० ५ सू० ८२ ऋ० ४ ।

---

१ ख. ग. घ. °रि म(स्व)र्लोका° । २ क. °स्य पाठे° ।

अनिष्टशान्तिहेतुत्वेन तृचद्वयं प्रशंसति—

**बहु वा एतस्मिन्नहनि किंच किंच वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति,** इति ।

पूर्ववद्व्याख्येयम् [ ऐ० आ० १—१—३ ] ।

प्रतिपदनुचरयोरूर्ध्वमेकं सूक्तं विधत्ते—

**तद्देवस्य सवितुर्वार्यं महदिति सावित्रमन्तो वै महदन्त एतदहरेतस्याह्नो रूपम्,** इति ।

" **तद्देवस्य** " इत्यादिकं सप्तर्चं सवितृदेवताकं सूक्तम् । **सवितुर्देवस्य** संबन्धि **वार्यं** सर्वैर्वरणीयं तत्तेजो **महत्**प्रौढम् । अस्मिन्पादे यन्महदित्युक्तं **तदन्तो वै** प्रार्थनीयस्य सर्वस्याप्यवसानभूमिः, न हि महत्त्वादूर्ध्वं किंचित्प्रार्थनीयमस्ति । **एतन्**महाव्रताख्यमप्यहः संवत्सरसत्र**स्यान्तो**ऽतोऽन्तत्वसाम्यादिदं सूक्तमेत**स्याह्नः स्वरूपम्** ।

सूक्तान्तरं विधत्ते—

**कतरा पूर्वा कतराऽपराऽयोरिति द्यावापृथिवीयं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपम्,** इति ।

" **कतरा** " इत्यादिकमेकादशर्चं सूक्तं द्यावापृथिवीदेवताकं शंसनीयम् । **तच्च समानोदर्कं** समान एकं उदर्को यस्य सूक्तस्य तत्समानोदर्कं तस्मिन्हि सूक्ते बहुष्वृक्षु " द्यावा रक्षतं पृथिवी नो अभ्वात् " इत्ययमेव चतुर्थः पादः पठितोऽत एकविधः । **एतन्**महाव्रताख्यमहश्च **समानोदर्कम्** । अत्रोदर्क उत्तरकालभावि फलं तच्च सर्वेषां समानं सर्वेऽपि महाव्रतमनुष्ठाय ब्रह्म प्राप्नुवन्ति । अत एव **शौनकेन**—" ब्रह्म भवति " [ ऐ० आ० ९ अ० ३ ख० ३ ] इत्युक्तम् । एवं च सति समानोदर्कसाम्यादेतत्सू[क्तमेतस्याह्नः स्वरूपम् ।

सू]क्तान्तरं विधत्ते—

**अनश्वो जातो अनभीशुरुक्थ्य इत्यार्भवम्,** इति ।

---

तद्देवस्य सवितुर्वार्यं०—[ ऋ० सं० म० ४ सू० ५३ ऋ० १ । ] कतरा पूर्वा कतराऽपरा०—ऋ० सं० म० १ सू० १८५ ऋ०१ । अनश्वो जातो०—ऋ० सं० म० ४ सू० ३६ ऋ० १ ।

---

१ ख. ग. घ. °क ऊर्ध्वोऽर्को ।

"अनश्वः" इत्यादिकं नवर्चमृभुदेवताकं सूक्तं द्यामृभवः पृथिवीं यच्च पुष्यथेति तत्र स्वयमाभीत्वा(स्वयमेवाऽऽभवत्वा)त् । तत्सूक्तं शंसेत् ।

तत्र प्रथमायामृचि द्वितीयपादे त्रिशब्दं प्रशंसति—

**रथस्त्रिचक्र इति पदे तत्त्रिवत्तदन्तो वै**
**त्रिवदन्त एतदहरेतस्याह्नो रूपम्**, इति ।

"रथस्त्रिचक्रः परिवर्तते रजः" इति द्वितीयपादस्तस्मिन्पादे यदेतत्त्रिशब्दोपेतरथविशेषणं त्रिचक्र इत्येतत्पदं विद्यते त्रिशब्दोऽस्मिन्पदेऽस्तीति त्रिवत्पदं तच्चान्तो वा अवसानभूमिरेव । यस्य रथस्य चक्रद्वयेना(यम)निर्वाहकं यत्र तस्य तृतीयं चक्रं संपाद्यते तावता निर्वाहो भवतीत्यभिप्रेत्य तत्त्रिवत्पदमन्त इत्युच्यते । अन्त एतदहरित्यादिकं पूर्ववत् [ ऐ० आ० १ अ० ९ ख० २ ] ।

सूक्तान्तरं विधत्ते—

**अस्य वामस्य पलितस्य होतुरिति वैश्वदेवं**
**बहुरूपं वा एतदहरेतस्याह्नो रूपम्**, इति ।

"अस्य वामस्य" इत्यादिकं द्विपञ्चाशदृचं सूक्तं विश्वे(श्व)देवदेवताकं पठेत् । तच्च बहुरूपं बह्वर्थप्रतिपादकत्वात् । तच्चानुक्रमणिकायां दर्शितम्—अस्य द्विपञ्चाशदल्पस्तवं त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा चेति । वैदिकमन्त्रादिना लौकिकैर्वृत्त्यादिना च विवृतत्वादह्नो बहुरूपत्वमतः साम्यादुभयोरानुरूप्यम् ।

यथोक्तस्य कृत्स्नस्य सूक्तस्य प्रसक्तिं वारयितुं विशिनष्टि—

**गौरीर्मिमाय सलिलानि तक्षतीत्येतदन्तम्**, इति ।

ऋचां चत्वारिंशति(त)मतिक्रम्यानन्तरभाविनी "गौरीः" इत्यादिका तदन्तमेव सूक्तभागं पठेन्न तूपरितनम् । अत एव **शौनकः**—"एकचत्वारिंशतम्" [ ऐ० आ० १ अ० ३ ख० २ ] इत्याह ।

सूक्तान्तरं विधत्ते—

**आ नो भद्राः क्रतवो यन्तु विश्वत इति वैश्व-**
**देवं निविद्धानमैकाहिकं रूपसमृद्धम्**, इति ।

---

रथस्त्रिचक्रः०—ऋ० सं० म० ४ सू० ३६ ऋ० १ । अस्य वामस्य०—ऋ० सं० म० १ सू० १६४ ऋ० १ । गौरीर्मिमाय०—ऋ० सं० म० १ सू० १६४ ऋ० ४१ । आ नो भद्राः—ऋ० सं० म० १ सू० ८९ ऋ० १ ।

---

१ ख. ग. घ. 'कनृत्यादि' । २ क. ख. ग. 'शतिमि' ।

" आ नः " इत्यादिकं दशर्चं विश्वे(श्व)देवदेवताकं सूक्तं पठेत् । अस्मिन्सूक्ते नवर्चः शस्त्वा दशमीमवशेष्य तन्मध्ये विश्वे देवाः सोमस्य मत्सन्नित्यादीनि निवित्पदानि धीयन्ते प्रक्षिप्यन्ते तस्मादेतन्निविद्धानं तच्च मूलप्रकृतावग्निष्टोम एकाहे समुत्पन्नत्वादैकाहिकं सूक्तं पठेत् । अत एव रूपसमृद्धम् ।

अरिष्टशान्तिहेतुत्वेन सूक्तं प्रशंसति—

**बहु वा एतस्मिन्नहनि किंच किंच वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति,** इति ।

पूर्ववद्याख्येयम् [ ऐ०आ० १ अ० १ ख० ३ ] ।

वैश्वदेवशस्त्रपर्यन्तं समाप्याग्निमारुतशस्त्रस्य प्रारम्भे पञ्चदशर्चं सूक्तं विधत्ते—

**वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपदन्तो वै धिषणाऽन्त एतदहरेतस्याह्नो रूपम् ,** इति ।

अत्र या धिषणा सा बुद्धिः श्रूयते । सेयमन्तो वै पर्यवस्थानभूमिरेव । सर्वस्य व्यवहारस्य बुद्ध्यधीनत्वात् । अन्त एतदहरित्यादि पूर्ववत् । [ऐ० आ० १ अ० ५ ख० २]

सूक्तान्तरं दशर्चं मरुद्देवताकं विधत्ते—

**प्र यज्यवो मरुतो भ्राजदृष्टय इति मारुतं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपम्,** इति ।

अस्मिन्नपि सूक्ते बहुष्वृक्षु—" शुभं यातामनुरथा अवृत्सत " इत्यस्यैव चतुर्थपादस्य पठितत्वात्समानोदर्कत्वम् । अन्यत्पूर्ववद्याख्येयम् ।

अथ सूक्तात्मिकामेकामृचं विधत्ते—

**जातवेदसे सुनवाम सोममिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्या स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते,** इति ।

जातवेदोनामिका देवता यस्या ऋचः सा जातवेदस्या तामृचं विधास्यमानस्य " इमं स्तोमम् " [ ऋ० सं० म० १ सू० ९४ ऋ० १ ] इत्यादिसूक्तस्य पुरस्ताच्छंसेत् । सा च स्वस्त्ययनं क्षेमप्राप्तिहेतुरतः स्वस्तितायै क्षेमप्राप्तये समर्था । तत्तेनर्क्पाठेन क्षेमप्राप्तिमेव संपादयति ।

---

वैश्वानराय धि०—ऋ० सं० म० ३ सू० २ ऋ० १ । प्र यज्यवो०—ऋ० सं० म० ५ सू० ५५ ऋ० १ । जातवेदसे०—ऋ० सं० म० १ सू० ९९ ऋ० १ ।

सूक्तान्तरं विधत्ते—

इमं स्तोममर्हते जातवेदस इति जातवेदस्यं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपमह्नो रूपम् , इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे प्रथमारण्यके पञ्चमाध्याये तृतीयः खण्डः ॥ ३ ॥ ( २२ )

इति बह्वृचब्राह्मणारण्यकाण्डे प्रथमारण्यके पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

इति बह्वृचब्राह्मणारण्यकाण्डे प्रथमारण्यकं समाप्तम् ॥ १ ॥

इममित्यादिकं षोडशर्चं जातवेदोदेवताकं सूक्तं पठेत् । तस्मिन्सूक्ते बह्वृक्षु "अग्ने सख्ये मा रिषामा वयं तव" इत्यस्य चतुर्थपादस्य पठितत्वात्समानोदर्कत्वम् । अन्यत्पूर्ववद्व्याख्येयम् । द्विरभ्यासोऽध्यायसमाप्त्यर्थः प्रथमारण्यकसमाप्त्यर्थः कर्मकाण्डसमाप्त्यर्थः(र्थश्च) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये प्रथमारण्यके पञ्चमाध्याये तृतीयः खण्डः ॥ ३ ॥ ( २२ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बृह्वृचब्राह्मणारण्यकाण्डभाष्ये प्रथमारण्यके पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरसायणामात्यकृतौ माधवीये वेदार्थप्रकाश ऐतरेयाऽऽरण्यकाण्डे प्रथमारण्यकं समाप्तम् ॥ १ ॥

---

( समष्ट्यङ्काः—आर० १ अध्या० ५ ख० २२ )

---

इमं स्तोम०—ऋ० सं० म० १ सू० ९४ ऋ० १ ।

# अथ द्वितीयारण्यकम् ।

## प्रथमोऽध्यायः ।

### तत्र प्रथमः खण्डः ।

यस्य[1] निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रथमारण्यके कर्म महाव्रतमुदीरितम् ।
संवत्सराख्यसत्रस्य शेषः पूर्णोऽत्र तावता ॥ २ ॥
तदीया[2] विकृतिः सर्वा प्रोक्तैवेति मनीषया ।
कर्मकाण्डं समाप्यैव वेदो ज्ञानं विवक्षति ॥ ३ ॥
आरण्यकं द्वितीयं च तृतीयं च तदात्मकम् ।
ज्ञानकाण्डं ततः सोपनिषदित्यभिधीयते ॥ ४ ॥
करोम्युपनिषद्व्याख्यां शंकराचार्यवर्त्मना ।
आचार्यस्य प्रसादेन संसारान्मुच्यतां बुधः ॥ ५ ॥

उपनिषच्छब्दो ब्रह्मविद्यामाचष्टे। सा हि विवित्सुं पुरुषमुपेत्य नितरामविद्यां सीदति विशीर्णां करोति, यद्वा ब्रह्मतां गमयति, अथवा रागद्वेषाववसादयति शिथिलीकरोति । ततः "षद्लृ विशरणगत्यवसादनेषु"[3] [भ्वा० ग० प०] इति प्रोक्तं धातोरर्थत्रयं तस्मिन्नुपनिषच्छब्दो विद्यते । तथाविधाया ब्रह्मविद्याया उत्पादकत्वाद्ग्रन्थोऽप्युपनिषदित्युच्यते। तस्योपनिषद्ग्रन्थस्य विषयप्रयोजनाधिकारिसंबन्धप्रामाण्यप्रमेयस्वरूपाणि निरूप्यन्ते। अद्वैतमात्मतत्त्वं विषयः । अनन्यलभ्यमानत्वात् । न हीदृशं तत्त्वमुपनिषदोऽन्येन केनापि प्रमाणेन लभ्यते । न तावच्चक्षुरादिजन्यं बाह्यं प्रत्यक्षं तत्त्वे प्रमाणम् । तत्त्वस्य रूपरसादिरहितत्वात् । नाप्यहं मनुष्य इति वा कर्ता भोक्ताऽहमिति वा मानसप्रत्यक्षं तत्त्वबोधकम् । तयोः क्रमेण स्थूलसूक्ष्मदेहविषयत्वात् । यत्त्वहं ब्रह्मेति मानसप्रत्यक्षं तच्छास्त्रजन्यत्वान्नोपनिषदो व्यतिरिक्तम् । नाप्यस्यानुमानं तत्त्वे प्रवर्तते, तद्व्याप्तस्य लिङ्गस्य कस्याप्यभावात्। न हि निर्धर्मके तत्त्वे किंचिल्लिङ्गं संभवति । शङ्क्यमानस्य यस्य कस्यापि लिङ्गस्य पक्षधर्मत्वाभावेनासिद्धत्वप्रसङ्गात्। आगमेऽपि कर्मकाण्डे तत्त्वं न प्रतीयते। तस्मादुपनिषदेव परिशिष्यते। अत एव श्रुतिः प्रत्यक्षादिगम्यत्वं निराकृत्योपनिषदेकगम्यत्वं दर्शयति—"नावेदविन्मनुते तं बृहन्तम्"

१ क. °स्य निःश्व° । २ ख. ग. °दीयवि° । ३ ग. °विधत्र° । ४ क. °आप्यस्य ।

[तै०ब्रा० ३।१२।९]इति। "तं त्वौपनिषदं पृच्छामि" [बृ० ३।९।२६] इति च।तथा सत्यनन्यलभ्यमौषधादिकं यथा चिकित्सादिशास्त्रस्य विषयस्तथा तत्त्वमद्वैतमुपनिषदो विषयः।प्रयोजनं चाऽऽत्मतत्त्वाविर्भावादिकम्। तत्र सर्वात्मकपरब्रह्मस्वरूपात्माविर्भावः प्रथमं फलम्। "आत्मनैवाऽऽत्मानं पश्यति" इति श्रुतेः। तत ऊर्ध्वमविद्याग्रन्थिर्विकीर्यते। "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह नान्यः" [मु० २।१।१०] इति श्रुतेः। निवृत्तायामावरणाविद्यायामन्तःकरणतादात्म्यग्रन्थिभेदश्चिद्रूपजडरूपत्वादिसंशयच्छेदो भाविजन्महेतुकर्मक्षयश्च भवति।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" [मु० २।२।८] इति श्रुतेः॥

इह लोकेऽपि हर्षशोकपरित्यागो भवति। "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" [का० २।१।१२] इति श्रुतेः। तथा काम्यमानस्य सत्यतत्त्वस्य प्राप्तत्वान्नियमितान्तःकरणत्वेन विषयदर्शनाभावाच्च कामविलयो भवति। "पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्र[1]विलीयन्ति कामाः" [मु० ३।२।२] इति श्रुतेः। तथा तस्य द्यूतादिस्थानिनी क्रीडाऽप्यात्मन्येव[2]। संध्यावन्दनाग्निहो[3]त्रादिरूपा क्रिया[4]ऽप्यात्मन्येव। "आत्मक्रीड आत्म[5]रतिक्रियावानेष ब्रह्मविदां व[6]रिष्ठः" [मु० ३।१।४] इति श्रुतेः। ईदृशस्य लौकिकवैदिककर्मकर्तव्याभावादयं कृतकृत्यः। "यत्पूर्णानन्दैकबोधं तद्ब्रह्माहमस्मीति कृतकृत्यो भवति" [परमहं० ३] इति श्रुतेः।

"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्मानसं तु तत्" इति स्[7]मृतेश्च॥

ए[8]तादृशस्य योगिनः सर्वदा मनसि *विद्यानिमित्त आनन्द आविर्भवति। "रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति" [तै० उ० २।७।१] इति श्रुतेः। सेयमुपनिषदः प्रयोजनपरम्परा द्रष्टव्या। संबन्धश्च कर्मकाण्डेन सह साध्यसाधनभावः। उपनिषदि[9] साध्यं तत्त्वज्ञानं प्रतिपाद्यते। कर्मकाण्डे तु चित्तसंस्काराय पापक्षयेण वा विविदिषोत्पादनेन वा तानि साधनान्यग्निहोत्रादिकर्माणि प्रतिपादिता[10]नि। अत्रैतं यथोक्तसंबन्धमसहमानाः प्रतिवादिनो बहुधोत्तिष्ठन्ति। तेषां मध्ये केचिद्ब्रह्मज्ञाननैरपेक्ष्येणैव मोक्षं वर्णयन्ति। निषिद्धकाम्ययोः कर्मणोः सर्वात्मना परित्यागेन भाविनोरुत्तमाधमजन्मनोरसंभवान्नित्यनैमित्तिकानुष्ठानेन प्रत्यवायानुदयात्प्रारब्धकर्मणो भोगेन विनाशाद्देहान्ते

---

* विभावित इति क. ख. पुस्तकयोः पाठान्तरम्।

---

१ ग. °मप्रवि°। २ क. ख. घ. °त्मनेव। ३ ख. °होत्ररू°। ४ क. ख. °याऽध्यात्म°। ५ क. ख. °त्मप्रति°। ६ क. ख. चरिष्ठः। ७ क. ख. स्मृतेः। ए°। ८ ग. घ. ङ. तादृशस्य। ९ घ. °दि हि सा°। १० ग. °नि। तत्रैवं।

मुक्तिरेव परिशिष्यत इति । तदयुक्तम् । अनन्तयोर्निषिद्धकाम्ययोः सर्वात्मना परित्यागासंभवान्नित्यनैमित्तिकयोरपि फलसद्भावशास्त्राज्जन्मान्तरकृतानां च बहुजन्महेतूनां संभवान्नास्ति ज्ञानमन्तरेण मुक्तिः । अन्ये तु ज्ञानप्राधान्येन वा कर्मप्राधान्येन वोभयप्राधान्येन वा ज्ञानकर्मणोः समुच्चयो मुक्तिहेतुरित्याहुः । तदयुक्तम् । परस्परविरुद्धयोः समुच्चयासंभवात् । निर्विकारात्मबुद्धिर्ज्ञानम्, अहं कर्ता ममेदं कुलमिति भ्रान्त्या कर्मप्रवृत्तिरिति तयोर्विरोधः । अपरे पुनर्ज्ञानस्यैव मुक्तिहेतुत्वेऽपि सोपानपङ्क्त्या हर्म्याधिरोहणन्यायेन संध्यावन्दनमारभ्य सहस्रसंवत्सरसत्रान्तेषु वैदिकेषु कर्मस्वनुष्ठितेषु पश्चाज्ज्ञानाधिकारमिच्छन्ति । तदप्ययुक्तम् । अल्पायुषां मनुष्याणां तदसंभवात् । अपरे पुनः [1]प्रपञ्चप्रविलापनेन कर्मकाण्डस्योपयोगमिच्छन्ति, स्वर्गकामो यजेतेत्यु[2]क्ते सत्यर्थाद्देहात्मभावस्य प्रविलाप्यमानत्वादिति तदसत् । बकबन्धप्रयासप्रसङ्गात् । यथा बकबन्धनकामस्तत्समीपे गत्वा तदानीमबद्ध्वा[3] शिरसि नवनीतं प्रक्षिप्याऽऽतपेन विलीनस्य नवनीतस्य चक्षुष्प्रवेशे सति निमीलितचक्षुष्कं बकं पश्चाद्बध्नाति तथाऽयं प्रप[4]ञ्चप्रविलापवादी साक्षाद्विलापकम्—"अस्थूलमनणु"[बृ० ३ । ८ । ८] इत्यादिकमुपनिषद्वाक्यमुपेक्ष्य विलापनस्यानभिधायकेन स्वर्गकामपदेनार्थाद्विलापयतीति व्यर्थोऽयं प्रयासः । एके तु वेदोक्तकृत्स्नकर्मभिस्तत्तत्फलेषु भुक्तेषु कामे प्रलीने सति पश्चा[5]ज्ज्ञानाधिकार इति वर्णयन्ति । तदप्ययुक्तम् । भो[6]गेन कामलयस्यासंभवात् ।

तथा च स्मर्यते—

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इति ॥

[ भा० आदि० अ० ८९ श्लो० १२ ]

तस्मान्मतान्तराणामयुक्तत्वाज्ज्ञानकर्मणोः साध्यसाधनरूपत्वा[7]त्प्रतिपा[8]द्यप्रतिपादकत्वमेव तयोः संबन्धः । अधिकारी[9] तत्र जिज्ञासुरेव न तु चिकीर्षुः । [10]यश्च चिकीर्षोरधिकारं मन्यते स प्रष्टव्यः । वेदान्ताधिकारी यत्कार्यं चिकीर्षति तत्किं कार्यसामान्यं किंवा कार्यविशेषः । नाऽऽद्यः । कार्यसामान्यस्य वेदान्तेष्वप्रतीतेः । सत्यज्ञानादिवाक्येषु कुर्यादितिपदस्यादर्शनात् । विशेषपक्षेऽपि कोऽसौ कर्तव्यो विशेषः किं वास[11]नानां निरोधः किंवा मनसो निरोध उत प्रतिपत्तिराहोस्वि[12]त्प्रसंख्यानम् । सर्वथाऽपि

---

१ क. ख. फलसाधनेन । २ क. ख. °जेयुरित्य° । ३ क. ख. °मीलव° । ४ ख. घ. °ञ्चविलयवा° । ५ क. ख. °श्चात्साधि° । घ. °श्चात्सामाधि° । ६ क. ख. °गे कामफलस्या° । ७ ग. °त्तत्प्रतिरूपत्वात्तत्प्रतिपादकमे° । ८ क. ख. °पादकमे° । ९ ग. घ. ङ. °री तत्त्वजि° । १० ग. घ. ङ. यस्तु चि° । ११ क ख. °नासंनि° । १२ ग. °स्वित्संख्या° ।

वेदान्तानां कार्यपरत्वं नोपपद्यते। सत्यज्ञानादिवाक्येषु यथोक्तवासनानिरोधादिविधे[1]रप्रतिभासात्। अनर्थनिवारकत्वेन सुषुप्त्यादौ[2] दृष्टत्वाद्वासनामनोनिरोधावपेक्षिताविति चेत्। एवं तर्हि सुषुप्त्यादिदृष्टान्तेनान्वयव्यतिरेकसिद्धत्वादेतौ शास्त्रेण न विधातव्यौ। नापि तृतीयः पक्षः। कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वेना[3]पुरुषतन्त्रायाः प्रमाणैकजन्यायाः प्रतिपत्तेर्विध्य[4]संभवात्। नापि चतुर्थः। शब्दयुक्त्यावृत्तिरूपस्य प्रसंख्यानस्य साक्षात्कारहेतु[5]त्वाभावात्। यथा प्रथमप्रवृत्ते शब्दयुक्ती साक्षात्कारं न जनयत एवमसकृदावृत्तेरपि। तस्मात्कार्यसामान्यस्य कार्यविशेषस्य वा वेदान्तैरप्रतिपाद्यत्वान्न चिकीर्षोरत्राधिकारः, किं तु सिद्धब्रह्मतत्त्वस्यैव प्रतिपाद्यत्वा[6]ज्जिज्ञासोरेवात्राधिकार इति स्थि[7]रम्। ननु जिज्ञासोरपि वेदान्ताः प्रमितिं न जनयन्ति तत्प्रामाण्यस्यैवाभावादिति चेत्। तत्र वक्तव्यम्। किं साधकाभावात्प्रामाण्याभाव आहोस्विदप्रामाण्यहेतुसद्भावात्। नाऽऽद्यः। स्वतः प्रामाण्याङ्गीकारेण साधकानपेक्षत्वात्। द्वितीयेऽपि किमबोधकत्वादप्रामाण्यमुत बाधितत्वादथ वाऽनुवादकत्वात्। नाऽऽद्यः। "आत्मा वा इदमेक एवाग्र आसीत्" [ऐ० आ० २ अ० १ ख० १] इत्याद्यवान्तरवाक्यानां(णां) "प्रज्ञानं ब्रह्म" [ऐ० २। ९। ३] इत्यादिमहावाक्यानां च श्रवणमात्रेण बोधोपलम्भात्। कर्मकाण्डोक्तज्योतिष्टोमादिवाक्यर्व[8]त्पदार्थानां संसर्ग एवात्रावबुध्यते न त्वखण्डार्थ इति चेन्नैवम्। "स एष नेति नेत्यात्मा" [बृहदा०] इत्यादित्वंपदार्थशोधकवाक्यैः "अस्थूलमनणु" [बृ० ३। ८। ८] इत्यादितत्पदार्थशोधकवाक्यैश्च शोधि[9]ततत्त्वंपदार्थस्य पुरुषस्याखण्डार्थ[10]त्वावबोधात्। नापि द्वितीयः। प्रत्यक्षानुमानविधिनिषेधशास्त्रादीनां मायाकल्पितभेदमाश्रित्य चरितार्थानां वास्तवाद्वैतबोधिवेदान्तबाधकत्वासंभवात्।

अत एवान्यत्रोक्तम्—

"वास्तवे ब्राह्मणे स्वप्ने कलिता शूद्रता यथा।
न विरुद्धा तथा भेदो नाद्वैतेन विरुध्यते" [वा० वृ०] इति॥

नापि तृतीयः। आत्मतत्त्वविषयस्य पुरोवादिनः प्रमाणान्तरस्याभावेनानुवादकत्वासंभवात्। वेदान्तसिद्धान्तमजानद्भिर्वादिभिर्लौकिकैश्चाहं मनुष्य इत्यादिभिः प्रमाणैः स्वस्वात्मग्रहणादस्ति पुरोवादिप्रमाणमिति चेत्। न। तेषां देहादिविषयत्वेनाऽऽत्मतत्त्वगोचरत्वं नास्तीति पूर्वमेवानन्यलभ्यं विषयं नि[11]रूपयद्भिरस्माभिः प्रतिपादितत्वात्। तस्मादप्रामाण्यकारणाभावाद्वेदान्तानां स्वतःसिद्धं प्रामाण्यं तत्सुस्थितम्। एवमप्या-

१ ख. °र्थविचार°। २ ग. सुप्तादौ। ३ क. °त्वेन परत°। ४ ग. °विद्यमानत्वा°। ५ क. ख. °तुताभा°। ६ ग. °त्वात्तज्जिज्ञा°। ७ क. ख. स्थितम्। ८ ख. ग. °वत्तदर्था°। ९ ख. ग. घ. °तप°। १० ग. °र्थतत्त्वात्व°। ११ ख. ग. निषेधद्भि°।

त्मनः स्वप्रकाशत्वेन घटादिवत्प्रमेयत्वं नास्तीति चेत् । मैवम् । घटादिग्राहकेष्वपि वास्तवेषु[1] ज्ञानेषु न्यायतो विचार्यमाणेष्वात्मन एव प्रमेयत्वात् । तथा हि—यत्प्रमातुमर्हं तत्प्रमेयं तदर्हत्वं चाज्ञातत्वादात्मन एव युज्यते न तु घटादेः । अज्ञानेनाऽऽवृतत्वमेज्ञातत्वम् । घटादयस्[3]त्वज्ञानकार्यत्वान्नाज्ञानेनाऽऽवृताः ।

अत एवान्यत्रोक्तम्—

"अज्ञातरज्जुकार्यस्य सर्पस्या[4]ज्ञातता न हि ।
अज्ञातब्रह्मकार्यस्य जडस्याज्ञातता कुतः ॥
रज्जुसर्पं न जानामि बोद्धुमिच्छामि मानतः ।
इति व्यवहृतिं प्राज्ञा नाङ्गी कुर्वन्ति केऽपि च ॥
किं चाज्ञातत्वतो लभ्यं तिरोधानं न चेतरत् ।
स्वयमेव तिरोभूते जडे काऽन्या तिरोहितिः ॥
आविर्भूते स्वरूपे तु[5] चैतन्येऽज्ञाननिर्मिता ।
तिरोधानाद्विशेषोऽस्ति शुभ्रवस्त्रे मषी यथा ॥
चन्द्रं मलिनयेद्राहुर्नीलमेघं[6] न तु क्वचित् ।
एवं चैतन्यमज्ञातं जडं त्वज्ञानदेहकम् ॥
अतोऽनुभव एवैको विषयो[7] ज्ञानलक्षणः ।
अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता ॥
अनुभूतिग्रहायैव प्रवृत्तान्यपि दृष्टया ।
सामग्र्याऽखिलमानानि गृह्णन्ति[8] जडसंयुताम् ॥
शुक्तिकाग्रहणायैव प्रवृत्तमपि लोचनम् ।
गृह्णीते रजतोपेतं शुक्त्यंशं दोषयोगतः ॥
वेदान्तेतरसामग्री दृष्टैषा चक्षुरादिका ।
तज्जा धीरत्र गृह्णाति स्फूर्तिं रूपादिसंयुताम् ॥
एवं च सति विभ्रान्तः कल्पिते रजते धियम् ।
प्रमाणं[9] मनुते यद्वद्रूपादौ मनुजस्तथा ॥
ब्रह्मण्यक्षादि[10]मानत्वमिति न्यायविदां मतम् ।
रूपादावेव तन्मात्व[11]मिति मूढधियो जगुः" [वाक्यवृ०] इति ॥

---

१ क. ख. °मेयत्वार्हं तच्च ज्ञा° । २ क. °मल्पतत्व° । ३ क. ख. °यस्तु ज्ञा° । ४ क. °ज्ञानता । ५ क. ख. तु चेतनाऽन्येन नि° । ६ क. °घं तु न क्व° । ७ ग. °यो ज्ञप्तिल° । ८ क. ख. °ह्णते जडसंयुतान् । शु° । ग. °ह्णतेऽखिलसंयुतान् । शु° । ९ क. प्रामाण्यं । १० क. ख. °ण्यज्ञादि° । ११ ग. °न्मानमि° । घ. °न्मात्रमि° ।

नन्वेवं सति विषयत्वनिरूपणाय पूर्वोक्तमनन्यलभ्यत्वं विपर्येतीति चेत् । न । मूढान्प्रत्यनन्यलभ्यत्वोपन्यासात् । ब्रह्मविद्दृष्ट्या तु सर्वैरपि प्रमाणैर्ब्रह्मैव प्रमीयते । अतः प्रमेयत्वं तस्य युक्तम् । किंचाऽऽनन्दस्वरूपत्वेन पुरुषार्थत्वादपि प्रमेयत्वं युक्तम् । तदेवं विषयप्रयोजनसंबन्धाधिकारि[1]प्रमाणप्रमेयाणां सद्भावाद्व्याख्यातुं योग्येत्युपनिषद्व्याख्या प्रारभ्यते । तत्राऽऽदौ परमपुरुषार्थकामिनां श्रोतॄणां तत्साधनरूपं मार्गमुपदिशति—

**एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम्**, इति ।

एतच्छब्दः संनिहितमर्थं परामृशति । स च द्विविधोऽतीत आगामी चेति । एष उभयविधोऽपि **पन्थाः** पुरुषार्थस्य मार्गः । साधनमित्यर्थः । कोऽयमतीतः[2] कश्चाऽऽगामीत्यपेक्षायां तदुभयं विस्पष्टं निर्दिश्यते । " अग्निमीळे " [ ऋ० सं० म० १ सू० १ ऋ० १ ] इत्यारभ्य "अह्नो रूपमह्नो रूपम् " [ ऐ० आ० १ अ० ५ ख० ३ ] इत्यन्तेनातीतसंनिहितग्रन्थेन यत्प्रतिपादितं तदेतत्कर्म " उक्थमुक्थमिति वै प्रजा वदन्ति " [ ऐ० आ० २ अ० १ ख० २ ] इत्यारभ्य " आचार्या आचार्याः " [ ऐ० आ० ३ अ० २ ख० ६ ] इत्यन्तेन संनिहितेनाऽऽरण्यकद्वयरूपेणोत्तरग्रन्थेन प्रतिपादितं यत्सगुणं निर्गुणं च तदेतद्ब्रह्मैतदुभयमपि पुरुषार्थसाधनम् । तत्र कर्मशब्देन तद्विषयज्ञानपूर्वकमनुष्ठानं विवक्षितम् । ब्रह्मशब्देन तु तद्विषयज्ञानमात्रम् । अत एव **मीमांसाभाष्ये भाष्यकारा** आहुः—"अभ्युदयफलं धर्मज्ञानं तच्चानुष्ठानापेक्षं निःश्रेयसफलं तु ब्रह्मज्ञानं न चानुष्ठानान्तरापेक्षम्" इति । अतीतानागतग्रन्थस्थयोः कर्मब्रह्मणोरुभयोरपि पुरुषार्थहेतुत्वे कुतः काण्डभेद इत्याशङ्क्य वैलक्षण्यं विषयभेदादित्युच्यते । यदेतदुत्तरकाण्डप्रतिपाद्यं ब्रह्म तदेतत्सत्यम[3]बाध्यम् । न हि तस्यान्यद्बाधकं प्रमाणं पश्यामः । पूर्वकाण्डोक्तं तु कर्म मिथ्यात्वाद्बाध्यम् । बाधकप्रमाणं च नेह नानाऽस्ति" [बृ० ४ । ४ । १६] इत्यादिकं बहुलमुपलभ्यते । मिथ्यात्वेऽपि[4] धीशुद्धिहेतुत्वादुपादेयमेव ।

यथोक्तस्योभयस्य मार्गत्वं द्रढयितुमयोगव्यावृत्तिमन्ययोगव्यावृत्तिं च विधत्ते—

**तस्मान्न प्रमाद्येत्तन्नातीयात्**, इति ।

**तस्मा**दुभयविधादाम्नायमार्गात्**प्रमादं न कु**र्यात् । कर्मानुष्ठानब्रह्मज्ञानयोरसंपादनं प्रमादः । तथा संपादयितुं प्रवृत्तेनाप्यालस्यादिना तत्परित्यागोऽपि प्रमाद एव । तदुभयं न कुर्यात् । अनेनायोगव्यावृत्तिरुक्ता । कृषिवाणिज्यादौ वा शास्त्रान्तरसिद्धे चैत्यवन्दनादौ वा पुरुषार्थसाधनत्वबुद्ध्या प्रवृत्तिस्तस्य पूर्वोक्तमार्गात्ययः सोऽयमन्ययोगः, तद्व्यावृत्तिस्तन्नातीयादित्यनेनोच्यते । तत्पूर्वोक्तमार्गरूपमुभयं नातिक्रामेत् ।

१ क. ख. ग. °रिप्रामाण्यप्र° । २ क. ख. °तीतो यश्चाऽऽ° । ३ क. ख. °त्सत्यं न बा° । ४ क. °पि बाधसिद्धि° । ख. °पि दुर्धीसिद्धि° । ग. °पि बाधासिद्धि° ।

तमेवानतिक्रमं स्वपक्षसाधनपरपक्षदूषणाभ्यां द्रढयति—

**न ह्यत्यायन्पूर्वे येऽत्यायंस्ते परा बभूवुः,** इति ।

**पूर्वे** महर्षयो व्यासवसिष्ठादयस्तमुक्तं पन्थानं **नैवात्यायन्**नात्यक्रामन् । **ये** तु नास्तिका अत्यक्रामंस्ते **पराबभूवुः** पराभूताः पुरुषार्थाद्भ्रष्टाः ।

ब्राह्मणेनोक्तस्यार्थस्य दार्ढ्याय मन्त्रमुदाहरति—

**तदुक्तमृषिणा प्रजा ह तिस्रो अत्यायमीयु-**
**र्न्य१न्या अर्कमभितो विविश्रे । बृहद्ध तस्थौ**
**भुवनेष्वन्तः पवमानो हरित आ विवेशेति,** इति ।

तत्पूर्वोक्तमार्गातिक्रमानतिक्रमयोर्बाधाबाधावित्येतदर्थजातम्[२] **ऋषिणा** केनचिन्मन्त्रदर्शिना पुरुषेण तन्मन्त्ररूपया वाचा कयाचिदुक्तम् । "प्रजा ह" [ ऋ० सं० म० ८ सू० १०१ ऋ० १४ ] इत्यादिको मन्त्रः । ब्राह्मणक्षत्रियविट्शूद्राः प्रजास्तासां भागचतुष्टयेन विभागत्रयवर्तिन्य**स्तिस्रः प्रजा** वैदिकमार्गश्रद्धारहिताः[३] सत्यो यथोक्तस्य मार्ग**स्यात्यायम**तिक्रमम**मीयुः** प्राप्ताः । लोके हि गुरुशास्त्रोपदेशरहितानां बाहुल्यमुपलभ्यते तत्प्रसिद्धिद्योतनार्थो हशब्दः । चतुर्थभागेऽवस्थितानां प्रजानां मध्येऽ**न्याः** काश्चित्प्रजा **अर्क**मर्चनीयमग्निम**भितो** निविविश्रे निविष्टास्तदुपासने प्रवृत्ता इत्यर्थः । **भुवनेष्वन्तः** सर्वेषु लोकेषु मध्ये **बृहत्**प्रौढं सर्वजगत्प्रकाशकं ह प्रसिद्धमादित्यमण्डलं **तस्थौ**, तन्मण्डलवर्तिनमप्यन्याः काश्चित्प्रजा अभितो निविष्टा इत्यन्वयः । **पवमानो** जगतः शुद्ध्यर्थं सर्वदा संचरन्वायु**र्हरितः** सर्वा दिश **आ विवेश** । तमप्यन्या अभितो निविष्टा इत्यन्वयः । **इति** शब्दो मन्त्रसमाप्त्यर्थः ।

तस्या ऋचः प्रथमपादं व्याचष्टे—

**प्रजा ह तिस्रो अत्यायमीयुरिति या वै**
**ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानी-**
**मानि वयांसि वङ्गावगधाश्चेरपादाः,** इति ।

**ताः** पूर्वमन्त्रोक्ता[४] **इमा** अस्माभिर्दृश्यमानाः श्रद्धारहिता**स्त्रिविधाः प्रजा याः** काश्चिद्वैदिकस्यातिक्रमं प्राप्ता**स्तानि** तथाविधप्रजानां शरीराणि तद्दोषफलं भोक्तुं प्रवृत्ता**नीमानि**स्माभिर्दृश्यन्ते । सामान्यतः प्रोक्तानां पुनर्वयांसीत्यादिना विशेषनिर्देशः । **वयांसि** पक्षिणः काकगृध्रादय आकाशे दृश्यन्ते । सोऽयं पक्षिसंघस्त्रिविधानां

---

प्रजा ह तिस्रो०—ऋ० सं० म० ८ सू० १०१ ऋ० १४ ।

---

१ ग. घ. °वाति । २ ग. घ. ङ. °चित्प्रोक्त । ३ ग. °केऽपि हि । ४ क. घ. ङ. पूर्वोक्ता ।

प्रजानामेको भागः। वङ्गा वनगता वृक्षा अवगधा अवन्ति मनुष्यादींस्रक्षान्ति तैर्गृध्यन्तेऽभिकाङ्क्ष्यन्त इति व्रीहियवाद्या ओषधयोऽवगधाः। "गृधु अभिकाङ्क्षायाम्" इति धातोर्गधशब्दनिष्पत्तिः। सोऽयमोषधिवनस्पतिरूपः प्रजानां द्वितीयो राशिर्भूमौ वर्तते। ईरपादा उर(रः)पादाः सर्पा भूबिलवासिनः सोऽयं तृतीयो राशिः। तदेतत्प्रजात्रयं वैदिकातिक्रमदोषजन्यं नरकमनुभवति।

द्वितीयपादं व्याचष्टे—

न्य१न्या अर्कमभितो विविश्र इति ता इमाः
प्रजा अर्कमभितो निविष्टा इममेवाग्निम्, इति।

योऽग्निराहवनीयादिरूपो दृश्यतेऽयमेवार्चनयित्वादर्क इत्यर्थः।

तृतीयपादं व्याचष्टे—

बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ
एव बृहद्भुवनेष्वन्तरसावादित्यः, इति।

बृहच्छब्देनाऽऽकाशे दृश्यमानमदस्तेजोमण्डलमेत्र विवक्षितम्। सर्वजगत्प्रकाशकत्वेन प्रौढत्वात्। तेन च मण्डलेन तत्रावस्थितोऽसावादित्य उपलक्षितः।

चतुर्थपादं व्याचष्टे—

पवमानो हरित आ विवेशेति वायुरेव
पवमानो दिशो हरित आविष्टः, इति॥

इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके प्रथमाध्याये प्रथमः खण्डः॥१॥

पादप्रक्षालननिष्ठीवनादिप्रदेशस्य शोषणेन शुद्धिहेतुत्वादयं वायुरेव पवमान इत्युच्यते। प्राच्यादिदिशस्तत्तत्कर्मसु विहिताः सत्योऽनुष्ठानवैकल्यं हरन्तीति हरिच्छब्देनोच्यन्ते। वायोर्दिक्षु संचारात्तत्राऽऽविष्टत्वम्। वैदिकातिक्रमं कृतवत्यः प्रजास्त्रिविधा अपि पक्ष्यादिरूपेण नरकजन्मानुभवन्ति, चतुर्थभागवर्तिन्यश्च श्रद्धायुक्ताः सत्य उत्तमलोकप्राप्त्यर्थमग्निवाय्वादिदेवता उपासत इत्येवं[४] हानिवृद्ध्योर्मन्त्रेणोक्तत्वाद्वैदिकमेतं पन्थानं सर्वथा नातिक्रामेदित्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके प्रथमाध्याये प्रथमः खण्डः॥ १ ॥

---

न्यन्या१ अर्कमभितो०—ऋ० सं० म० ८ सू० १०१ ऋ० १४। बृहद्ध तस्थौ०—ऋ० सं० म० ८ सू० १०१ ऋ० १४। पवमानो हरित आविवेश०—ऋ० सं० म० ८ सू० १०१ ऋ० १४।

---

१ घ. ङ. वनगा। २ ग. ईरपादा। ३ ख. ग. °क्रमे दो°। ४ क. °वं ज्ञानिवृद्धैर्म°। ग. °वं ज्ञानवृद्धैर्म°।

अथ द्वितीयः खण्डः ।

---

पूर्वोत्तरकाण्डार्थरूपो द्विविधो मार्ग उपदिष्टः । तत्र "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" [ बृ० उ० ६ । ४ । २२ ] इत्येवं विविदिषाहेतुत्वश्रवणात्प्रथममनुष्ठेयत्वेन पूर्वकाण्डे यज्ञादीनि कर्माण्युक्तानि । तैः कर्मभिरुत्पन्नायामपि विविदिषायाम् "दृश्यते त्वग्र्यया बुद्ध्या" [काठ० ३ । १२] इति श्रुतेरेकाग्रचित्तस्यैव ब्रह्मदर्शनेहेतुत्वात्तदैकाग्र्यसिद्ध्यर्थमस्मिन्काण्डे प्रथममुपासनमभिधीयते । तच्चोपासनं द्विविधम् । ब्रह्मोपासनं प्रतीकोपासनं चेति । ब्रह्मण एव गुणविशिष्टत्वेन चिन्तनं ब्रह्मोपासनम् । प्रबललौकिकपदार्थवासनोपेतस्य तत्परित्यागेन ब्रह्मणि चित्तस्याप्रवेशाद्ब्रह्मभावनया लौकिकवस्तुचिन्तनं प्रतीकोपासनम् । तच्च प्रतीकं द्विविधम् । यज्ञाद्बहिर्भूतं यज्ञाङ्गं चेति । तत्र महाव्रतान्तबहुविधयज्ञवासनावासितस्य यज्ञाङ्गे सहसा चित्तं प्रविशतीति मत्वा "उक्थमुक्थम्" इत्यादिनाऽङ्गावबद्धमुपासनमुच्यते । एतेष्वङ्गावबद्धेषूपासनेषु पञ्च विचारा मीमांसायां प्रवृत्ताः । ऋत्विज एवात्राधिकारो न यजमानस्येत्येको विचारः । कर्माङ्गेषु प्रतीकेष्वेव पृथिव्यादिदेवतादृष्टिर्न तु देवतायामङ्गदृष्टिरिति द्वितीयः । यस्यां शाखायां यद्ध्यानं विहितं तच्छाखागत एवाङ्गे तदिति नास्ति नियमः किंतु शाखान्तरगतेऽप्यङ्ग इति तृतीयः । यावन्त्यङ्गावबद्धान्युपासनानि सन्ति तावन्ति सर्वाण्यनुष्ठेयानीति नास्ति नियमः किं त्वेकं बहूनि वा स्वेच्छयेति चतुर्थः । कर्मानुष्ठानकालेऽङ्गावबद्धोपासनान्यवश्यमनुष्ठेयानीति नास्ति नियमः किंतु स्वेच्छया तदनुष्ठानमिति पञ्चमः ।

तत्र प्रथमो विचारस्तृतीयाध्यायस्य चतुर्थपादेऽभिहितः—

"अङ्गध्यानं याजमानमार्त्विज्यं वा यतः फलम् ।
ध्यातुरेव श्रुतं तस्माद्याजमानमुपासनम् ।
ब्रूयादेवंविदुद्गातेत्यार्त्विज्यं तु स्फुटं श्रुतम् ।
क्रीतत्वादृत्विजस्तेन कृतं स्वामिकृतं भवेत् ।

अङ्गावबद्धेषूपासनेषु यजमान एवानुष्ठाता नर्त्विक्, ध्यातुः फलश्रवणात् । फलं तु यजमानस्यैवोचितं स्वामित्वात् । तस्मात्फलिनो यजमानस्यैव ध्यातृत्वमिति प्राप्ते ब्रूमः । एवं विदुद्गाता ब्रूयादिति वाक्यशेषादुद्गातुरुपासकत्वं स्पष्टं श्रूयते । युक्तं चैतत् । ऋत्विजामशेषकर्तव्यानुष्ठानाय यजमानेन क्रीतत्वात् । तस्मादृत्विक्कृतमपि यजमानेनैव कृतमिति फलितत्वोपपत्तेरुपासनमृत्विजां कर्म ।"

---

१ ख. °स्तुनश्चिन्त° । २ ख. ग. तत्र । ३ ख. °र्त्विज्यत्वफलं श्रु° । घ. ङ. °र्त्विज्यत्वं स्फु° । ४ क. तु फलं श्रु° । ५ ग. स्मृतम् । ६ क. ख. ग. °ते । तस्य यु° । ७ घ. ङ. °र्तव्यतानुज्ञाना° ।

द्वितीयो विचारश्चतुर्थाध्यायस्य प्रथमपादे दर्शितः—

"आदित्यादावङ्गदृष्टिरङ्गे रव्यादिधीरुत ।
नोत्कर्षो ब्रह्मजत्वेन द्वयोस्तेनैष्टि(च्छि)की मतिः ।
आदित्यादिधियाऽङ्गानां संस्कारे कर्मणः फले ।
युज्यतेऽतिशयस्तस्मादङ्गेष्वर्कादिदृष्टयः ॥

"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादित्यदेवतां प्रतीकं कृत्वा कर्माङ्गभूतोद्गीथदृष्टिः कर्तव्या । विपर्ययेण वा कर्माङ्ग आदित्यदृष्टिः । आदित्योद्गीथयोरुभयोर्ब्रह्मकार्यत्वेन पूर्वाधिकरणोक्तोत्कर्षन्यायावतारेण नियामकाभावात् । इति प्राप्ते ब्रूमः—आदित्यदृष्ट्या कर्माङ्गं संस्कर्तव्यम् । तथा सति दृष्टिभिः संस्कृतस्य कर्मणः फलातिशयसंभवात् । विपर्यये तु कर्माङ्गै[1]रादित्यदेवतायां संस्कृतायां किं तत्करिष्यति । न ह्यक्रियात्मिका देवता फलस्य साधनं भवति, अन्यथा देवतायाः साधारणत्वेन यजमानायजमानयोः फलसाम्यप्रसङ्गात् । तस्मादङ्गेष्वादित्यादिदृष्टयः कर्तव्याः" ।

तृतीयो विचारस्तृतीयाध्यायस्य तृतीयपादे दर्शितः—

"उक्थादिधीः स्वशाखाङ्गेष्वेवान्यत्रापि वा भवेत् ।
सांनिध्यात्स्वस्वशाखाङ्गेष्वेवासौ व्यवतिष्ठते ॥
उक्थोद्गीथादिसामान्यं तत्तच्छब्दैः प्रतीयते ।
श्रुत्या च संनिधेर्बाधस्ततोऽन्यत्रापि यात्यसौ ॥

अङ्गावबद्धोपासनेषूक्थशस्त्रस्य कर्माङ्गे[3] पृथिव्यादिदृष्टिरैतरेयोपनिषदि श्रूयते । उक्थं तु कौषीतक्यादिशाखान्तरेष्वपि विहितम् । तत्र पृथिवीदृष्टिरैतरेयगतोक्थ एव व्यवतिष्ठत उत कौषीतक्यादिष्वनुवर्तत इति संदेहे सति संनिहितत्वात्स्वशाखायामेव व्यवस्थितेति प्राप्ते ब्रूमः । उक्थशब्दस्तावन्मुख्यया वृत्त्या सर्वशाखागतमुक्थसामान्यमाचष्टे । तत उक्थश्रुतिवशात्सर्वशाखागतोक्थेष्वनुवृत्तिः प्राप्ता । श्रुतिः संनिधेर्बलीयसी, तस्मात्क्वचिद्विहिता धीः शाखान्तरेष्वनुगच्छति" ।

चतुर्थो विचारस्तत्रैव दर्शितः—

"समुच्चयोऽङ्गबद्धेषु याथाकाम्येन वा मतिः ।
समुच्चितत्वादङ्गानां त्व(त)द्बद्धेषु समुच्चयः ॥
ग्रहं गृहीत्वा स्तोत्रस्याऽऽरम्भ इत्यादिवन्न हि ।
श्रूयते सहभावोऽत्र याथाकाम्यं ततो भवेत् ॥

द्विविधानि प्रतीकानि, लौकिकानि कर्माङ्गाणि च । तत्र लौकिकेषु प्रतीकेषु

---

१ ख. °र्माङ्गदृष्टेरा° । २ घ. ङ °ध्यात्तु स्वशा° । ३ घ. ङ. °र्माङ्गैः पृ° । ४ ख. ग. घ. ङ. °त्वात्तु स्वशा° । ५ क. °नां संबन्धेषु । ख. ग. °नां तद्बाधेषुः ।

निर्णयः पूर्वोक्तः । अत्र कर्माङ्गेषु समुच्चययाथाकाम्ये विचार्येते । तत्र कर्माङ्गाणि समुच्चित्यैवानुष्ठेयतया प्रयोगविधिप्रापितानि । तथा चाङ्गतन्त्रत्वादङ्गावबद्धोपासनानामपि समुच्चयनियम इति प्राप्ते ब्रूमः—"ग्रहं[1] वा गृहीत्वा चमसं[2] वोन्नीय स्तोत्रमुपाकुर्यात्" "स्तुतमनुशंसति" इत्यादौ यथा ग्रहस्तोत्रशंसनादीनां नियतपौर्वापर्येण सहभावः श्रुतो न तथोपासनेषु श्रूयते । तस्माद्विकल्पसमुच्चययोर्याथाकाम्यम् ।

पञ्चमो विचारस्तत्रैव दर्शितः—

"नित्या अङ्गावबद्धाः स्युः कर्मस्वनियता उत ।
पर्णवत्क्रतुसंबन्धो वाक्यान्नित्यास्ततो मताः ॥
पृथक्फलश्रुतेर्नैता नित्या गोदोहनादिवत् ।
उभौ कुरुत इत्युक्तेः कर्मोपास्यनुपासिनोः ॥

उद्गीथादिषु कर्माङ्गेषु प्रतिमादिवत्प्रतीकभूतेषु[3] विधीयमाना देवतोपास्तयोऽङ्गावबद्धाः । ताश्च कर्मस्वनुष्ठीयमानेषु कर्माङ्गवन्नियमेनानुष्ठातव्याः । कर्मप्रकरणमारभ्याध्ययनाभावेऽपि[4] वाक्यात्क्रतुसंबन्धोपपत्तेः । यथा—"यस्य पर्णमयी जुहूर्भवति" इत्यनारभ्याधीतस्याव्यभिचरितजुहूद्वारा वाक्यात्क्रतुसंबन्धः, तथा—"य एवं विद्वानुद्गायति" "एवं विद्वान्साम गायति" इत्यादिष्वव्यभिचरिततत्क्रतुसंबन्धिसाम्नो(मो)द्गीथादिद्वारा तदुपासनानां क्रतुसंबन्धः प्रतीयते । तस्मात्कर्मसु नियता उपास्तय इति प्राप्ते ब्रूमः—गोदोहनादिवदनियता उपास्तयः । यथा "चमसेनापः प्रणयेत्" "गोदोहनेन पशुकामस्य" इत्यत्राप्प्रणयनमाश्रित्य विधीयमानमपि गोदोहनमक्रत्वर्थत्वादैच्छिकं न तु प्रणयनादिवन्नियतं तथा कर्माङ्गाण्याश्रित्य विधीयमाना उपास्तयो न क्रत्वर्थाः किंतु पुरुषार्थाः । कर्मफलात्पृथक्फलश्रवणात् । "वर्षति हास्मै" इति पञ्चविधे सामनि वृष्टिदेवतामुपासीनस्य कामवृष्टिः क्रतुफलात्पृथक्फलत्वेन श्रूयते । किंच "तावुभौ कुरुतो यश्चैवं वेद यश्च न वेद" इत्यस्मिन्नङ्गावबद्धोपास्तिवाक्यशेष उपासकानुपासकयोरुपास्त्याधारभूतेन तेनाङ्गेन कर्मानुष्ठानं विस्पष्टमाम्नायते । तस्मात्कर्मस्वनियता उपास्तयः" तदेतैः पञ्चभिर्विचारैर्निर्णीतमङ्गावबद्धोपासनं नानाविधविशेषणविशिष्टम्—"उक्थमुक्थम्" इत्यारभ्य "आत्मा वा इदम्" इत्यतः प्राक्तनेन ग्रन्थेन प्रतिपाद्यते । तत्राऽऽदौ महाव्रताङ्गभूते निष्केवल्याख्यशस्त्रे पृथिव्याद्याधिदैविकदेवतादृष्टिं वागाद्याध्यात्मिकदेवतादृष्टिं च क्रमेण विधित्सुः पृथिवीध्यानं दर्शयति—

**उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव**

---

१ क. °हं गृ° । २ ग. सं चोन्नी° । ३ क. °दितत्तत्प्र° । ख. ग. घ. °दिषु तत्प्र° । ४ क. ख. °भावे सति वा° ।

पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किंच, इति ।

उक्थं शस्त्रम्, उत्तिष्ठत्यनेन देवताप्रसाद इति व्युत्पत्तेः । तत्र यज्ञं निष्पादयन्तो होतृयजमानादयः प्रजास्तत्तच्छस्त्रे ध्यातव्यं रहस्यं स्वरूपमज्ञात्वा केवलं नाममात्रेणोक्थमुक्थमित्येव व्यवहरन्ति। तद्रहस्यं त्वभिधीयते—तदुक्थस्वरूपमिदमेव वक्ष्यमाणं येयं पृथिवी दृश्यते सैव तद्रूपम् । इतो हि पृथिव्याः सकाशादिदं स्थावरजङ्गमरूपं सर्वं जगदुत्तिष्ठति तस्मात्पृथिव्या उक्थत्वं युक्तम् । उक्थे पृथिवीदृष्टिः कर्तव्येत्यर्थः ।

तेन शस्त्रेणार्चनीये देवेऽग्निदृष्टिं शस्त्रसंबन्धिनीषु गायत्र्यादितृचाशीतिष्वन्नदृष्टिं च विधत्ते—

तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते, इति ।

तस्य शस्त्रस्य संबन्धी योऽयमर्कोऽर्चनीयो देवः सोऽयमग्निस्वरूपः । याश्च गायत्रीबृहत्युष्णिक्छन्दस्कास्तृचानामशीतयस्त्रिविधास्ताः सर्वा अन्नस्वरूपाः । तस्मात्कारणाल्लौकिकः पुरुषोऽन्नेनेदं सर्वं प्राणिजातमश्नुते व्याप्नोति । अन्नवन्तं पुरुषं सर्वे जनास्तल्लाभाय सेवन्ते ।

पूर्वोक्तपृथिव्यादिवदुक्थदेवताशीतिष्वन्तरिक्षवाय्वन्नदृष्टिं विधत्ते—

अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनु पतन्त्य-
न्तरिक्षमनु धावयन्ति तस्य वायुरर्कोऽन्न-
मशीतयोऽन्नेन हीदं सर्वमश्नुते, इति ।

पक्षिणः सर्वेऽप्यन्तरिक्षमनुसृत्योपरि पतन्ति संचरन्ति, मनुष्याश्च भूमेरुपर्यन्तरिक्षमवकाशमनुसृत्यैवाश्वबलीवर्दादीन्धावयन्ति, तस्मादन्तरिक्षस्योक्थत्वं युक्तम् ।

द्युलोकादिदृष्टिं विधत्ते—

असावेव द्यौरुक्थममुतःप्रदानाद्धीदं सर्वमुत्ति-
ष्ठति यदिदं किंच तस्यासावादित्योऽर्कोऽन्नम-
शीतयोऽन्नेन हीदं सर्वमश्नुते, इति ।

अमुतो द्युलोकाद्भूमौ प्रदीयते यद्वृष्टिजलं तस्माज्जलप्रदानादिदं सर्वमोषधिवनस्पत्यादिकं यत्किंचिदस्ति तदुत्तिष्ठति तस्माद्द्युलोकस्योक्थत्वं युक्तम् ।

नृपशोर्बुद्धिसमाधानायोक्तवक्ष्यमाणयोर्ध्यानयोर्विभागं दर्शयति—

इत्यधिदैवतमथाध्यात्मम्, इति ।

दैवतानि पृथिव्यादीन्यधिकृत्य प्रवृत्तं ध्यानमधिदैवतम् । तच्चेत्युक्तप्रकारेण

व्यवस्थितम् । आत्मानं मनुष्यशरीरमधिकृत्य प्रवृत्तं ध्यानमध्यात्मम् । तत्त्वथानन्तरमभिधीयते ।

तत्राऽऽदौ शस्त्रे शरीरदृष्टिं विधत्ते—

**पुरुष एवोक्थमयमेव महान्प्रजापतिरहमुक्थमस्मीति विद्यात्, इति ।**

शिरःपाण्यादिमान्देहः पुरुषस्तस्य महत्त्वं श्रेष्ठत्वम् "अयं पुरुषो ब्रह्मणो लोकः" [ ऐ० आ० २ अ० १ ख० ३] इत्यत्र वक्ष्यते । प्रजापतित्वं च " तस्य वाचा- सृष्टौ पृथिवी चाग्निश्च " [ ऐ० आ० २ अ० १ ख० ७ ] इत्यत्राभिधास्यते । तस्मादुत्कर्षहेतुत्वाद्देहस्योक्थत्वम् । तच्चोक्थमहमस्मीत्येवं ध्यायेत् । नात्र विदिधातुः प्रमाणजन्यं ज्ञानमाचष्टे किंतु पुरुषतन्त्रां ध्यानक्रियाम् । यद्यपि " विद ज्ञाने " [ अदा० ग० प० ] इति धातुस्तथाऽपि ज्ञानध्यानयोर्मानसत्वसाम्येन ध्यानमत्र विवक्षितम् । उपासनाप्रकरणस्य वर्तमानत्वात् । नन्वहमुक्थमस्मीत्येतन्मीमांसया विरुद्धम् । तत्र हि चतुर्थाध्याये—" आत्मेति तूपगच्छन्ति ग्राहयन्ति च " [ ब्र० सू० अ० ४ पा० १ सू० ३ ] इति सूत्रेण तत्त्वविद्यायां ब्रह्मोपासनेषु चाहंग्रहमभिधाय " न प्रतीके न हि सः " [ ब्र० सू० अ० ४ पा० १ सू० ४ ] इति सूत्रेण प्रतीकेष्वहंग्रहो निवारितः । अत्र चोक्थं प्रतीकम् । तस्मादहमुक्थमस्मीत्यहंग्रहो न युक्त इति चेत् । नायं दोषः । तस्मिन्सूत्रे न्यायबलादेवाहंग्रहस्य निषिद्धत्वात् । इह तु वचनबलादहंग्रहो विधीयते । " किमिव हि वचनं न कुर्यान्नास्ति वचनस्यातिभारः " इति हि शास्त्रकाराणां डिण्डिमः । यद्यपि कृत्स्नमुपास्यस्वरूपमभिधायान्तेऽहंग्रहो वक्तव्यस्तथाऽपि वक्ष्यमाणेषूपास्यावयवविशेषेषु प्रत्येकमहंग्रहसिद्ध्यर्थमादावेवासौ विधीयते ।

आधिदैविकदृष्टान्तेनाऽऽध्यात्मिकमुखदृष्टिं विधत्ते—

**तस्य मुखमेवोक्थं यथा पृथिवी तथा, इति ।**

तस्य पुरुषस्य देहरूपस्य यन्मुखं तद्दृष्टिरुक्थे कर्तव्या । अधिदैवं यथा प्रथमपर्यायेण पृथिवीदृष्टिस्तद्वत् ।

अर्चनीये देवे वाग्दृष्टिमशीतिष्वन्नदृष्टिं च विधत्ते—

**तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते, इति ।**

आधिदैविकान्तरिक्षदृष्टान्तेन द्वितीयपर्यायं विधत्ते—

**नासिके एवोक्थं यथाऽन्तरिक्षं तथा, इति ।**

---

१ क. °दुद्धर्ष° । घ. °दुस्तहे° ।

देवे प्राणदृष्टिमशीतिष्वन्नदृष्टिं च विधत्ते—

**तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते,** इति ।

भ्रुवोरधस्तान्नासिकाया मूलं निम्नदेशं प्रशंसति—

**तदेतद्ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतामिव,** इति ।

**नासिकायाः** संबन्धि विशेषेण नतमत्यन्तनिम्नं यन्मूलमस्ति तदेतद्ब्रध्नस्याऽऽदित्यस्य विष्टपं स्थानम् । "असौ वा आदित्यो ब्रध्नः" [तैत्ति०] इति श्रुत्यन्तरात् । तच्च मूलं ब्रह्मणः स्थानत्वाद्ब्रह्मोपाधेरादित्यस्यापि स्थानम् । ध्यानस्थानत्वं च प्रश्नोत्तराभ्यां **जाबाला** आमनन्ति—"कतमच्चास्य स्थानं भवतीति भ्रुवोः प्राणस्य च संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवति" [जाबा० ख० २ ] इति । **विनतमिवे**तीवशब्दोऽनर्थक एवकारार्थो वा ।

तृतीयपर्यायं विधत्ते—

**ललाटमेवोक्थं यथा द्यौस्तथा तस्य चक्षुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते,** इति ।

आधिदैविकाध्यात्मिकपर्यायेषु षट्स्वप्यर्के ध्यातव्या अग्न्यादयो विविधास्तद्वदशीतिषु ध्यातव्यस्यापि नानाविधत्वशङ्कां व्यावर्त्य पूर्वोक्तमनेकत्वध्यानं प्रशंसति—

**समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेवान्नेन हीमानि सर्वाणि भूतानि समनन्ती३ अन्नेनेमं लोकं जयत्यन्नेनामुं तस्मात्समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव,** इति ।

गायत्र्यो बार्हत्य औष्णिह्यश्च याः सर्वास्तृचाशीतयस्ताः सर्वा अध्यात्माधिदैवपर्यायेषु सर्वेष्वप्यन्नमेवेत्येतत्समानम् । न त्वन्नादन्यत्किंचित्तासु ध्येयमस्ति । अन्नस्यात्यन्तं प्रशस्तत्वात् । **इमानि सर्वाणि भूतानि** प्राणिनोऽन्नेनैव **समनन्ति** सम्यक्चेष्टन्ते । अन्नजन्यस्य बलस्य शरीरचेष्टाहेतुत्वात् । सानुनासिका समनन्तीति प्लुतिरुक्तार्थप्रसिद्धा(द्ध्य)र्था । न केवलमन्नस्य चेष्टाहेतुत्वं किं तु लोकद्वयमपि तेन जितं भवति । अन्नप्रदानेन मनुष्याणां वश्यत्वमेतल्लोकस्य जयः । शास्त्रीयेणान्नदानेन देवतातुष्टिः स्वर्गलोकजयः । तदेवमन्नस्य प्रशस्तत्वात्सर्वत्राशीतीनामन्नरूपत्वमेव ध्येयम् ।

उक्थे ध्यातव्यत्वेनोक्तायाः पृथिव्या भोक्तृभोग्यरूपकृत्स्नजगद्रूपत्वध्यानं विधत्ते—

**तदिदमन्नमन्नादमियमेव पृथिवीतो हीदं**

---

१ क. °णि प्राणिरूपाण्यन्ने° । ख. घ. ङ. °णि रूपाण्यन्ने° । २ क. °क्तार्थे प्र° ।

**सर्वमुत्तिष्ठति यदिदं किंच,** इति ।

लोके **यदन्नमस्ति यच्चान्नादं** भोक्तृजातं **तदिदं** सर्वजगद्रूप**मियमेव पृथिवी ।** पृथिव्यास्तदात्मकत्वं ध्येयमित्यर्थः । यत्किंचिदिदं भोक्तृभोग्यजातमस्ति तत्सर्वमितः पृथिव्याः सकाशादुत्पन्नं तस्मात्तदात्मकत्वं युक्तं पृथिव्याः ।

कृत्स्नभोक्तृभोग्यात्मकत्वमुपपादयति—

**यद्ध किंचेदं प्रेर्ता३इ तदसौ सर्वमत्ति यदु किंचातः**
**प्रैतीँ३ तदियं सर्वमत्ति सेयमित्याद्याऽत्त्री,** इति ।

**यत्किंचेदं** प्राणिजातं पृथिव्यां वर्तमानं **प्रेर्ते** प्रे(प्रै)ति म्रियते । " ईर गतौ " [ अदा० ग० आ० ] इत्यस्य धातोः प्रपूर्वस्य मरणार्थत्वं द्रष्टव्यम् । " इण गतौ " [ अदा० ग० प० ] इति धातौ तद्दर्शनात् । भूमौ मृतं **तत्सर्वं** प्राणिजातं स्वानुष्ठितपुण्यकर्मवशात्स्वर्गे गच्छति । **तच्च** स्वर्गस्थम**सौ** स्वर्गलोको**ऽत्ति** भक्षयति वशी करोति। **यदु किंच** यदपि किंचित्स्वर्गस्थं प्राणिजातं स्वकर्मफलभोगे समाप्ते सत्य**तोऽ**स्मात्स्वर्गात्**प्रैति** मृतो( त्वा ) भूमावागच्छति तत्समागतं **सर्वं** प्राणिजात**मियं** भूमि**रत्ति** भक्षयति वशी करोति। भूमौ यागं कुर्वन्तो[1] यजमाना मरणादूर्ध्वं स्वर्गं भुक्त्वा पुनर्भूमावागच्छन्तीति वाक्यद्वयस्यार्थः । तत्प्रसिद्ध्यर्थं प्लुतिद्वयं द्रष्टव्यम् । **प्रेर्त** इत्येकारस्याकारप्लुतिरिकारसहिता व्याकरणे विहिता [ पा० सू० अ० ८ पा० २ सू० १०७ ]। एवं सति **सेयं** भूमिरित्युक्तेन प्रकारेणाऽऽ**द्या**ऽपि भवति । **अत्त्री** च भवति । भूमिष्ठानां यजमानानां स्वर्गे यद्देवतापारतन्त्र्यं तदेतद्भूमेराद्यत्वम् । स्वर्गस्थानां च पुनरागमने सति तेषां वशीकरणलक्षणं स्वातन्त्र्यं भूमेरत्तृत्वम् । अनेन प्रकारेण कृत्स्नभोग्यभोक्तृरूपा पृथिवी ।

एतद्गुणध्यानस्य फलमाह—

**अत्ता ह वा आद्यो भवति,** इति ।

**अत्ता** योऽयं लोके भोक्ता यश्चाऽऽ**द्यो** भोग्यः पदार्थस्तदुभयरूपेण सर्वात्मको भवतीत्यर्थः ।

ननु लोके कश्चित्स्वामी भृत्यैः सेव्यमानो भृत्यानां भोक्ता भवति तथा जीवितप्रदातृत्वेन भृत्यैर्भुज्यत इति भोग्योऽपि भवति । अनेन न्यायेन सर्वोऽप्यन्यैरुपक्रिय-

---

१ ख. ग. 'सिद्धार्थं ।

माणो भोक्ता स्वयमुपकुर्वन्भोग्यश्च भवति। तथा सत्युपासनफलरूपे भोक्तृभोग्यात्मकत्वे को नाम विशेष इत्याशङ्क्याऽऽह—

न तस्येशे यन्नाद्याद्यद्वैनं नाद्युः, इति।

इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

अनुपासको लौकिकः पुरुषः स्वधर्मकर्मप्राप्तमशनादिकं कियदेवात्ति न तु सर्वं सर्वस्य स्वकर्मप्रापि[त]त्वाभावात्। तथा सति यद्वस्तु स्वयं नाद्यान्न भुञ्जीत तस्य वस्तुनो नेशे नेष्टे स्वामी न भवति। उपासकस्तु हिरण्यगर्भरूपः सन्सर्वमत्तीति सर्वस्य स्वामी। सोऽयमेको विशेषः। वाशब्दः समुच्चयवाची। यद्वा यस्माच्च कारणादेनमुपासकं नाद्युरन्ये पुरुषा न भुञ्जीरंस्तस्मात्पराधीनलक्षणं भोग्यत्वं नास्ति, अनुपासकस्य तु तदस्तीत्ययमपरो विशेषः। ननु भोग्यत्वाभावे सत्याद्यो भवतीति कथमुच्यते। नायं दोषः। पराधीनत्वलक्षणस्य भोग्यत्वस्यैव निषेधात्। आद्यो भवतीत्यनेन तु स्वात्मभूतसर्वभोग्यजातरूपत्वमभिधीयत इति न कोऽपि विरोधः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीयः खण्डः।

---

पूर्वत्रोक्थेषु पुरुषत्वदृष्टिं विधातुं पुरुषस्य महत्त्वमयमेव महानित्यभिहितम्। तदेतन्महत्त्वमुपपादयति—

अथातो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां
रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽ-
न्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो
हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग्वाचो रेतः
कर्म तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः, इति।

अथ पुरुष एवोक्थमित्येवमुक्त्वे पुरुषदृष्टिकथनानन्तरम्। यतः कारणात्पुरुषस्योक्थत्वं संभावयितुमयमेव महानित्युक्तं वैशिष्ट्यं वक्तव्यमतः कारणाद्वैशिष्ट्यसिद्धये रेतसः सारभूतस्य सृष्टिरभिधीयत इति शेषः। आदौ प्रजापतेर्जगदीश्वरस्य रेतः सारभूतं कार्यं देवाः। सात्त्विकत्वाद्देवानां सारभूतत्वं युक्तम्। मनुष्याणां

---

१ क. ख. 'त्युक्त्वै'।

राजसत्वाद्गवाश्वादीनां तामसत्वाच्च नास्ति सारकार्यत्वम् । तेषां च **देवानां रेतः** सारभूतं कार्यं **वर्षम्** । घर्मकाले संतप्ता भूमिर्वर्षेणाऽऽप्यायते ततोऽस्य सारत्वम् । तस्यापि **वर्षस्य** सारमोषधयः, प्राण्युपकारकत्वात् । न हि तद्वृष्टिकार्यमपि पङ्कादिकं प्राणिभिः सेव्यते । **ओषधीनामप्यन्नं** सारं न तु पलालतुषादिकम् । **अन्नस्यापि रेतः** सारं न तु पुरीषादिकम् । **रेतसोऽपि** सारं पुत्रादिरूपाः **प्रजा** नतु वन्ध्यायामुत्सृष्टस्य सारत्वमस्ति । **प्रजानामपि** सारं **हृदय**[1]पुण्डरीकं, जीवात्मनः स्थानत्वात् । "हृदि ह्येष आत्मा" इति श्रुतेः । **हृदयस्य** सारं **मनः**, ज्ञानशक्तियुक्तत्वात् । न तु मांसमयानामष्टदलानां तच्छक्तिरस्ति । **मनसः** सारं वेदरूपा वाक् । "यद्धि मनसा ध्यायति तद्वाचा वदति" इति श्रुतेर्वाचो मनःकार्यत्वम् । न तु मनस उत्पन्नानां रागद्वेषादीनां वेदवत्सारत्वमस्ति । वेदस्यापि सारमग्निहोत्रादिकं **कर्म**, वैदिकमन्त्राणां तदनुष्ठानार्थत्वात् । **तदिदं कर्म** पूर्वस्मिञ्जन्मनि **कृतं** सदिह जन्मनि वेदशास्त्रकर्मानुष्ठानब्रह्मोपासनब्रह्मज्ञानयोग्यः **पुरुषो** भवति, न हि निरतिशयितसुकृतमन्तरेणेदृशं जन्म संभवति । तस्मात्**पुरुषो ब्रह्मण** उपासनीयस्य वेदनीयस्य च **लोकः** स्थानमिति तस्य महत्त्वं सिद्धमित्यर्थः ।

तस्य पुरुषस्य हिरण्मयाख्यो गुणो ज्ञानाय विधीयते—

**स इरामयो यद्धीरामयस्तस्माद्धिरण्मयः**, इति ।

इराशब्दोऽन्नवाची । **स** पुरुषः शिरःपाण्यादियुक्तोऽन्नमयः । अत एव **तैत्तिरीयका** आमनन्ति—" स वा एष पुरुषोऽन्नरसमयः " [ तै० उ० २ । १ । १ ] इति । **यद्धि** यस्मादेव कारणादय**मिरामयस्तस्मा**त्कारणा**द्धिरण्मय** इत्युपासकानां प्रसिद्धिः । इराहिरण्मयशब्दयोरक्षरसाम्यात्तथोच्यते । यथाऽध्यात्ममन्नमय एवमधिदैवं ब्रह्माण्डरूपेण स्वर्णमयः ।

एतद्गुणध्यानस्य फलमाह—

**हिरण्मयो ह वा अमुष्मिँल्लोके संभवति हिरण्मयः**
**सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद**, इति ॥

**इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके प्रथमाध्याये**
**तृतीय खण्डः ॥ ३ ॥**

**यः** पुमानेवं हिरण्मय[2]त्वगुणमुपास्ते स पुमान्स्वर्गलोके ज्योतिर्मयो भवति । तथाविधो भूत्वा सर्वप्राण्युपकारार्थ[3]मादित्यमण्डलरूपेण सर्वदा दृश्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये
द्वितीयारण्यके प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

---

१ क. °दयं पु° । २ क. °यगु° । ३ क. ख. घ. ङ. °र्थे आदि° ।

अथ चतुर्थः खण्डः ।

स्थूलदेहरूपेणोक्थस्योपासनमभिधाय सूक्ष्मदेहात्मकप्राणरूपेणोपासनं वक्तुं प्राणोपाधिकस्य परमात्मनः शरीरे प्रवेशं दर्शयति—

**तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे तस्मात्प्रपदे इत्याचक्षते शफाः खुरा इत्यन्येषां पशूनाम्,** इति ।

यज्जगत्कारणं "सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० उ० २—१—१ ] इत्यादिवाक्यप्रतिपाद्यं **ब्रह्मा**स्ति तदेतत्सृष्टिकाले स्थूलदेहं सृष्ट्वा **तं** सृष्टमि**मं** दृश्यमानं **पुरु**षशब्दवाच्यं स्थूलं देहं **प्रपदाभ्यां** पादाग्राभ्यां **प्रापद्यत** प्रविष्टवत् । "तत्सृष्ट्वा तदेवानुप्राविशत्" [ तै० उ० २ । ६ । १ ] इति श्रुत्यन्तरम् । यद्यपि सर्वगतस्य ब्रह्मणः प्रवेशो न संभवति तथाऽपि प्राणोपाधिकस्य प्राणप्रवेशेनैव प्रवेश उपचर्यते । अत एव **मैत्रायणीया** आमनन्ति—"स वायुमिवाऽऽत्मानं कृत्वाऽभ्यन्तरं प्राविशत्" [ मै० उ० प्र० २ ] इति । यस्मात्पादाग्राभ्यां प्रवेशस्तस्मात्प्रापद्यतोभाभ्यामिति व्युत्पत्त्या पादाग्रयोः **प्रपद**त्वं संपन्नम् । यस्मादवयवार्थस्तयोरस्ति **तस्मा**ल्लोके शाब्दिकाः **प्रपदे** इत्यनेनैव शब्देन पादाग्रद्वयं व्यवहरन्ति । मनुष्यशरीरेषु पादाग्रसद्भावात्तद्द्वारेण प्रवेशोऽपि गवाश्वादिशरीरेषु तदसंभव इति चेन्न । तच्छरीरेष्वपि **शफ**शब्देन **खुर**शब्देन च तत्तद्देशे प्राणिभिर्व्यवह्रियमाणानां पादभागानामेव प्रपदत्वात् । शफखुरशब्दयोर्देशविशेषेण व्यवहारभेदः ।

पादाग्रयोः प्रविष्टस्य ब्रह्मणः क्रमेण शिरःपर्यन्तां व्याप्तिं दर्शयितुमूरुपर्यन्तं तावद्दर्शयति—

**तदूर्ध्वमुदसर्पत्ता ऊरू अभवताम्,** इति ।

तत्पादाग्रयोः प्रविष्टं ब्रह्मोर्ध्वाभिमुखत्वेन व्याप्तवत् । यस्मादेवं **तस्मादुदसर्प**दनयोरिति व्युत्पत्त्या **तावूरू** ऊर्ध्वप्रदेशावूरुशब्दवाच्याव**भवताम्** ।

ऊरुदेशादप्यूर्ध्वदेशव्याप्तिं दर्शयति—

**उरु गृणीहीत्यब्रवीत्तदुदरमभवत्,** इति ।

**उरु** विस्तीर्णं यथा भवति तथा **गृणीहि** निगरणयोग्यं विपुलच्छिद्रं कुर्वित्येवमुपरितनं शरीरभागं प्रत्यूर्वोरवस्थितं ब्रह्माब्रवीत्तस्य ब्रह्मणः संकल्पवशात्तत्स्थानमुपरितनमुदरशब्दवाच्यं विपुलच्छिद्रमभवत् ।

---

१ ग. गजाश्वा ।

उरुशब्देन सहाक्षरसाम्यादुदरनामत्वम् ।

पुनरप्युपरि देशे संचारं दर्शयति—

**उर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवत्**, इति ।

उदरवर्तिनो मम भूयोऽपि विस्तीर्णमेव च्छिद्रं कुर्वित्येवं ब्रह्मसंकल्पवशात्तदे-तदुपरितनं स्थानमुरःशब्दवाच्यं विपुलच्छिद्रमभूत् । अत्राप्यक्षरसाम्यान्निर्वचनं द्रष्टव्यम् ।

अनयोः कुक्ष्युरसोर्ब्रह्मसंकल्पविशेषेण प्रीतिपूर्वकेणोत्पन्नत्वाद्ब्रह्मध्यानप्रतीकत्वं दर्शयति—

**उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्माहैव ता३इ**, इति ।

शार्कराक्षिनामकस्य महर्षेः पुत्रा उदरे ब्रह्मदृष्टिं कृत्वोपासते । अरुणाख्यस्य महर्षेः पुत्रा हृदयस्थानगतेऽष्टदलकमलमध्यस्थे हृदयाच्छिद्रे ब्रह्मदृष्टिं कृत्वोपासते । ते उभे अपि स्थाने ब्रह्मणः प्रीतिविषयत्वाद्ब्रह्मैव । प्लुतिः शास्त्रीयप्रसिद्ध्यर्था ।

पुनरपि ब्रह्मण ऊर्ध्वदेशे संचारं दर्शयति—

**ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत्तच्छिरसः शिरस्त्वम्**, इति ।

उरःपर्यन्तमुद्गत्यापि तद्ब्रह्म नोपरेमे किं तु ततोऽप्यूर्ध्वमुदसर्पदेव । ऊर्ध्वं गत्वा च तद्ब्रह्म शिरोदेशमश्रयत सेवितवत् । यस्मादेवं तस्माच्छ्रितमनेनेति व्युत्पत्त्या तत्स्थानं शिरःशब्दवाच्यमभवत् । तस्मादेव कारणाल्लोकेऽप्यूर्ध्वभागस्य शिरःशब्द-वाच्यत्वं प्राणिभिर्व्यवह्रियते ।

शिरोभागं पुनः प्रशंसति—

**ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः**, इति ।

शीर्षञ्शिरोभागे ता ब्रह्मणा सृष्टत्वेन श्रुतौ प्रसिद्धा एता अस्माभिरनुभूयमानाः श्रियो दर्शनश्रवणादिव्यवहारसंपदः श्रिताः प्राप्ताः । कास्ताः श्रिय इति चेत्तदु-च्यते—चक्षुरादयः श्रियो व्यवहारसंपदस्तन्निष्पत्तेः ।

शिरस्त्ववेदनं प्रशंसति—

**श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद**, इति ।

यः पुमाञ्शिरोनाम विदित्वोपास्तेऽस्मिन्पुरुषे चक्षुरादिपाटवजन्योत्तमसंपद आश्रिता भवन्ति ।

इदानीं शिरःपर्यन्ते शरीरेऽवस्थितानां चक्षुरादीनां मध्ये प्राणस्य श्रैष्ठ्यं वक्तुं संवादं दर्शयति—

ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुव-
न्हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन्न उत्क्रान्त
इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति, इति ।

ताः पूर्वोक्ताः श्रियश्चक्षुरादिरूपास्तदभिमानिन्यो देवता अहिंसन्त परस्परस्पर्धारूपां हिंसामकुर्वन् । स्पर्धाविषयो विस्पष्टमुच्यते—अहमुक्थमस्मि । उक्थे चक्षुःस्वरूपस्य ममैव दृष्टिः कर्तव्येत्येवं चक्षुर्देवता वक्ति । तथैव श्रोत्रादयोऽपीति विवक्षया वीप्सोक्ता । ताः स्पर्धमाना देवताः स्पर्धानिवारणार्थं समयविशेषे परस्परमब्रुवन् । निवारणोपायदर्शननिमित्तहर्षार्थो हन्तशब्दः । वयं सर्वा अपि क्रमेणास्माच्छरीरादुत्क्रान्तिं करवाम । तथा सत्यस्माकं मध्ये यस्मिन्नुत्क्रान्ते सतीदं शरीरं पतिष्यति तदेवोक्थं भविष्यति । इतिशब्दः समयबन्धसमाप्त्यर्थः ।

क्रमेणोत्क्रान्तिं शरीरपतनपर्यन्तां दर्शयति—

वागुदक्रामदवदन्नश्नन्पिबन्नास्तैव चक्षुरुदक्रामदपश्य-
न्नश्नन्पिबन्नास्तैव श्रोत्रमुदक्रामदशृण्वन्नश्नन्पिब-
न्नास्तैव मन उत्क्रामन्मीलित इवाश्नन्पिबन्ना-
स्तैव प्राण उदक्रामत्तत्प्राण उत्क्रान्तेऽपद्यत, इति ।

वाक्चक्षुःश्रोत्रमनसामेकैकस्मिन्नुत्क्रान्ते सति तत्तदिन्द्रियसाध्यव्यापारमात्रं लुप्यते न तु शरीरं पतति, किं त्वन्नपाने स्वी कुर्वन्यथापूर्वमभवदेव । मीलित इवेत्यस्यायमर्थः—यथा मुग्धश्चक्षुर्मीलनोन्मीलनमात्रं कुर्वन्विषयविवेकमकुर्वन्नास्ते तद्वदयं देह इति । तच्छरीरं प्राण उत्क्रान्ते सति पतितमभून्न त्वश्नाति नापि पिबति ।

तदेव पतनं शरीरशब्दनिर्वचनेन प्रपञ्चयति—

तदशीर्यताशारीतीँ३ तच्छरीरम-
भवत्तच्छरीरस्य शरीरत्वम्, इति ।

यत्पतितं शरीरं तच्छीर्णमभूत्, अवयवविश्लेषेण विनष्टमभूत्, अतो लोके प्राणरहितं शरीरं दृष्ट्वैतदशारि विशीर्णमभूदित्येवं वर्णयन्ति । तत्प्रसिद्धिद्योतनाय प्लुतिरिति । तच्च शीर्णत्वयोग्यत्वाच्छरीरमभूत् । तत्तस्माच्छीर्णत्ववचनादेव शरीरनाम सर्वैर्व्यवह्रियते ।

एतन्नामनिर्वचनवेदनं प्रशंसति—

शीर्यते ह वा अस्य द्विषन्पाप्मा भ्रातृव्यः पराऽस्य

**द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद, इति ।**

**यः** पुमानेवं शरीरत्वं विदित्वोपास्तेऽस्य वेदितुर्द्वेषं कुर्वन्पापरूपः शत्रुर्विशीर्णो भवति । कथंचिदविशीर्णत्वेऽपि पराभवति तिरस्कृतो भवति ।

प्राणोत्क्रमणस्य देहपतनहेतुत्वमभिधाय प्राणप्रवेशस्य देहोत्थापनहेतुत्वमभिधातुं पुनरपि संवादं समयबन्धं च दर्शयति—

**ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन्हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति, इति ।**

**अहिंसन्तैव** न तु स्पर्धाया उपरताः । **प्रपन्ने** प्रविष्टे । अन्यत्पूर्ववद्व्याख्येयम् ।

प्राणप्रवेशेन देहस्योत्थानं दर्शयति—

**वाक्प्राविशदशयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत्, इति ।**

**अशयदेव** शयानमेवाभूत् । न तूत्थितमभूत् । तत्प्राणस्वरूपमुत्थानहेतुत्वादुक्थमभूत् ।

प्राणस्योत्थानहेतुत्वलक्षणमुक्थत्वं प्रसिद्धमिति प्लुतिप्रयोगेण दर्शयति—

**तदेतदुक्थाँ३ प्राण एव, इति ।**

चक्षुरादीनामुत्थानहेतुत्वाभावादुक्थत्वाभावार्थ **एवकारः** ।

यदर्थं प्राणप्रवेशप्राणसंवादावुपन्यस्तौ तदिदानीं विधत्ते—

**प्राण उक्थमित्येव विद्यात्, इति ।**

निष्केवल्याख्ये शस्त्रे प्राणदृष्टिं कुर्यादेवेत्यर्थः ।

एतस्यार्थस्य दार्ढ्याय चक्षुरादिदेवकर्तृकां प्राणस्तुतिं दर्शयति—

**तं देवा अब्रुवन्त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति, इति ।**

तं प्राणं चक्षुराद्या **देवा** अनेन प्रकारेणोक्तवन्तः । हे प्राण त्वं देहस्योत्थानहेतुत्वा**दुक्थस्वरूपमसि** । अतः सर्वदेहव्यापारस्य त्वदधीनत्वादिदं **सर्वं** जगत्त्व**मेवासि** । **वयं तव** भृत्याः स्मः । **त्वं चास्माकं** स्वाम्यसि । **इतिशब्दः** स्तुतिसमाप्त्यर्थः ।

१ घ. ङ. विशदयति ।

उक्तार्थदार्ढ्याय मन्त्रमुदाहरति—

तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति, इति।

इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

यदेतत्प्राणस्तुतिरूपं ब्राह्मणेनोक्तं तदेतदृषिणा मन्त्रेणाप्युक्तम्। त्वमस्माकमित्यादिः प्रतीकप्रदर्शनार्थो मन्त्रस्य चरमः पादः। मन्त्रस्तु संहितायामेवमाम्नातः—"त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः। त्वमस्माकं तव स्मसि" इति। हे इन्द्र प्राणरूप परमेश्वर वयं चक्षुराद्याः प्राणास्त्वयैव सह युजा योगेन रसयोगेण ताम्रमिव त्वद्योगेन लब्धवीर्याः सन्तः स्पृधः स्पर्धाहेतूञ्शत्रून्प्रतिब्रुवीमहि प्रतिवक्ष्यामो निराकरिष्यामः। अतस्त्वमस्माकं स्वामी, वयं च तव त्वदीया भृत्याः स्मसि भवामः। तमेतं मन्त्रमुपलक्षयितुं त्वमस्माकमित्यादिपाद उदाहृतः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमः खण्डः।

---

अहमुक्थमस्मीति विद्यादित्युपासनादौ सर्वेष्वपि वक्ष्यमाणगुणेष्वनुवृत्त्यर्थं योऽयमहंग्रहविधिरुक्तः स एव तामनुवृत्तिं दर्शयितुं पुनरपि प्राण उक्थमित्येव विद्यादित्यनूदितः। तत्रोक्थे यस्य प्राणस्य दृष्टिविधिस्तस्य प्राणस्य कालात्मकत्ववागादिदेवात्मकत्वसत्यरूपत्वगुणा ध्यानार्थं विधातव्याः, तत्राहोरात्ररूपकालात्मकत्वं विधत्ते—

तं देवाः प्राणयन्त स प्रणीतः प्रातायत

प्रातायीतीँ३ तत्प्रातरभवत्समागादितीँ३

तत्सायमभवदहरेव प्राणो रात्रिरपानः, इति।

तमुक्थे ध्यातव्यं प्राणं देवा वागादयः प्राणयन्त "त्वमस्माकं तव स्मसि" [ ऋ० सं० म० ८ सू० ९२ ऋ० ३२ ] इत्यादिश्रुत्या प्रकर्षमुत्साहं प्रापितवन्तः। स च प्राणः प्रणीतो देवैरुत्साहं प्रापितः सन्प्रातायत प्रकर्षेण[1] विस्तृतोऽभूज्जागरणकाले स्वभृत्यरूपान्वागादींस्तद्गोलकेषु[3] प्रकर्षेण प्रसारितवान्[4]। अयमेव प्राणस्य विस्तारः।

---

त्वमस्माकं तव०—ऋ० सं० म० ८ सू० ९२ ऋ० ३२।

---

१ ग. °तः पुनः प्राता°। २ क. °र्षेणाऽऽवि°। ग. °र्षेणान्वितोऽ°। ३ क. ख. ग. °रूपवागादिगोल°। ४ क. ख. ग. प्रेरितवान्।

तं दृष्ट्वा वागादिदेवा मनुष्या वा प्रातायीत्येवमुक्तवन्तः । प्रकर्षेण विस्तृतोऽभूदिति तस्य शब्दस्यार्थः । स्तुतिः प्रसिद्ध्यर्था । रात्रावपनीतायां प्रभाते जागरणाय स्वार्थं वागादीनां गोलकेषु प्रसरणं सर्वलोकप्रसिद्धम् । यस्मात्प्रातायीत्येवमुक्तवन्तस्तस्मादयं वागादिप्रसरणपूर्वको जागरणकालः प्रातःशब्दवाच्योऽभूत् । प्राताथि प्रातरित्यनयोः शब्दयोरक्षरसाम्यात् । स प्राणः पुनरपि रात्रौ सुषुप्त्यर्थं वागादिप्रसरणं संहृतवांस्तं संहारं दृष्ट्वा समागादित्युक्तवन्तः । संकोचं प्राप्तवानिति तस्यार्थः । स कालः सायंशब्दवाच्योऽभूत् । समागात्सायमित्यनयोरक्षरसाम्यात् । तस्य च प्राणस्य दिवसे वागादिप्रसारणरूपजागरणावस्थानिष्पादकः प्राणशब्दवाच्य एको व्यापारः । तथा रात्रौ सुषुप्त्यर्थं वागादिसंहाररूपोऽपानशब्दवाच्यो व्यापारो द्वितीयः । तावेतौ प्राणापानव्यापारावहोरात्ररूपत्वेन ध्येयौ ।

कालात्मकत्वमुक्त्वा देवतात्मकत्वं दर्शयति—

**वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति**, इति ।

वागादीन्द्रियाभिमानिनीनामग्न्यादिदेवतानां वागादिरूपत्वम् "अग्निर्वाग्भूत्वा मुखं प्राविशत्" [ ऐ० आ० २ अ० ४ ख० २ ] इत्यादिना वक्ष्यते । अतः प्राणभृत्यस्वरूपा उपासकस्य वागादयोऽग्न्यादिरूपतया ध्यातव्याः । तस्य वागादिध्यानविधिवाक्यस्य तात्पर्यं स एष इत्यादिना स्पष्टी क्रियते । या एता अग्न्यादयो देवताः सन्ति तासां प्रहितां प्रकर्षेण हितानां देवलोकगतेषु स्वस्वस्थानेषु प्रसारणेन विस्रम्भेणावस्थितानामध्यात्मं पुरुषशरीरे वागादीन्द्रियेषु यः प्रवेशः स एष संयोगः संकोचरूपेण वागादितादात्म्यं तथाऽधिदैवतमद उ शास्त्रप्रसिद्धं स्वस्वस्थानेष्ववस्थितानामाविः प्रकटीभाव इत्येतदर्थजातं तदुक्तं भवति तेन वागग्निरित्यादिवाक्येनाभिहितं भवति । अग्न्यादीनां शरीरे संकोचो देवलोके विकास इत्येतादृशं तात्पर्यं श्रुत्या दर्शितम् ।

प्राणस्य वागग्न्यादिरूपत्वध्यानं प्रशंसितुं कस्यचिन्महर्षेर्वाक्यमुदाहरति—

**एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वैदो न तस्येशे यं मह्यं न दद्युरिति प्रहितां वा अह-**

---

१ क. ख. ग. °सिद्धार्था । २ घ. ङ. °वसो वा° । ३ घ. ङ. °णजा° । ४ क. ख. °रूपं जा° । ५ क. ख. घ. ङ. देवात्म । ६ घ. ङ. °त्यरू° । ७ ख. घ. ङ. °वस्थानमा° । ग. °वस्थानादावि° । ८ ग. °पत्वेन ध्या° ।

मध्यात्मं संयोगं निविष्टं वेदैतद्ध तत्, इति ।

हिरण्मया दन्ता यस्य महर्षेः सोऽयं हिरण्यदन् । बिदनामकस्य महर्षेः सुतो बैदः स च तदेतत्प्राणरूपं विद्वानुपासीनः कस्मिंश्चित्प्रसङ्ग इदं वाक्यमाह । निपातत्रयसमुदायः प्रसिद्ध्यर्थः । किं तद्वाक्यमिति चेत्तदुच्यते—अहं बैदाख्यो महर्षिः प्रहितां वै प्रहितानां द्युलोके प्रसारणेनावस्थितानामग्न्यादीनामेवाध्यात्मं निविष्टं मनुष्यशरीरेऽवस्थितं संयोगं संकोचेनावस्थानं वेद जानाम्युपासीनोऽस्मि, तादृशाय मह्यं लौकिकजना यं पदार्थमभीष्टार्थमभीष्टं न दद्युर्नैव समर्पयेयुस्तस्य तादृशस्य पदार्थस्य नेशो नैव ते स्वामिनो भवन्ति । यस्य यस्य पुरुषस्य यस्मिन्यस्मिन्भोग्ये स्वामित्वमस्ति स स पुरुषः सर्वोऽपि प्राणोपासनेन सर्वात्मकाय मह्यं तत्तद्भोग्यं समर्पयत्येवेति महर्षिवाक्यस्याभिप्रायः । एतद्ध तद्यन्महर्षिणोक्तमेतदेवं तत् ।

पूर्वत्र ब्राह्मणेनोक्तं[2] प्राणध्यानस्य माहात्म्य[म् ।] वागादिसर्वदेवात्मकत्वगुणध्यानफलमाह—

अनीशानानि ह वा अस्मै भूतानि
बलिं हरन्ति य एवं वेद, इति ।

यः पुमानेवमुक्तप्रकारेणाधिदैवं प्रसृतानामग्न्यादीनामध्यात्मं वागादिरूपेण संकोचमुपास्तेऽस्मा उपासकाय सर्वे प्राणिनः स्वयमनीशा उपासकं प्रति गुणभावमुपेताः सन्तो बलिं हरन्ति पूजां समर्पयन्ति ।

तस्यैव प्राणस्य सत्यत्वरूपं गुणान्तरं ध्येयत्वेन विधत्ते—

तत्सत्यं सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत्त्रिवृत्त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति, इति ।

तत्प्राणस्वरूपं सत्यशब्दवाच्यमिति[3] ध्यात्वा तच्छब्दगतेष्वक्षरेषु[4] त्रिषु प्राणान्नादित्यदृष्टयः कर्तव्याः । मध्याक्षर इकार उच्चारणार्थः । तदेतत्सत्यशब्दाक्षरेषु ध्येयं स्वरूपं त्रिवृत्प्राणान्नादित्यैस्त्रिगुणम् । चक्षुरपि शुक्लादिरूपैस्त्रिवृदिव त्रिगुणमेव ।

चक्षुःसाम्यप्रदर्शनेन सत्याक्षरध्यानं प्रशस्य तद्गुणोपासनस्य फलं दर्शयति—

स यदि ह वा अपि मृषा वदति सत्यं हैवास्योदितं
भवति य एवमेतत्सत्यस्य सत्यत्वं वेद, इति ।

इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके प्रथमाध्याये
पञ्चमः खण्डः ॥ ५ ॥

---

१ ग. घ. ङ. °व च त° । २ ख. ग. °नोक्तध्या° । ३ ग. सत्यंश° । ४ क. °षु प्रा° ।

**यः** पुमानुक्तप्रकारेण सत्यरूपस्य प्राणस्य सत्यत्वं सकाराद्यक्षरत्रयध्येयप्राणादिस्वरूपत्वमुपास्ते **स** पुमान्यद्यपि लोके व्यवहारे किंचिदनृतं वदेत्तथाऽप्यस्य तद्वाक्यं **सत्यमेवोदितं भवति** । अनृतभाषणप्रत्यवाय एनं न स्पृशतीत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठः खण्डः ।

---

गुणान्तरं विधत्ते—

**तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामनी३ सर्वं वाचाऽभिवदति, इति ।**

यथा बहुबलीवर्दस्वामिनो वणिजस्तद्बन्धनार्था काचिद्रज्जुः शङ्कुद्वये बद्धा प्रसारिता भवति तस्यां रज्जौ प्रत्येकं बन्धनाय पृथक्पाशा भवन्ति तथा **तस्य** प्राणस्य **वाक्तन्तिः** शब्दसामान्यं प्रसारितदीर्घरज्जुस्थानीयं देवदत्तयज्ञदत्तादि**नामानि** पृथक्पृथग्बन्धनहेतु**दाम**स्थानीयानि । तत्तथा सत्यस्य प्राणस्य संबन्धिन्या वाक्सामान्यरूपया दीर्घ**तन्त्या नाम**विशेषरूपै**र्दामभि**श्च **सर्वमिदं** स्थावरजङ्गमरूपं जगत्**सितं** बद्धमिति ध्यायेत् । **सर्वं** जगदभिधेयरूपमभिधायके **नामनि** व्यवस्थितमिति लोकप्रसिद्धमेतत् । अत एव **सर्वं** वस्तूद्दिश्य सर्वोऽपि पुरुषो **वाचा** तत्तन्नाम्नाऽ**भिवदति** । यदीयेन नाम्ना पुरुषमाकारयति स एव पुरुषो रज्जुबन्धनेनाऽऽकृष्ट इव समागच्छति ।

एतद्ध्यानस्य[1] फलमाह—

**वहन्ति ह वा एनं तन्तिसंबद्धा य एवं वेद, इति ।**

बलीवर्दा इव वागाख्य**तन्तिसंबद्धाः** सर्वे प्राणिन **एन**मुपासकं प्रति **वहन्ति** पूजाद्रव्यमानयन्ति ।

पुनरपि गुणान्तरं विधत्ते—

**तस्योष्णिग्लोमानि त्वग्गायत्री त्रिष्टुम्मांसमनुष्टुप्स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती स च्छन्दोभिश्छन्नो यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते, इति ।**

---

१ ख. ग. 'स्य कुलमा' ।

तस्य ध्येयस्य प्राणदेवस्य गायत्र्यादिच्छन्दोमयेन देहेनाऽऽच्छादितत्वं ध्यायेत्। उष्णिगादीनां छन्दसां लोमादिरूपदेहावयवत्वं ध्यातव्यम्। बृहतीछन्दसः प्राणवायुरूपावयवत्वं न विरुद्धम्। जडस्य वायोरत्र प्राणशब्देन विवक्षितत्वात्। ध्यातव्यस्तु प्राणश्चेतनेदेवतारूप इति विशेषः। यस्मादयं प्राणाख्यो देवो गायत्र्यादिच्छन्दोभिश्छन्नो भवति तस्माच्छादनहेतुत्वाद्गायत्र्यादीनां छन्दस्त्वं द्रष्टव्यम्।

छन्दोमयदेहावृतत्वध्यानस्य फलमाह—

**छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणो यस्यां कस्यांचिद्दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद, इति।**

यः पुमान्प्राणस्याऽऽच्छादनाद्गायत्र्यादीनां छन्दस्त्वमिति जानाति स पुमान्यस्यां कस्यांचिद्दिशि वर्तमानः किंचित्पापं कर्तुं कामयते तस्मात्पापात्कर्मणस्तमुपासकं गायत्र्यादीनि च्छन्दांसि छादयन्ति, पापं यथा न स्पृशति तथा तं गोपायन्तीत्यर्थः।

यथोक्तप्राणमहिमप्रतिपादकं मन्त्रमुदाहरति—

**तदुक्तमृषिणा, इति।**

स च मन्त्रः संहितायामेवमाम्नातः—"अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्। स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः" इति। [ ऋ० सं० म० १, १०। सू० १६४, १७७। ऋ० ३१, ३ ] अस्य मन्त्रस्य द्रष्टा दीर्घतमा नाम कश्चिदृषिर्मन्त्ररूपं वाक्यं ब्रूते—अहमृषिः प्राणं देवमपश्यं साक्षात्कृतवानस्मि। कीदृशं प्राणम्। गोपामिन्द्रियाणां रक्षकम्। अनिपद्यमानं निपदनं विनाशस्तद्रहितम्। पथिभिर्नानाविधैर्नाडीमार्गैराचरन्तम्। पराचरन्तं च। प्राणवायुर्हि मुखनासिकद्वारा क्षणे क्षणे देहमध्यं समागच्छत्यपि तदानीमेव पुनर्गच्छत्यपि। गमनागमनयोः परस्परसमुच्चयार्थावसकृदावृत्तिसमुच्चयार्थौ वा चकारौ द्रष्टव्यौ। स च प्राणः स्वयमध्यात्मं वायुरूपेण वर्तमानोऽप्यधिदैवमादित्यरूपेणावस्थितः सन्सध्रीचीर्विषूचीश्च द्विविधा अपि मुख्या दिशोऽवान्तरदिशश्च वसान आच्छादयन्व्याप्नुवन्वर्तते। भुवनेष्वन्तः सर्वेषु लोकेषु मध्य आवरीवर्ति पुनः पुनरागत्य वर्तते। इति मन्त्रस्य योजना।

तस्य मन्त्रस्य प्रथमपादे पूर्वभागं व्याचष्टे—

**अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायति, इति।**

---

अपश्यं गोपा०—ऋ० सं० म० १ सू० १६४ ऋ० ३१। म० १० सू० १७७ ऋ० ३।

---

१ क. ग. जङ्गमस्य। २ घ. ङ. 'नरू'। ३ क. ख. 'त्यप्याग'। ४ घ. ङ. द्वौ। ५ क. ख. ग. द्विधाऽपि।

आयुर्हेतुत्वात्प्राणस्य रक्षकत्वं प्रसिद्धम् । तच्च कौषीतकिन आमनन्ति—"यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः" [ कौषी० १ । २ । ] इति ।

उत्तरभागं व्याचष्टे—

**अनिपद्यमानमिति न ह्येष कदाचन संविशति, इति ।**

संवेशनं व्यापारोपरमः । यथा सुषुप्तौ वागादीनां व्यापार उपरतो भवति न त्वेवं प्राणस्य । अत एव सुषुप्तिप्रकरणे श्रुत्यन्तरे पठ्यते—" प्राणाग्नय एवैतस्मिन्पुरे जाग्रति " [ प्रश्न० ४ । ३ ] इति ।

द्वितीयपादं व्याचष्टे—

**आ च परा च पथिभिश्चरन्तमित्या च ह्येष परा च पथिभिश्चरति, इति ।**

प्राणस्य प्रतिक्षणं गमनागमनयोः सर्वैरनुभूयमानत्वात्प्रसिद्धिद्योतनार्थो हिशब्दः ।

तृतीयपादं व्याचष्टे—

**स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च**
**ह्येष विषूचीश्च वस्त इमा एव दिशः, इति ।**

सहाञ्चन्ति चतुष्कोणरूपेण परस्परसंश्लिष्टा वर्तन्त इति प्राच्यादयश्चतस्रो दिशः सध्रीच्यः । विष्वगञ्चन्ति परस्परं वियुज्य वर्तन्त इत्याग्नेय्यादयश्चतस्रो विदिशो विषूच्य इति[3] । एवमेता दिश एव शब्दद्वयेनोच्यन्ते । यद्यप्यादित्य एव स्वप्रकाशेन ता दिश आच्छादयति न तु प्राणस्तथाऽपि नास्ति विरोधः, आदित्यस्य बाह्यदेशवर्तिप्राणरूपत्वात् । " आदित्यो वै बाह्यप्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णीते " [ प्रश्नो० १ । ७ ] इति श्रुत्यन्तरात् ।

चतुर्थपादार्थस्याऽऽदित्यरूपेण परिवर्तनस्य प्रसिद्धिं दर्शयति—

**आवरीवर्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्ति, इति ।**

प्राणमहिमप्रतिपादकं मन्त्रान्तरं दर्शयितुं तस्य मन्त्रस्य तृतीयपादं प्रतीकत्वेनोदाहरति—

**अथो आवृतासोऽवतासो न कर्तृभिरिति, इति ।**

---

आ च परा च पथिभिः०—ऋ० सं० म० १ सू० १६४ ऋ० ३१ । ऋ० सं० म० १० सू० १७७ ऋ० ३ । स सध्रीचीः स विषूचीः०—ऋ० सं० म० १ सू० १६४ ऋ० ३१ । म० १० सू० १७७ ऋ० ३ । आवरीवर्ति भुवनेषु—ऋ० सं० म० १ सू० १६४ ऋ० ३१ । म० १० सू० १७७ ऋ० ३ ।

---

१ क. ख. °कत्वम् । २ क. घ. ङ. °वदस्मि° । ३ घ. ङ. °ति ता दि° ।

अथोशब्दो मन्त्रान्तरसमुच्चयार्थः ।

तच्च मन्त्रान्तरं संहितायामेवमाम्नातम्—"अप्रक्षितं वसु बिभर्षि हस्तयोरषाह्ळं सहस्तन्वि श्रुतो दधे । आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः" [ ऋ० सं० म० १ सू० ५६ ऋ० ८ ] इति ।

हे इन्द्र प्राणादित्यरूप परमेश्वराप्रक्षितमनुपहिंसितमप्रक्षीणं[1] वा वसु कर्मफलाख्यं धनं हस्तयोरधिदैवं[2] हस्तसदृशयोर्दक्षिणोत्तरायणयोर्बिभर्षि धारयसि । अध्यात्मं च जीवनादिलक्षणं कर्मफलं हस्तसदृशयोः प्राणापानवृत्त्योर्धारयसि । किंच सहो बलं त्वदीयमषाह्ळमन्यैरतिरस्कार्यमतः कर्मफलं धारयितुं समर्थोऽसि । किंच तन्वि तनौ स्वात्मनः शरीरे श्रुतः श्रवणानि ज्ञानानि दधे धारयसि । अतोऽनुष्ठानप्रयासं ज्ञात्वा तदनुरूपं फलं ददासीत्यर्थः । किंच कर्तृभिर्भूमौ हिरण्यनिधिप्रक्षेपकारिभिरवतासो न निधिस्थापनार्थं खाता अवटा गर्ता इवाऽऽवृतासो दिशः सर्वा अपि त्वदीयप्रकाशेनाऽऽच्छादिताः । निधिस्थापका हि गर्ते निधिं प्रक्षिप्य तं गर्तं मृत्पाषाणादिभिराच्छादयन्ति, एवं त्वमपि त्वदीयरश्मिभिः सर्वमाच्छादयसि । तादृशस्य ते तव तनूषु शरीरेषु क्रतवः संकल्पविशेषाः फलप्रदा भूरयो बहवो विद्यन्ते । यो यत्फलमिच्छति तस्य तत्फलमस्त्वित्येवं संकल्पमात्रेणैव ददासीत्यर्थः ।

उदाहृते मन्त्रपाद आवृतास इति पदं व्याचष्टे—

सर्वं हीदं प्राणेनाऽऽवृतम्, इति ।

देवतिर्यङ्मनुष्यादिकमिदं सर्वं देहजातं प्राणवायुना व्याप्तमित्येतत्प्रसिद्धम् ।

गुणान्तरं विधत्ते—

सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धस्तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येवं विद्यात्, इति ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

सर्वप्राण्याधारभूतोऽयमाकाशः, सोऽयं बृहतीछन्दोरूपेण प्राणेन विष्टब्धो विशेषेण स्थापित इति ध्यायेत् । तत ऊर्ध्वं तद्दृष्टान्तेन पिपीलिकापर्यन्ताः सर्वे प्राणिनो बृहतीछन्दोरूपेण प्राणेन विधृता इत्येवं ध्यायेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

---

१ क. ख. ग. °प्रहीणं वा । २ क. ग. °दैवतं ह° ।

अथ सप्तमः खण्डः ।

---

गुणान्तराणि ध्यातव्यानि प्रतिजानीते—

**अथातो विभूतयोऽस्य पुरुषस्य, इति ।**

**अथ** पूर्वोक्तप्राणगुणध्यानानन्तरं यतः "अयमेव महान्प्रजापतिः" [ ऐ० आ० २ । ३ । १ ] इति पूर्वत्र प्रतिज्ञातं पुरुषस्य प्रजापतित्वं पृथिव्यादिस्रष्टृत्वेनोपपादनीयं फलान्तराय तत्तत्स्रष्टृत्व[1]गुणा अपि विधातव्या **अतः** कारणा**दस्य पुरुषस्य विभूतयः** पृथिव्यादिस्रष्टृत्वरूपाण्यैश्वर्याण्युच्यन्त इति शेषः ।

तत्र प्रथमां विभूतिमाह—

**तस्य वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयतीदमाहरतेदमाहरतेत्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च, इति ।**

**तस्य** यथोक्तगुणविशिष्टप्राणध्यातुः पुरुषस्य प्रजापतिरूपस्य **वा**गिन्द्रियेण **पृथि**-**व्यग्निश्चे**त्युभौ **सृष्टा**विति ध्यायेत् । यदि पुरुषरूपं पितरं प्रति तावुभौ कथमुपकुरुत इति पृच्छेत्सोऽयमुपकार उच्यते । **अस्यां** पृथिव्यां व्रीहियवा[2]द्या **ओषधय** उत्प-द्यन्ते । **अग्निश्चैना** उत्पन्ना ओषधीः **स्वदयति** भक्ष्यभोज्यादिपाकेन स्वादू करोति । अत एव लोके कस्यांचित्पङ्क्तावुपविश्य भुञ्जानाः पुरुषाः परिवेष्टॄ[3]न्प्रति स्वादुतमं[4] पक्कमिदं भक्ष्यमाहरतेदं च भोज्यमाहरतेति पुनः पुनर्याचन्तेऽनेन प्रकारेणैतौ पृथिव्य[5]ग्नी पुरुष-वाग्रू[6]पं पितरं प्रत्युपकरुतः ।

एतद्विभूतिध्यानफलमाह—

**यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद, इति ।**

**याव**द्वस्तुजातम**नु**लक्ष्य **पृथिवी** प्रवृत्ताऽग्निश्च **याव**द्भोग्यजातम**नु**लक्ष्य प्रवर्तते **तावा**न्वस्तुविशिष्टो देशविशेषो**ऽस्य** वाग्विभूत्युपासकस्य **लोको** भोगभूमिर्भवति । किं च पृथिव्यग्न्योर्भोगप्रदेशो यावन्तं कालं न जीर्णो भवति तावन्तं कालमुपासकस्यापि भोगदेशो न जीर्यत ।

---

१ ग. °त्वरूपगु° । २ क. ख. ग. °वाद्योष° । ३ क. ख. °वेष्टारं प्रति । ४ क. ख. ग. °मं पाकमि° । ५ क. ख. ग. °व्यग्निपु° । ६ घ. ङ. °पं प्र° ।

द्वितीयां विभूतिमाह—

प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति वायुरस्मै पुण्यं गन्ध-मावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावा-नस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यन्तेऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद, इति ।

नासिकायामवस्थितो घ्राणेन्द्रियरूपो यः प्राणस्तेनान्तरिक्षवायू सृष्टाविति ध्यायेत् । सर्वे प्राणिनोऽन्तरिक्षमेवानुसृत्य संचारं कुर्वन्ति । दूरदेशे प्रोक्तां वार्तामपि शृण्वन्ति । न हि मूर्तेन कुड्यपर्वतादिनाऽवरुद्धे देशे संचारो वार्ताश्रवणं वा संभवति । सोऽयमन्तरिक्षकृत उपकारः । वायुश्च चम्पककेतक्यादिगतं पुण्यगन्धमानयति । दुर्ग-न्धानयनं तु न वायुस्वभावकृतं नापि तदभिज्ञानमिन्द्रियस्वभावकृतं[1] किं त्वासुरपापवेध-कृतमिति च्छन्दोग(च्छान्दोग्य)बृहदारण्यकयोः प्रपञ्चितम् । तदिदं पुण्यगन्धानयनं वायुकृत उपकारः । अन्यत्पूर्ववद्व्याख्येयम् ।

तृतीयां विभूतिमाह—

चक्षुषा सृष्टौ द्यौश्चाऽऽदित्यश्च द्यौर्ह्यस्मै वृष्टिम-न्नाद्यं संप्रयच्छत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चाऽऽ-दित्यश्च यावदनु द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेत-योर्न जीर्यते दिवश्चाऽऽदित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद , इति ।

द्युलोको हि मेघं संपाद्य वृष्टिद्वारेण व्रीह्याद्यन्नं प्रयच्छति । आदित्यस्तु स्वकीयं ज्योतिः प्रसार्य वस्तूनां प्रकाशमभिव्यक्तिं करोति । अन्यत्पूर्ववत् ।

चतुर्थीं विभूतिमाह—

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमा-यतीँ३ दिग्भ्यो विशृणोति चन्द्रमा अस्मै पूर्व-पक्षापरपक्षान्विचिनोति पुण्याय कर्मण एवमेते

---

१ घ. ङ. °तं वदति किं ।

श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद, इति ।

एनमुपासकं पुरुषं प्रति दिग्भ्यः सकाशात्सेवकाः पुरुषा भोग्यवस्तूनि चाऽऽगच्छन्ति । तथा मूर्तद्रव्यव्यवधानाभावे सति दिग्भ्यः सकाशाद्दूरे[1] प्रोक्तमपि वचनं विशेषेण शृणोति । चन्द्रमास्तस्य पुरुषस्य दर्शपूर्णमासादिपुण्यकर्मार्थं शुक्लकृष्णपक्षान्बहुविधमासंगतान्[2]विशेषेण संपादयति ।

पञ्चमीं विभूतिमाह—

मनसा सृष्टा आपश्च वरुणश्चाऽऽपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद, इति ।

इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके प्रथमाध्याये सप्तमः खण्डः ॥ ७ ॥

तटाक[3]पुण्यनद्या[4]दिषु वर्तमाना आपः स्नानाचमनमार्जनद्वारेणास्योपासकस्य श्रौतस्मार्तपुण्यकर्मानुष्ठानाय श्रद्धामास्तिक्यमुत्पादयन्ति । वरुणस्त्वस्य पुत्रादिरूपां प्रजां पापप्रवृत्तेर्निवार्य धर्मे प्रवर्तयति । अन्यत्पूर्ववत् । ननु " हृदयान्मनो मनसश्चन्द्रमाः " [ ऐ० आ० २ अ० ४ ख० १ ] इत्येवमुपरिष्टाच्चन्द्रमसो मनःकार्यत्वं वक्ष्यति । अत्र तु श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्चेति श्रोत्रकार्यत्वं कथमुच्यत इति, नायं दोषः । अस्याः सृष्टेरुपासनार्थत्वात् । न खलु यथावस्त्वेवोपासितव्यमिति कश्चिन्नियमोऽस्ति किं तु यथावचनमेवोपासितव्यमित्येतावानेव नियमः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके प्रथमाध्याये सप्तमः खण्डः ॥ ७ ॥

---

१ घ. ङ. °शाद्दूरतः प्रो° । २ ग. °मासग° । घ. ङ. °माग° । ३ क. तडाक° । ४ घ. ङ. °नदीषु ।

अथाष्टमः खण्डः ।

---

प्राणदेवताया नानाविधविभूतिरूपान्ध्येयगुणानुक्त्वा समस्तकार्य[1]कारणरूपजगदात्मकत्वलक्षणं गुणं ध्येयं विधत्ते—

**आपा३ इत्याप इति तदिदमाप एवेदं वै मूलमद-
स्तूलमयं पितैते पुत्रा यत्र ह क्व च पुत्रस्य तत्पितु-
र्यत्र वा पितुस्तद्वा पुत्रस्येत्येतत्तदुक्तं भवति, इति।**

पूर्वत्र—" तस्य वाचा सृष्टौ " [ऐ० आ० २ अ० १ ख० ७] इत्यादिना पुरुषस्य सृष्टिहेतुत्वं यदुक्तं तदेतन्निमित्तकारणत्वाभिप्रायम् । पुरुषो हि पूर्वस्मिञ्जन्मनि ज्ञानकर्मणी अनुष्ठायेदानींतनसृष्टेर्निमित्तं भवति । अत्र तु जगत उपादानकारणं विचार्य निर्णीयते । श्रुतिर्विचारार्था। अप्शब्देन पञ्च भूतान्युपलक्ष्यन्ते । स्थावरजङ्गमदेहरूपस्य जगतः किं पञ्च भूतान्युपादानमाहोस्विदन्यत्किंचिदिति संशये सत्यप्शब्दोपलक्षितानि पञ्च भूतान्येवोपादानमिति निर्णीयोच्यते। कार्यभूतेषु देहेषु पञ्चभूतानुगतेर्दृश्यमानत्वात्। सा चानुगतिर्गर्भोपनिषद्याम्नाता—"अस्मिन्पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजो यत्संचरति स वायुर्यत्सुषिरं तदाकाशमित्युच्यते" [गर्भो० १ ।] इति। तत्तस्मात्कारणादिदं कृत्स्नदेहरूपं जगदप्शब्दोपलक्षितानि पञ्च भूतान्येव कार्यकारणयोर्मृद्घटयोरत्यन्तभेदादर्शनात् । इदं वै यथोक्तमप्शब्दोपलक्षितभूतपञ्चकमेव **मूलमु**पादानं कारणम**दः** स्थावरजङ्गमदेहरूपं जगत्**तूलं** कार्यम्। अतः परस्परैक्यं युक्तम्। तथा निमित्तकारणभूतोऽयं पुरुषः **पिता** । **एते** पृथिव्यग्न्यादिदेवतादेहाः **पुत्राः** । तयोश्च परस्परं नात्यन्तं भेदः । कथं भेदाभाव इति चेत्तदुच्यते—लोके **पुत्रस्य** वस्तु **यत्र ह क्व च** यस्मिन्कस्मिन्नपि ग्रामान्तरे विद्यमानं तत्सर्वं **पितुः** स्वं भवति। पिता हि तदानीयानुभवति । अथवा **पितुः** संबन्धि यद्वस्तु ग्रामान्तरे विद्यते **तद्वा** तदपि **पुत्रस्य** स्वं भवत्येव । पुत्रोऽपि तदानीयानुभवति । परस्परद्रव्यानुभवेन यदैक्यमस्त्येतदैक्यं तेत्तेनायं पितैते पुत्रा इति वाक्येनोक्तं भवति । भूतपञ्चकस्य पृथिव्यादिदेवतादेहानां च कार्यकारणरूपेण यदैक्यमुपासकपुरुषस्य पितृरूपस्य पुत्ररूपाणां देवतात्मनां च यदैक्यं तदुभयं[2] प्राणगुणत्वेन ध्येयमित्यर्थः ।

उक्तार्थदार्ढ्याय महर्षिवाक्यं दर्शयति—

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय
आऽहं मां देवेभ्यो वेद ओ मद्देवान्वे-
देतःप्रदाना ह्येत इतःसंभृता इति, इति ।**

---

१ ख. ग. र्यंकर । २ घ. ङ. तदेतदुभयं पि ।

इतराख्यायाः कस्याश्चित्स्त्रिया अपत्यमैतरेयः स च नाम्ना महिदासस्तादृशो महर्षिस्तदेतत्पूर्वोक्तं कार्यकारणद्वयैक्यं पितृपुत्रैक्यं चोपासनया प्राणात्मकत्वं प्राप्तस्य स्वस्य गुणत्वेन विद्वाञ्शिष्याणामग्रे तत्प्रकटनार्थमिदं वाक्यमुक्तवान् । मामहमादेवेभ्यो वेद । आकारो निपातोऽभिविधौ वर्तते । देवैः सहितं तदभिन्नं मत्स्वरूपमहं वेदोपासे । ओं मदित्यत्राऽऽकार उकारश्चेति पदद्वयम् । देवानु देवानपि सर्वाना मद्वेद मया सहितानेकत्वेनोपासे । न च पुरुषस्य मम देवसाहित्यमयुक्तमिति शङ्कनीयम् । एते देवा इतःप्रदाना हि । इतोऽस्माल्लोकात्पुरोडाशादि प्रदानं येषां ते इतःप्रदानाः । तस्मादेव कारणादितःसंभृता एतल्लोकप्रत्ताद्धविषः सम्यक्पोषिताः । तेनोपासकस्य देवैः साहित्यं युक्तमित्येवं महर्षिरुवाच ।

गुणान्तरं विधत्ते—

**स एष गिरिश्चक्षुः श्रोत्रं मनो वाक्प्राणस्तं ब्रह्मगिरिरित्याचक्षते, इति ।**

योऽयं चक्षुरादीन्द्रियसमूहः स एष प्राणदेवताया गिरणाद्गिरिरित्युच्यते । यथा निगीर्णमन्नादिकं बहिर्नोपलभ्यते तथेयं प्राणदेवता चक्षुरादीन्द्रियैर्निगीर्णेव तिरोहिता सती लौकिकैर्नोपलभ्यते । यस्मादेवं तस्मात्तं चक्षुरादीन्द्रियसंघातं ब्रह्मगिरिरित्येवमभिज्ञा आचक्षते । प्राणरूपस्य ब्रह्मणो निगरणतिरोधानाद्ब्रह्मगिरित्वम् । चक्षुरादिरूपेण तिरोहितं प्राणरूपं ब्रह्मेति ध्यायेत् ।

ब्रह्मगिरि[त्व]गुणध्यानस्य फलमाह—

**गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद, इति ।**

पापरूपः शत्रुरनुष्ठानविघ्नरूपं द्वेषं करोति तं गिरति विनाशयति । स च पाप्मा पराभूतः सर्वात्मना विनष्टो भवति ।

तामेतामुपास्यां प्राणदेवतां प्रशंसति । यद्वा गुणान्तराणि विधत्ते—

**स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च, इति ।**

योऽयमुपास्यो देवः स एष देहेन्द्रियादिसंघातमस्यति क्षिपति प्रेरयतीत्यसुः । प्रकर्षेणानिति स्वयं चेष्टत इति प्राणः । एतस्या देवतायाः शरीरेष्ववस्थाने सति जीवात्माऽपि तत्र भवत्यवतिष्ठते तस्माज्जीवात्मसद्भावहेतुत्वाद्भूतिरित्युच्यते । प्राणदेवताया निर्गमने सत्यत्र जीवात्मा न भवति नावतिष्ठते तस्मादभूतिरित्युच्यते । गुणचतुष्टयं ध्येयमित्यर्थः ।

---

१ क. ख. ओमित्य° । २ क. ख. घ. ङ. °रणाति° ।

तत्र भूतिगुणं प्रशंसति—

**तं भूतिरिति देवा उपासांचक्रिरे ते बभूवुस्तस्मा-**
**द्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति,** इति ।

तं प्राणदेवं जीवात्मसद्भावहेतुत्वेन भूतिगुणयुक्तोऽयमित्युपास्य वागाद्यभिमानिनो **देवा बभूवुर्भूतिमैश्वर्यं** प्रापुः । यस्माद्भूतिगुणयुक्तोऽयं प्राणस्तस्मादेव कारणादिदानीमपि **सुप्तः** पुमान्भूतिगुणद्योतकं भूशब्दस्यानुकरणरूपं ध्वनिं पुनः पुनः कुर्वन्प्रकर्षेण श्वासं करोति ।

अभूतिगुणं निन्दति—

**अभूतिरित्यसुरास्ते पराबभूवुः,** इति ।

प्राणनिर्गमनेन जीवस्यात्र योऽयमभावः सोऽयमभूतिशब्देनोच्यते । तद्गुणकं प्राणमुपास्या**सुराः** पराभूता विनष्टाः । अत एव च श्रुत्यन्तरं पठ्यते—"तं यथा यथोपासते तदेव भवति" इति ।

भूत्यभूतिगुणद्वयध्यानस्य फलं दर्शयति—

**भवत्यात्मना पराऽस्य द्विषन्पाप्मा**
**भ्रातृव्यो भवति य एवं वेद,** इति ।

अयं प्राणदेवः स्वस्य सद्भावहेतुर्वैरिणामभावहेतुरित्येवं **यः** पुमानुपास्ते स पुमा**नात्मना भवति** स्वयं चिरजीवी भवति । शत्रुश्च **पराभवति** । नन्वभूतिगुणः पूर्वं निन्दितः कथमङ्गी क्रियत इति चेत्प्रकारभेदादिति ब्रूमः । त(स्व)स्यैवाभावहेतुरित्येवमसुराणां यदुपासनं तन्निन्दितं वैरिणामभावहेतुरित्युपासनं त्वङ्गी क्रियते ।

गुणान्तरं विधत्ते—

**स एष मृत्युश्चैवामृतं च,** इति ।

स्वनिर्गमनेन देहमरणात्प्राणस्य मृत्युत्वम् । स्वावस्थानेन देहमरणाभावादमृतत्वम् । एतद्गुणद्वयं ध्यायेत् ।

यथोक्तगुणोपेतं प्राणं प्रशंसितुं मन्त्रमुदाहरति—

**तदुक्तमृषिणा,** इति ।

स च मन्त्रः संहितायामेवमाम्नातः—

"अपाङ्प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न निचिक्युरन्यम्" इति ।

[ ऋ० सं० म० १ सू० १६४ ऋ० ३८ ] तस्यायमर्थः—अयं प्राणवायुर्देहमध्ये स्वधया गृभीतः । स्वधाशब्दोऽन्नवाची । भुक्तेनान्नेन परिगृहीतोऽवस्थापितः सन्नध ऊर्ध्वं च संचरति । मलमूत्रापनयनार्थमधोभागेऽञ्चति गच्छतीत्यपाङ् । श्वासार्थं

प्रकृष्टे मुखेऽञ्चति गच्छतीत्यपाङ् । एवंविधः सन्नेति गच्छति सर्वदा संचरति । स च प्राणः स्वयममर्त्यो मरणरहितः सन्मर्त्येन मरणोपेतेन शरीरेण सह (स)योनिः समानस्थान एकत्रावस्थितः । जतुकाष्ठवद्देहप्राणयोरत्यन्तं संश्लेष एकत्रावस्थानम् । प्राणस्य निर्गमे देहस्य मरणान्मर्त्यत्वम् । प्राणस्य तु मरणशब्दवाच्यप्राणवियोगासंभवादमर्त्यत्वम् । ता शश्वन्ता तौ देहप्राणौ शाश्वतिकौ । प्राणस्य विनाशाभावेन तत्सहचारिणो देहस्यापि च्छत्रिणो गच्छन्तीतिवच्छाश्वतिकत्वमुपचर्यते । कीदृशौ तौ—विषूचीना विष्वक्सर्वतोऽञ्चतस्तौ विषूचीनौ, विविधव्यापारयुक्तौ । प्राणो देहेन्द्रियादींश्चालयति, देहस्तु प्राणेन्द्रियाणामाधारत्वेनावतिष्ठते । पुनरपि कीदृशौ—वियन्ता परस्परविरोधेन गच्छन्तौ । देहो मृतः सन्भूमौ गच्छति, तद्वैपरीत्येन प्राण ऊर्ध्वं लोकान्तरे गच्छति । तयोरुभयोर्मध्येऽन्यतरं देहं निचिक्युः । अन्नपानाभ्यां मनुष्यादयो निचयं वृद्धिं प्रापितवन्तः । अन्यं तु प्राणं न निचिक्युः, न ह्यन्नपानाभ्यां प्राणो वर्धत इति ।

तस्य[2] मन्त्रस्य प्रथमं पादं व्याचष्टे—

अपाङ्प्राङेति स्वधया गृभीत इत्यपानेन
ह्ययं यतः प्राणो न पराङ्भवति, इति ।

यतो यस्मात्कारणाद्धयं प्राणोऽपानेनाधोवृत्तिव्यापारेणान्तराकृष्टः सन्पराङ्बहिर्गतो न भवति । यद्यपानवृत्त्या नाऽऽकृष्येत तर्हि श्वासरूपेण बहिर्निर्गत्य तथैव गच्छेत् । न पुनर्देहे प्रत्यागच्छेत् । अस्यार्थस्यानुभवप्रसिद्धयर्थो[4] हिशब्दः ।

द्वितीयपादं व्याचष्टे—

अमर्त्यो मर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि
मर्त्यानि हीमानि शरीराणी३ अमृतैषा देवता, इति ।

एतेन प्राणेन सहेदं सर्वं शरीरजातं समानस्थानकमित्येतत्प्रसिद्धम्[5] । शरीराणि मर्त्यानीत्येतदत्यन्तं प्रसिद्धमिति द्योतयितुं हिशब्दः प्लुतिश्च । प्राणदेवता त्वमृता ।

उत्तरार्धं व्याचष्टे—

ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं

---

अपाङ्प्राङेति०—ऋ० सं० म० १ सू० १६४ ऋ० ३८ । अमर्त्यो मर्त्येना०—ऋ० सं० म० १ सू० १६४ ऋ० ३८ । ता शश्वन्ता०—ऋ० सं० म० १ सू० १६४ ऋ० ३८ ।

---

१ क. ग. °ष्वगञ्चनौ, विवि° । २ क. ख. ग. एतस्य । ३ ख. ग. °पारान्तरे° । ४ क. ख. ग. °सिद्धार्थो । ५ क. ख. ग. °सिद्धौ । श° ।

चिक्युर्न निचिक्युरन्यमिति निचिन्वन्ति ह्येवे-
मानि शरीराणी३ अमृतैवैषा देवता, इति।

शरीराणामन्नादिना वृद्धिरत्यन्तप्रसिद्धा। प्राणदेवता त्वमृतैव न तु जन्मवृद्ध्यादिविकारस्तस्या अस्ति।

अमृतत्वगुणध्यानफलमाह—

अमृतो ह वा अमुष्मिँल्लोके संभवत्यमृतः सर्वेभ्यो
भूतेभ्यो ददृशे य एवं वेद य एवं वेद, इति॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके प्रथमा-
ध्यायेऽष्टमः खण्डः॥ ८॥

इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यके
प्रथमोऽध्यायः॥ १॥

उपासकः स्वर्गलोके हिरण्यगर्भत्वं प्राप्य मरणरहितो भवति। ततः सर्वप्राण्युपकारार्थमादित्यमण्डले सर्वैर्दृश्यमानो भवति। अभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यक-
भाष्ये द्वितीयारण्यके प्रथमाध्यायेऽष्टमः खण्डः॥ ८॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणा-
रण्यकभाष्ये द्वितीयारण्यके प्रथमोऽध्यायः समाप्तः॥ १॥

---

अथ द्वितीयारण्यके द्वितीयोऽध्यायः।

तत्र प्रथमः खण्डः। (नवमः)

---

उक्थे ध्यातव्यस्य प्राणस्य परस्परविलक्षणा बहव उपास्यगुणाः प्रथमेऽध्याये दर्शिताः। द्वितीये तु प्रथममण्डलद्रष्टृमुनिरूपत्वादयो बहवो गुणा वक्तव्याः। तत्रैकं गुणं विधत्ते—

एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष
तपति प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य
एष तपति तं शतं वर्षाण्यभ्यार्चत्तस्मा-
च्छतं वर्षाणि पुरुषायुषो भवन्ति तं

---

१ क. 'नस्य फ'।

यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्मा-
च्छतर्चिन इत्याचक्षत एतमेव सन्तम्, इति ।

य एष आदित्यो मण्डले तपति स एष पुरुषरूपेणोपासकजीवरूपेणेमं लोकमवलोक्यमानमिममुपासकदेहमभ्यार्चत्स्वप्रवेशेनाभितोऽर्चनीयमकरोत् । पुरुषरूपाभावे हि शवरूपो देहोऽयमपूज्यः स्यात् । न च प्रस्तुतं प्राणं परित्यज्य किमित्यादित्यो वर्ण्यत इति शङ्कनीयम् । यस्मादादित्यरूपेण प्राण एव तच्छरीरमर्चनयोग्यमकरोत् । य एष मण्डलस्थोऽस्माभिर्दृश्यमानस्तपति स एष प्राणो हि । न खल्वादित्यप्राणयोर्भेदोऽस्ति, अध्यात्ममधिदैवं चेत्येवं स्थानभेदमात्रम् । अत एव—"आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णाते" [ प्रश्नो० ३ । ८ ] इति श्रुत्यन्तरे पठ्यते । एक एव पदार्थो देहं प्रवर्तयितुमन्तः स्थितो दृष्टिमनुग्रहीतुं बहिः स्थित इत्येतावदेव द्वयोर्वैषम्यम् । स प्राणस्तं मनुष्यदेहं शतसंख्याकान्संवत्सरान्पूजनीयमकरोत् । तस्मात्कारणात्पुरुषायुषो मनुष्याणामायूंषि शतसंख्याकाः संवत्सरा भवन्ति । यस्मादयं प्राणस्तं मनुष्यदेहं वर्षशतमर्चितवांस्तस्मात्तथैव[1] व्युत्पत्त्या प्राणस्यावतारभूताः[2] प्रथममण्डलद्रष्टारो मुनयः शतर्चिसंज्ञकाः संपन्नाः । यस्मात्प्राणनिष्पादितोऽर्चनीयवशाच्छतर्चिनामका[3] मुनयस्तस्मात्तदुपासका[4] एतमेव प्राणरूपं[5] सन्तं शतर्चिनामका मुनय इत्याचक्षते । प्राणस्य तन्मुनिरूपत्वं ध्यायेदित्यर्थः ।

द्वितीयं गुणं विधत्ते—

स इदं सर्वं मध्यतो दधे यदिदं किंच स यदिदं
सर्वं मध्यतो दधे यदिदं किंच तस्मान्माध्यमास्त-
स्मान्माध्यमा इत्याचक्षत एतमेव सन्तम् , इति ।

प्राणदेवो यत्किंचिद्देहजातमस्ति तदिदं सर्वं स्वयं मध्यतोऽवस्थाय धारितवांस्तस्मात्प्राणावतारविशेषाः केचिदृषयो माध्यमनामकाः संपन्नाः । तद्रूपत्वं प्राणस्य ध्यायेत् ।

तृतीयं गुणं विधत्ते—

प्राणो वै गृत्सोऽपानो मदः स यत्प्राणो गृत्सोऽपानो मदस्तस्मा-
द्गृत्समदस्तस्माद्गृत्समद इत्याचक्षत एतमेव सन्तम् , इति ।

यः प्राणोऽस्ति स एव स्वापकाले वागादीनां निगरणाद्गृत्स इत्युच्यते । अपानश्च रेतोविसर्गकारकमदहेतुत्वान्मद इत्युच्यते । तदुभयावतारो मुनिर्गृत्समदनामकः ।

---

१ क. ख. °स्मात्ये(दे)तयैव । २ क. घ. ङ. °ता अर्च° । ३ क. ख. ग. °र्चनव° । ४ ख. °स्मादु° । घ. ङ. °स्मादेतदु° । ५ ग. प्राणपुरुषं ।

चतुर्थं विधत्ते—

तस्येदं विश्वं मित्रमासीद्यदिदं किंच तद्यदस्येदं
विश्वं मित्रमासीद्यदिदं किंच तस्माद्विश्वामित्र-
स्तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तम्, इति।

तस्य प्राणदेवस्य भोक्तुरिदं विश्वं भोग्यत्वेन मित्रमासीत्।

पञ्चमं विधत्ते—

तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं
यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वाम-
देवस्तस्माद्वामदेव इत्याचक्षत एतमेव सन्तम्, इति।

वागादयो देवाः सर्वे तं प्राणमुद्दिश्य परस्परमब्रुवन्। अयं वै प्राण एव नोऽस्माकं सर्वेषां मध्ये वामो वननीयो भजनीय इति। देवेषु मध्ये वाम इति व्युत्पत्त्या वामदेवनाम संपन्नम्।

षष्ठं विधत्ते—

स इदं सर्वं पाप्मनोऽत्रायत यदिदं किंच स
यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किंच तस्माद-
त्रयस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम्, इति॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके द्वितीयाध्याये
प्रथमः खण्डः॥ १॥ (९)

यत्किंचिदिदं मनुष्यजातमस्ति तत्सर्वं स प्राणः पाप्मनः सकाशादत्रायत रक्षितवान्। तस्मादत्रायतेत्यत्रिरिति निर्वचनं संपन्नम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यक-
भाष्ये द्वितीयारण्यके द्वितीयाध्याये प्रथमः खण्डः॥ १॥ (९)

---

अथ द्वितीयः खण्डः। (दशमः)

---

पूर्वत्र शतर्चिप्रभृतिमुनिस्वरूपलक्षणाः षड्गुणा अभिहिताः, अथ भरद्वाजस्वरूपत्वादयो दश गुणा उच्यन्ते। तत्र प्रथमं गुणं विधत्ते—

एष उ एव बिभ्रद्वाजः प्रजा वै वाजस्ता
एष बिभर्ति यद्बिभर्ति तस्माद्भरद्वाजस्त-
स्माद्भरद्वाज इत्याचक्षत एतमेव सन्तम्, इति।

यः प्राणोऽस्ति स एष एव विभ्रद्वाजनामकः । वजिधातुर्गत्यर्थः । गतिमत्त्वात्प्रजानां देहो वाजशब्देनोच्यते । अथवा श्रुतौ—"अन्नं वै वाजः" इत्युक्तेरन्नसंबन्धाद्वाजशब्देन प्रजा विवक्षिताः । तं प्रजारूपं वाजमेष प्राणः स्वप्रवेशेन बिभर्ति पोषयतीति बिभ्रद्वाजः । प्रजा वै वाज इत्यादिना भरद्वाजनामनिर्वचनमुक्तम् ।

द्वितीयं गुणं विधत्ते—

**तं देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठस्तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तम्, इति ।**

अयमेव प्राणोऽस्माकं सर्वेषां स्वप्रवेशेनात्यन्तं निवासहेतुः सन्वसिष्ठ इति च देवा अब्रुवन् ।

तृतीयं विधत्ते—

**स इदं सर्वमभिप्रागाद्यदिदं किंच स यदिदं सर्वमभिप्रागाद्यदिदं किंच तस्मात्प्रगाथास्तस्मात्प्रगाथा इत्याचक्षत एतमेव सन्तम्, इति ।**

स प्राण इदं सर्वं शरीरजातं स्वानुप्रवेशेनाभिप्रागात्सर्वतः प्रगतवांस्तस्मात्प्राणदेवताया मूर्तिविशेषप्रतिपादका ऋग्द्वयात्मकसूक्तरूपा[1] मन्त्रविशेषाः प्रगाथा इत्युच्यन्ते । तन्मन्त्रद्रष्टारो[2] महर्षयोऽपि प्रगाथनामकाः ।

चतुर्थं विधत्ते—

**स इदं सर्वमभ्यपवयत यदिदं किंच स यदिदं सर्वमभ्यपवयत यदिदं किंच तस्मात्पावमान्यस्तस्मात्पावमान्य इत्याचक्षत एतमेव सन्तम्, इति ।**

लोके क्षुद्रं यत्किंचिदस्ति तत्सर्वं प्राणोऽभ्यपवयताभितः पूतं शुद्धमकरोत्ततस्तन्मूर्तिविशेषप्रतिपादिका ऋचस्तद्द्रष्टारो महर्षयश्च पावमान्य इत्युच्यन्ते ।

पञ्चमं विधत्ते—

**सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च तस्मात्क्षुद्रसूक्तास्तस्मात्क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तम्, इति ।**

लोके क्षुद्रं पिपीलिकादिरूपं यदस्ति महच्च गजाश्वादिरूपं यदस्ति तत्सर्वमहमेव भवानीत्येवं स प्राणदेवः कदाचिदब्रवीदतस्तत्प्राणप्रतिपादकमन्त्रसंघाः क्षुद्रसू-

---

१ ख. ग. °त्मके सू° । २ क. ख. ग. °ष्टारोऽपि म° ।

क्तमहासूक्तनामानोऽभवन् "जातवेदसे" [ ऋ० सं० म० १ सू० ९९ ऋ० १ ] इति सूक्तमेकर्चत्वात्क्षुद्रसूक्तरूपम्। "अस्य वामस्य" [ ऋ० सं० म० १ सू० १६४ ऋ० १ ] इत्येतत्सूक्तं द्विपञ्चाशदृचत्वान्महासूक्तम् । एवमुदाहरणान्तराणि द्रष्टव्यानि। तत्तत्सूक्तद्रष्टारो महर्षयश्च क्षुद्रसूक्तमहासूक्तनामभ्यामुच्यन्ते । तस्मात्क्षुद्रसूक्ता इति वाक्यं महासूक्तानामप्युपलक्षणम्।

षष्ठं विधत्ते—

सूक्तं बतावोचतेति तत्सूक्तमभवत्तस्मात्सूक्तं
तस्मात्सूक्तमित्याचक्षत एतमेव सन्तम्, इति।

कदाचिदयं प्राणदेवः स्वमहिमप्रतिपादकस्य मन्त्रजातस्य वक्तारं कंचिन्महर्षिं दृष्ट्वा तमुवाचायं महर्षिः सूक्तं शोभनं वचनमवोचताऽऽश्चर्यमेतदिति । बतशब्द आश्चर्यवाची। यस्मादयं देवो मन्त्रजातं सूक्तशब्देन व्याजहार तस्मान्मन्त्रजातं सूक्तनामकमभवत्। तद्द्रष्टाऽपि सूक्तनामकोऽभूत्।

सप्तमं विधत्ते—

एष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत
स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृ-
क्तस्मादृगित्याचक्षत एतमेव सन्तम्, इति।

योऽयं प्राणदेवोऽस्त्येष एवर्क्शब्देनाभिधीयते । यस्मादेष प्राणः सर्वभूतार्थं तं तं देहमर्चत स्वप्रवेशेन पूजितमकरोत्तस्मात्प्राणप्रतिपादको मन्त्रस्तद्द्रष्टा चर्क्शब्देनाभिधीयते ।

अष्टमं विधत्ते—

एष वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत
स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत तस्मादर्धर्च-
स्तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम्, इति ।

ऋचो भागोऽर्धर्चः सोऽप्येष प्राण एव। अर्धर्चशब्दः स्थानवाची। देवमनुष्यादीनां लोकविशेषरूपाणि यानि स्थानानि सर्वाणि तदर्थमयं प्राणोऽर्चत तत्स्थानवासिप्राणिजातं पूजितमकरोत्तस्मात्तादृशप्राणमहिमवाची मन्त्रभागस्तद्द्रष्टा चार्धर्चशब्देनोच्यते।

नवमं विधत्ते—

एष वै पदमेष हीमानि सर्वाणि भूतानि पादि

१ क. ख. 'चायमृषिः सू'।

**स यदिमानि सर्वाणि भूतानि पादि तस्मा-त्पदं तस्मात्पदमित्याचक्षत एतमेव सन्तम्,** इति ।

पदशब्देन सुबन्ततिङन्तादिरूपः कस्यचिदर्थस्य वाचकः शब्दो विवक्षितः । तथैवार्धर्चस्य भागः पादशब्दाभिधेयोऽपि विवक्षितः । तदुभयमेष प्राण एव । यस्मात्सर्वाणि भूतान्यसौ प्राणः **पादि** स्वप्रवेशेन प्राप्तवांस्तस्मात्तन्महिमप्रतिपादकोऽर्धर्चभागः शब्दविशेषस्तद्द्रष्टा च पदशब्देनोच्यते ।

दशमं विधत्ते—

**एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्माद-क्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तम्,** इति ।

अकारादिरूपं यदक्षरं लोकप्रसिद्धं तदेष प्राण एव । यस्मादेष सर्वभूतानामनुष्ठातॄणामर्थे **क्षरति** क्षरणं फलप्रदानरूपं करोति । प्राणवदन्ये पुरुषा **एनं नैवातिक्षरन्ति** प्राणमविलङ्घ्य क्षरणे फलप्रदाने स्वयं न समर्थाः । अत एव च्छन्दोगा आमनन्ति—"प्राणः प्राणाय ददाति" [ छान्दो० ७ । १९ । १ ] इति । न खलु प्राणरहितः शवदेहोऽन्यस्मै शवदेहाय यत्किंचिद्द्रव्यादिकं दातुं प्रभवति, अतोऽयं प्राणमतिलङ्घ्य क्षरणं नास्ति तस्य प्राणस्य वाचकं वर्णजातं तद्द्रष्टा वाऽक्षरशब्देनोच्यते । तदेवं सर्वमन्त्रसर्वमहर्षिस्वरूपत्वं प्राणस्य ध्येयमिति तात्पर्यार्थः ।

तमिमं संक्षिप्य दर्शयति—

**ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्,** इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥ ( १० )

"अग्निमीळे पुरोहितम्" [ ऋ० सं० म० १ सू० १ ऋ० १ ] इत्यारभ्य "यथा वः सुसहा सति" [ ऋ० सं० म० १० सू० १९१ ऋ० ४ ] इत्यन्ताः समाम्नाता ऋचो याः सन्ति **ता एताः सर्वा** अप्येकैव व्याहृतिरेकशब्दात्मिकाः । तथा चर्ग्वेदयजुर्वेदादयो **वेदाः** सन्ति ये च **घोषा** झभघढधादयो घोषैर्युक्ता वर्णाः सन्ति ते सर्व **एकैव व्याहृतिः** । कोऽसावेकः शब्द इति स उच्यते—**प्राण एव** प्राणशब्देनैव सर्वं शब्दजातं संगृहीतम् । प्राणशक्त्यैव सर्वेषामुच्चार्यमाणतया प्राणेऽ-

१ घ. ङ. 'था ऋग्वेद' । २ क. ख. ग. 'गसंगृ' ।

न्तर्भावात् । तस्मात्प्राण ऋच ऋगुपलक्षितं सर्वं शब्दजातं महर्षिजातं च प्राणस्वरूपमित्येवोपासितव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये द्वितीयारण्यके द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥ (१०)

---

अथ तृतीयः खण्डः । ( एकादशः )

---

प्राणस्य कृत्स्नशब्दार्थरूपध्यानमभिधाय शस्त्रगतासु तृचाशीतिष्विन्द्रसंबन्धयन्नेतव- दृष्टिं विदधान उपाख्यानमाह—

**विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषससाद स हान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय, इति ।**

कदाचिन्महाव्रताख्ये कर्मणि विश्वामित्रो महर्षिर्होता सन्नेतन्महाव्रताख्यमहः शंसिष्यति शंसितुमुपक्रमं करोति तदानीमिन्द्रोऽन्नार्थी संस्तं विश्वामित्रमुपनिषससादोपेत्य समीपे स्थितवान् । अधिकः सकारश्छान्दसः । स च विश्वामित्र इन्द्रस्याभिप्रायं ज्ञात्वा तदन्नभूतमेव तन्मन्त्रजातमितीन्द्रस्याग्रे कथयित्वा बृहतीछन्दस्कं मन्त्रसहस्रं शंसित्वा तेन शंसनेनेन्द्रस्य यत्प्रियं स्थानं स्वर्गरूपं तत्प्राप्तवान् । अत्र महाव्रताख्ये कर्मणि माध्यंदिनसवने निष्केवल्याख्यं किंचिच्छस्त्रं पठ्यते । तस्य च शस्त्रस्य पक्षिरूपतां परिकल्प्य तदवयवरूपाः शस्त्रभागविशेषाः क्रमेण पठ्यन्ते । पक्षिणश्च मध्यदेहो ग्रीवा शिरः पक्षमूलं दक्षिणः पक्ष उत्तरः पक्षः +पुच्छमुदरस्थानमुदरमूरू इत्येवं दशावयवाः सन्त्यतः शस्त्रेऽपि दशावयवरूपत्वेन " तदिदास भुवनेषु ज्येष्ठम् " [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिका बहुविधाः सूक्तविशेषाः प्रथमारण्ये—[ऐ० आ० १ अ० ३ ख० ४] विहिताः । ते च पञ्चमारण्यके शौनकेन सम्यग्विस्तृत्योदाहृताः [ऐ० आ० ५ अ० १ ख० ६] । यद्यपि तेषु सर्वेषु नानाविधच्छन्दस्का मन्त्रा आम्नातास्तथाऽपि तेषु सर्वेष्वक्षराणि गणयित्वा षट्त्रिंशदक्षरोपेतानां बृहतीनां सहस्रं द्रष्टव्यम् ।

पुनरपि पूर्ववदाख्यानमाह—

**तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे**

---

+ पुच्छमुदरमूरू इत्येव पठितुं योग्यम् ।

---

१ क. °न्नद° । २ क. ख. ग. °दृष्टिविधान ।

**द्वितीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहती-सहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय, इति ।**

विश्वामित्रं प्रतीन्द्र एवमुवाच, हे महर्षे त्वं मदीयान्नबुद्धया शंसित्वा मदीयं प्रियं स्थानं प्राप्तवानसि हे महर्षे स तादृशस्त्वं शस्त्रं पुनरपि द्वितीयं शंसेति । अन्यत्पूर्ववद्व्याख्येयम् । ननु कृत्स्नेऽपि निष्केवल्ये शस्त्रेऽक्षरगणनया बृहतीसहस्रमेकमेव संपद्यते न तु द्वितीयमस्ति तत्कथं द्वितीयं शंसेत्यभिधीयते, नायं दोषः । अत्र बृहतीसहस्रशब्देन तदवयवानां विवक्षितत्वात् । तृचाशीतयोऽन्नत्वेनाभिहिताः " अन्नमशीतयः " इत्युक्तत्वात् । अत्रापि त्रिवारमन्नत्वेनोपन्यस्यन्ते । अतो बृहतीसहस्रशब्देनात्र प्रथमपर्याये गायत्री तृचाशीतिर्विवक्षिता । द्वितीयपर्याये बार्हती तृचाशीतिः ।

तृतीयं पर्यायमाह—

**तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहती-सहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय, इति ।**

औष्णिही तृचाशीतिरत्र बृहतीशब्देन विवक्षिता । अन्यत्पूर्ववद्व्याख्येयम् ।

तृचाशीतिष्विन्द्रान्नत्वदृष्टिं विधाय प्राणस्य सर्वात्मत्वं दर्शयन्नाख्यायिकामुपसंहरति—

**तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति स होवाच त्वामेव जानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( ११ )**

इन्द्रो हि यथोक्तप्राणात्मध्यानेन तत्साक्षात्कारं प्राप्य स्वानुभवसिद्धं सर्वात्मत्वमुपदिश्य सर्वात्मनः स्वस्य[1] तृचाशीतिरूपं यदन्नं ध्यातव्यं तन्मित्रादिविशेषणैः[2] प्रशशंस । लौकिकमित्रवत्प्रीतिजनकत्वादन्नस्य मित्रत्वम् । अभिवृद्धिहेतुत्वाद्दक्षिणत्वम् । " दक्ष वृद्धौ " [ भ्वा० ग० प० ] इति धातुः । विश्वामित्रेण शंसनकाले संपादितत्वादिदं

१ ख. ग. स्वस्मतृ° । २ ग. 'दिभिर्विशे° ।

**वैश्वामित्रम्**। तादृगन्नं प्राप्याऽऽदित्यरूपेण सर्वदा लोके **तपन्नेष एवास्मीत्येवं** ध्यानदृष्टिसिद्धं स्वकीयं रूपमिन्द्रः **प्रोवाच** ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( ११ )

---

अथ चतुर्थः खण्डः । ( द्वादशः )

---

तिसृषु तृचाशीतिष्वन्नदृष्टिं विधाय वर्णविशेषेषु शरीरादिदृष्टिं विधत्ते—

**तद्वा इदं बृहतीसहस्रं संपन्नं तस्य यानि व्यञ्जनानि तच्छरीरं यो घोषः स आत्मा य ऊष्माणः स प्राणः**, इति ।

" तदिदास भुवनेषु " [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिकं यन्मन्त्रजातं निष्केवल्यशस्त्रे विहितं **तदेवेद**मक्षरगणनारूपेण बुद्धिकौशलेन[1] **बृहतीसहस्रं संपाद्य** ध्यातव्यम्[2]। **तस्य** बृहतीसहस्रस्य मध्ये **यानि** ककारादीनि **व्यञ्जनानि** सन्ति तेषु शरीरदृष्टिं कुर्यात् । ककारादीनां हलिति पाणिनीयसंज्ञा । व्यञ्जनमिति श्रौतसंज्ञा । तामेवोपजीव्य **कौमारव्याकरणे**—"कादीनि व्यञ्जनानि" इति सूत्रितम्[3]। **यो घोषो** घकारादिवर्णः[4] **स आत्मा** मध्यशरीरम् । ये तू**ष्माणः** शषसहास्ते **प्राण**वायुस्वरूपाः । घोषोष्मादिसंज्ञाऽपि **कौमारे** सूत्रिता—"वर्गप्रथमद्वितीयाः शषसाश्चाघोषा[5] घोषवन्तोऽन्ये" "शषसहा ऊष्माणः" इति ।

तदेतच्छरीरादि[6]ध्यानं प्रशंसति—

**एतद्ध स्म वै तद्विद्वान्वासिष्ठो वासिष्ठो बभूव तत एतन्नामधेयं लेभे**, इति ।

**वसिष्ठ**नामको यो महर्षिरस्ति सोऽयं **तदे**तद्व्यञ्जनादीनां शरीरादिरूपत्वं **विद्वान्वसिष्ठ**शब्दस्याभिधेयो **बभूव** । अतिशयेन निवासहेतुत्वमाच्छादयितृत्वं[7] वा वसिष्ठत्वम् । प्राणो हि स्वप्रवेशेन निवासहेतुर्भवति । स्वव्याप्त्या सर्वमाच्छादयति । तादृशं प्राणात्मत्वं ध्यानेन प्राप्तवान्मुनिरप्यर्थद्वयवत्त्वेन वसिष्ठनामकत्वं लब्धवान् ।

पुनरपि प्रकारान्तरेण प्रशंसति—

**एतदु हैवेन्द्रो विश्वामित्राय प्रोवाचैतदु हैवेन्द्रो भरद्वाजाय प्रोवाच तस्मात्स तेन बन्धुना यज्ञेषु हूयते**, इति ।

---

१ क. °शल्येन । २ ख. ग. ध्यातवान् । ३ ख. ग. सूत्रम् । ४ ख. ग. °कारभकारा° । ५ क. °षसहाश्चा° । ख. घ. ङ. °षसहाश्च घो° । ६ ख. ङ. °दिरूपं ध्या° । ७ क. °दकत्वं ।

एतदेव व्यञ्जनादिषु शरीरत्वादिदर्शनमिन्द्रो विश्वामित्रभरद्वाजाभ्यामुपदिष्टवान् । तस्मात्स इन्द्रस्तेन शिष्यरूपेण बन्धुना सोमयागेषु सुब्रह्मण्यायामिन्द्राऽऽगच्छ हरिव आगच्छेत्येवं समाहूयते । महतेन्द्रेण महर्ष्यामुपदिष्टत्वात्प्रशस्तमित्यर्थः ।

पुनरपि व्यञ्जनानि स्वरांश्च विभ[1]ज्य तत्र रात्र्यहध्यानमहर्ध्यानं च विधत्ते—

**तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति व्यञ्जनैरेव रात्रीराप्नुवन्ति स्वरैरहानि, इति ।**

विशेषविधिसंबन्धार्थं तद्वा इत्यादेः पुनः पुनरनुवादः । षट्[2]त्रिंशदक्षरा बृहती । तस्यां च सहस्रगुणितायामक्षराण्यपि षट्त्रिंशत्संख्याकैः सह[5]स्रैर्युक्तानि भवन्ति । संवत्सरश्च षष्ट्युत्तरशतत्रयदिनात्मकः । त[3][4]स्मिन्संवत्सरे शतगुणितानि दिनान्यपि षट्त्रिंशत्सहस्रसंख्याकानि भवन्ति । ततः संख्यासाम्ये सत्यक्षरगतेषु तावत्संख्याकेषु व्यञ्जनेषु तावत्संख्याकरात्रिदृष्टिं कुर्यात् । तथा स्वरेष्वहर्दृष्टिं कुर्यात् । अकारमारभ्य मातृकायामौकारपर्यन्ता वर्णाः स्वराः । अत एव कुमारेणै[6]वं सूत्रि[7]तम्—"सिद्धो वर्णसमाम्नायः" "तत्र चतु[8]र्दशाऽऽदौ स्वराः" इति ।

यथोक्तसर्वविशेषणविशिष्टस्य प्राणदेवध्यानस्य प्रधानफलं दर्शयति—

**तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात्प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद, इति ।**

प्रज्ञामयत्वादिगुणचतुष्टयेन फलेन च संबन्धार्थं तद्वा इदमित्याद्यनुवा[9]दः । बुद्धिवि[10]शेषसंपादितस्य बृहतीसहस्रस्[11]य स्वरूपभूतः प्राणदेवः प्रज्ञामयश्चित्स्वरूपः सर्वज्ञ इत्यर्थः । देवतामयोऽग्निवाय्वादिसर्वदेवतासमष्ट्यात्मकः । ब्रह्ममयः सर्ववेदात्मकः । अमृतमयस्तत्त्वज्ञानोत्पादनेन मोक्षहेतुत्वान्मुक्तिरूपः । यः पुमानेवमुपास्ते स पुमानेव ता अग्निवाय्वादिकाः संभूय सर्वा अप्येकीकृत्याप्येति तद्देवतासमष्टिरूपं हिरण्यगर्भं प्राप्नोति ।

---

१ घ. ङ. °भजते । त° । २ क. ख. ग. °नि च भ° । ३ क. तस्मिंश्च सत्रे श° । ४ ख. ग. °स्मिन्सहस्रे श° । ५ क. ख. ग. °णिते सति दि° । ६ क. ख. °णैव सू° । ७ घ. ङ. °त्रिताः—"सि° । ८ ग. °र्देश स्व° । ९ ख. ग. °दः । वृद्धि° । १० घ ङ. °शेषैकसं° । ११ क. °स्य संपन्नस्य स्व° ।

तस्य चोपासकस्याध्यात्ममधिदैवं च व्यतिहारेण ध्यानं विधत्ते—

**तद्योऽहं सोऽसौ योऽसौ सोऽहम्, इति ।**

तत्तस्मिन्सर्वात्मके प्राणदेवतास्वरूपे **यो**ऽहमुपासकशरीरवर्ती **सोऽसौ** स एवाऽऽदित्यमण्डलस्थः पुरुषः । तथा **योऽसा**वधिदे(दै)[1]वमादित्यमण्डलस्थो[2] यः[3] पुरुषः **सोऽहं** स एवोपासकशरीरस्थोऽहमस्मीत्येवमन्योन्यतादात्म्यं ध्यायेत् ।

अध्यात्ममधिदैवं च ध्येयवस्तुन एकत्वे संवादार्थं मन्त्रमुदाहरति—

**तदुक्तमृषिणा—सूर्य आत्मा जगतस्तस्थुषश्चेति, इति ।**

कृत्स्नमन्त्रस्य प्रतीकदर्शनाय चतुर्थपादः पठितः । स च मन्त्रः **संहितायामेव**-मान्नातः—

"चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च" इति ।

[ऋ०सं०म०१सू०११५ऋ०१] अनीकशब्दो मुखवाची सैन्यवाची वा । यदेतदादित्यमण्डलं तदेतद्देवानां मुखं सर्वव्यवहारहेतुत्वात् । देवानां मध्ये मुख्यमित्यर्थः । सैन्यपक्षे बहुविधरश्मिसमूहरूपमिति व्याख्येयम् । तच्च मण्डलं चित्रं चायनीयं पूजनीयम् । यद्वा सर्वदिक्षु रश्मिप्रसारणेन विचित्रम् । देवानां मुखमित्येतदेव चक्षुरित्यादिना प्रपञ्च्यते—मित्रवरुणादीनां चक्षुःस्थानीयमिदं मण्डलम् । एतदीयेन हि प्रकाशेन सर्वे देवाः पश्यन्ति । तच्च मण्डलं लोकत्रयमाप्राः सर्वतः पूर्णं सद्वर्तते । तन्मण्डलस्थः सूर्यो जगतो जङ्गमस्य तस्थुषश्च स्थावरस्यापि प्राणिजातस्याऽऽत्मा प्रत्यक्स्वरूपमिति मन्त्रस्यार्थः ।

एतद्विज्ञानमुपसंहरति—

**एतद्ध हैवोपेक्षेतोपेक्षेत, इति ।**

**इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( १२ )**

## इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यके द्वितीयोऽध्यायः ॥ २ ॥

**एतदेव** सर्वात्मकमादित्यस्वरूपं गुरुमुखादुपेक्षेत साक्षात्कुर्यात् । अभ्यासोऽध्यायसमाप्त्यर्थः ।

---

सूर्य आत्मा जगतः०—[ ऋ० सं० म० १ सू० ११५ ऋ० १ ]

---

१ घ. ङ. 'देव आदि' । २ क. 'लस्थोऽयं पु' । ३ ग. ध्येयः ।

तद्योऽहमित्यत्र यो व्यतिहार उक्तः सोऽयं **तृतीयाध्यायस्य** तृतीयपादे चिन्तितः—

"व्यतिहारे स्वात्मरव्योरेकधा धीरुत द्विधा ।
वस्त्वैक्याद्देकधैव[1] स्याद्दार्ढ्याय व्यतिहारधीः ॥
ऐक्येऽपि व्यतिहारोक्त्या धीर्द्वेधेशस्य जीवता ।
युक्तोपास्त्यै[2] वाचनिकी मूर्तिवद्दार्ढ्यमार्थिकम् ॥

**ऐतरेयके** पठ्यते—"तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इति । तस्यायमर्थः—य एष देहेन्द्रियसाक्षी जीवात्मा स एवाऽऽदित्यमण्डलवर्ती परमात्मा, यो मण्डलवर्ती स एवास्मद्देहादिवर्तीति । तत्र स्वदेहरविमण्डलयोरन्योन्यव्यतिहारे श्रूयमाणेऽपि जीवब्रह्मैक्यलक्षणस्य वस्तुन एकत्वादेकधैव बुद्धिः कर्तव्या। न च व्यतिहारपाठवैयर्थ्यमेकस्यापि वस्तुनो दार्ढ्याय तदुपपत्तेः, इति प्राप्ते ब्रूमः—न खल्विदं तत्त्वावबोधप्रकरणं येनैकत्वप्रतिपत्तिर्दार्ढ्यमपेक्षते । किं तर्हि सगुणोपास्तिप्रकरणम् । उपास्तिश्च यथावचनमनुष्ठेया । तयोर्व्यतिहारेण द्वेधा बुद्धिः कर्तव्या । नन्वेवं सति जीवस्य ब्रह्मैक्यमुत्कर्षाय कल्पते । ब्रह्मणस्तु जीवैक्यमपकर्षाय स्यादिति चेन्नायं दोषः । यथा देहादिरहितस्याप्युपासकचित्तस्थैर्यार्थं चतुर्भुजाष्टभुजादिमूर्तिव्यपदेशेऽपि नापकर्षः, तथा वचनबलादीश्वरस्य जीवत्वोपासने का तव हानिः । यद्युपासनाय[3] व्यतिहारेऽनुष्ठीयमानेऽर्थाज्जीवब्रह्मणोरेकत्वप्रतिपत्तिर्दृढा भवेत्तर्हि चरितार्थाः संपद्यामहे । तस्माद्व्यतिहारेण द्विधा बुद्धिः कर्तव्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ (१२)

**इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यकभाष्ये द्वितीयारण्यके द्वितीयोऽध्यायः ॥ २ ॥**

---

## अथ द्वितीयारण्यके तृतीयोऽध्यायः ।

तत्र प्रथमः खण्डः । (त्रयोदशः)

---

द्वितीये महर्षिमन्त्ररूपत्वादिगुणा उक्ताः । तृतीये पञ्चविधत्वादीनि गुणान्तराण्युच्यन्ते । तत्रोक्थस्य भूतपञ्चकरूपत्वं विधत्ते—

**यो ह वा आत्मानं पञ्चविधमुक्थं वेद यस्मा-**

---

१ क. ख. ग. °धैकस्य दार्ढ्यो° । २ क. ख. ग. °पास्तौ वा° । ३ ख. ग. यद्यप्युपा° ।

दिदं सर्वमुत्तिष्ठति स संप्रतिवित्पृथिवी वायुरा-
काश आपो ज्योतींषीत्येष वा आत्मोक्थं
पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येतमेवाप्येत्ययनं
ह वै समानानां भवति य एवं वेद, इति ।

यस्मात्प्राणदेवस्य प्रतीकभूतादुक्थादिदं सर्वमुत्तिष्ठति । उक्थानुष्ठानतदुपासनफलभूतत्वाज्जगदुत्पत्तेः । तादृशमुक्थं निष्केवल्याख्यं शस्त्रं पञ्चविधमात्मानं वक्ष्यमाणपृथिव्यादिपञ्चप्रकारेणोपासकस्य स्वरूपभूतं यः पुमानुपास्ते स पुमान्संप्रतिवित्सम्यगभिज्ञः । के ते पञ्च प्रकारा इति चेदुच्यते—पृथिव्यादीनि यानि पञ्च भूतानि सन्ति तद्रूप उपासकस्याऽऽत्मा पञ्चविधमुक्थम् । एतस्मात्पञ्चभूतात्मकादुक्थादेव सर्वमिदं शरीरजातमुत्पद्यते । पुनरप्येतमेवोक्थमप्येति संहारकाले प्रविशति । न ह्युक्थस्वरूपत्वेन प्रतिपादितानि पञ्च भूतानि विहाय भौतिकस्य शरीरस्योत्पत्तिर्लयो वा संभवति । यः पुमानेवमेतस्योक्थस्य पञ्चविधत्वमुपास्ते स पुमान्समानानां ज्ञातीनामयनमाश्रयो भवति ।

तेषामुक्थस्वरूपाणां पञ्चभूतानामन्नादिरूपत्वध्यानं विधत्ते—

तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो
जायते भवत्यस्यान्नमापश्च पृथिवी चान्नमेत-
न्मयानि ह्यन्नानि भवन्ति ज्योतिश्च वायुश्चा-
न्नादमेताभ्यां हीदं सर्वमन्नमत्त्यावपनमाकाश
आकाशे हीदं सर्वं समोप्यत आवपनं ह
वै समानानां भवति य एवं वेद, इति ।

तस्मिन्पञ्चभूतात्मक उक्थे यः पुमानिदमन्नं भोग्यमिदं चान्नादं भोक्तृरूपमिति विभज्योपास्तेऽस्मिन्नुपासकेऽन्नादो भोक्तुं समर्थो रोगरहितः पुत्रो जायते । अस्य चोत्पन्नस्यान्नमपेक्षितं सर्वं संपद्यत एव । किं तदन्नं किं वाऽन्नादमिति चेत्तदुच्यते—पञ्चभूतेषु मध्य आपश्च पृथिवी चेत्युभयमन्नम् । यस्माद्व्रीहियवादीन्यन्नानि भूम्युदकविकाररूपाणि भवन्ति तस्माद्भूम्युदकयोरन्नत्वं युक्तम् । तेजश्च वायुश्चेति भूतद्वयं भोक्तृरूपम् । प्राणवायुना जाठराग्नौ प्रदीपिते सत्येताभ्यामग्निवायुभ्यां सर्वमिदमन्नजातं जनो भक्षयति । तस्माज्ज्योतिर्वाय्वोरन्नादत्वं युक्तम् । न च भूतचतुष्टयस्यैवोपयोगो न त्वाकाशस्येति शङ्कनीयम् । आकाशस्याऽऽवपनरूपत्वात् । यस्मादाकाशे

---

१ ख. ग. सर्वं जगदुत्ति° । २ घ. ङ. °च्यन्ते । पृ° । ३ क. ख. ग. पुत्र आजा° । ४ घ. °मपि क्षिप्रं स° ।

**सर्वमिदं** भोक्तृभोग्यजातं **समोप्यते** सम्यगा समन्तात्प्रक्षिप्यते तस्मादाकाशस्याऽऽवपनत्वम्। यः पुमानेवमाकाशस्यावकाशप्रदानेन भोक्तृभोग्याधारत्वमुपास्ते स पुमान्स**मानानां** ज्ञातीनामावपनमाधारो भवत्येव ।

उक्थस्वरूपेषु[1] भूतेषु भोक्तृभोग्यध्यानं विधाय भौतिकेषु तद्ध्यानं विधत्ते—

**तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नमोषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादमोषधिवनस्पतीन्हि प्राणभृतोऽदन्ति,** इति ।

ओषधिवनस्पतीनामन्नत्वं प्राणभृतां मनुष्यगवाश्वादीनां भोक्तृत्वं च लोके प्रसिद्धमिति द्योतयितुं हिशब्दः ।

अथ[2] प्राणभृत्स्वेव भोक्तृभोग्यविभागध्यानं विधत्ते[3]—

**तेषां य उभयतोदन्ताः पुरुषस्यानुविधा विहितास्तेऽन्नादा अन्नमितरे पशवस्तस्मात्त इतरान्पशूनधीव चरन्त्यधीव ह्यन्नेऽन्नादो भवति,** इति ।

**तेषां** प्राणभृतां मध्ये ये केचिदश्वादय **उभयतोदन्ता** अधोभागे चोर्ध्वभागे च दन्तपङ्क्तियुक्ताः **पुरुषस्यानुविधा** मनुष्यस्य प्रकारमनुसृत्य **विहिता** उत्पादिताः । यथा मनुष्यस्योभयतो दन्तपङ्क्ती विद्येते तद्वदश्वादीनामपि ते मनुष्याश्वादयो भोक्तृरूपेभ्य **इतरेऽ**धोभाग एव दन्तपङ्क्तियुक्ता गोमहिषादयः **पशवो** ये सन्ति **तेऽन्न**रूपाः । यस्मादेवं **तस्मा**ल्लोक उभयतोदन्ता मनुष्याश्वादय **इतरा**न्गोमहिषादीन्प्र**त्यधीव चरन्ति,** अधिका इव वर्तन्ते । अश्वादीनां मूल्यबाहुल्याद्यत्नातिशयेन रक्ष्यमाणत्वा[4]च्चाऽऽधिक्यम् । यस्माल्लोकेऽपि व्रीहियवादिका येऽन्ने पात्रे प्रक्षिप्ते सत्य**न्नादो** भोक्ता मनुष्योऽधिक **इव भवति**। तत्र मनुष्यस्य स्वातन्त्र्यादधिकत्वमन्नस्य पारतन्त्र्यान्न्यूनत्वम्।

भोक्तुराधिक्यध्यानस्य फलमाह—

**अधीव ह समानानां जायते य एवं वेद,** इति ॥

**इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥ ( १३ )**

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥ ( १३ )

---

१ ख. ग. °पेण भू° । २ ख. ग. अतः । ३ ख. ग. °विधानं विधीयते । ते° । ४ ख. ग. °त्वादाधि° ।

अथ द्वितीयः खण्डः । ( चतुर्दशः )

---

अन्नादिध्यानमुक्त्वा पुरुषस्योक्थस्वरूपस्याऽऽत्मचैतन्याविर्भावातिशययुक्तत्वध्यानं विधत्ते—

**तस्य य आत्मानमाविस्तरां वेदाश्नुते हाऽऽविर्भूयः, इति ।**

**तस्योक्थरूपस्य पुरुषस्य** शरीरे वर्तमानं चिद्रूपम**आत्मानमाविस्तरा**मतिशयेन प्रकटं **यः** पुमानुपास्ते स पुमान्भूय **आवि**रतिशयेन प्रकटत्वम**श्नुते ह** व्याप्नोत्येव । विद्यैश्वर्यादिकीर्तिं बहुलां प्राप्नोतीत्यर्थः ।

चैतन्यस्योपाधिविशेषेषु तारतम्येनाऽऽविर्भावं दर्शयितुमादावेकमुपाधिमुदाहरति—

**ओषधिवनस्पतयो यच्च किंच प्राणभृत्स आत्मानमाविस्तरां**
**वेदौषधिवनस्पतिषु हि रसो दृश्यते चित्तं प्राणभृत्सु, इति ।**

सच्चिदानन्दरूपस्य जगत्कारणस्य परमात्मनः कार्यभूताः सर्वेऽपि पदार्था आविर्भावोपाधयः। तत्राचेतनेषु मृत्पाषाणादिषु सत्तामात्रमाविर्भवति न चाऽऽत्मनो जीवरूपत्वम् । ये[1] त्वो**षधिवनस्पतयो** जीवरूपाः स्थावरा ये **च** श्वासरूपप्राणधारिणो जीवरूपा जङ्गमास्तदुभयमतिशयेनाऽऽविर्भावे स्थानमिति यो निश्चिनोतीत्यध्याहारः । **स** पुमानात्मानमतिशयेनाऽऽविर्भूतमुपास्ते । कथं स्थावरजङ्गमजीवयोराविर्भावातिशय इति चेदुच्यते । **ओषधिवनस्पतिषु** स्थावरजीवशरीरेषु **रस** आर्द्रत्वं तदेतज्जीवात्मनो लिङ्गम् । न हि काष्ठपाषाणादिषु रसोऽस्ति । यदपि **प्राणभृत्सु** जङ्गमजीवशरीरेषु **चित्त**मन्तःकरणं तदपि जीवात्मनो लिङ्गम् । तच्च मृत्पाषाणादिषु न दृश्यते । अतो रसचित्तयोर्जीवलिङ्गयोर्दर्शनादोषध्यादिष्वतिशयेनाऽऽविर्भावः सिद्धः ।

उदाहृतोपाधावपि स्थावरेभ्यो जङ्गमेष्वाविर्भावातिशयं दर्शयति—

**प्राणभृत्सु त्वेवाऽऽविस्तरामात्मा तेषु हि**
**रसोऽपि दृश्यते न चित्तमितरेषु, इति ।**

**तु**शब्द ओषधिवनस्पतिव्यावृत्त्यर्थः । **प्राणभृत्सु** मनुष्यगवादिष्वेव चिदात्मन आविर्भावातिशयो न त्वोषध्यादिषु । तत्र हेतुरुच्यते—**तेषु** प्राणभृच्छरीरेषु रक्तरूपो **रसो दृश्यते** । अपिशब्देन पूर्वोक्तं **चित्तं** समुच्चिनोति । अतो लिङ्गद्वयसद्भावादाविर्भावातिशयः । **इतरे**ष्वोषधिवनस्पतिशरीरेषु **चित्तं न** दृश्यते किं तु रसरूपमेकमेव लिङ्गं तस्मान्नास्त्यतिशयः ।

प्राणभृदुपाधिष्वपि तारतम्यं दर्शयति—

**पुरुषे त्वेवाऽऽविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो**

---

१ ख. ग. ये चौष' ।

**विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नः, इति ।**

मनुष्या गवाश्वादयश्च प्राणभृतस्तेषां मध्ये **पुरुषे** मनुष्य एवातिशयेनाऽऽत्माविर्भावो न तु गवादिषु । यस्मात्स मनुष्योऽत्यन्तं **प्रकृष्टज्ञानेन संपन्नः** । तदेव कथमिति चेत्तदुच्यते—पूर्वेद्युर्यद्वस्तु **विज्ञातं** तत्सर्वमद्य स्मृत्वा ममेदं विदितमिति जनानामग्रे **वदितुं** समर्थः । तथा पूर्वेद्युर्यद्वस्तु समीचीनं **विज्ञातं** तदद्य स्मृत्वा तस्मिन्देशे गत्वा द्रष्टुं समर्थः । यद्यपि गवादीनां दर्शने सामर्थ्यमस्ति तथाऽपि विवेकाभावान्न साकल्येन दर्शनम् । किंच यथाऽतीतस्य कथनं तथा **श्वस्तनं** भविष्यत्कर्तव्यमपि जानाति । तथा **लोकालोकावुत्तमं** स्वर्गलोकमधमं नरलोकं च शास्त्रेण विविच्य जानाति । तथा **मर्त्येन** विनश्वरेण ज्ञानकर्मरूपसाधनेनामृतमविनश्वरं मुक्तिपदमीप्सति प्राप्तुमिच्छति । **एवमनेन** प्रकारेण मनुष्योऽत्यन्तविवेकेन **संपन्नः** ।

गवादिपशुषूक्तवैपरीत्यं दर्शयति—

**अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि संभवाः, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥ ( १४ )**

मनुष्यवैलक्षण्यद्योतनार्थोऽथशब्दः । तदेव वैलक्षण्यं प्रपञ्च्यते—अशनाशब्देनाशितुमिच्छोच्यते । अशनायेति पदे यकारस्य लुप्तत्वात् । येयं बुभुक्षा या च पिपासा ते **एवोभे अभि**लक्ष्य पशूनां **विज्ञानम**स्ति, न तु मनुष्यवत्पूर्वविज्ञातकथनादिकम् । **ते** गवाश्वादिपशव **एतावन्त** एतावन्मात्रविज्ञानास्तात्कालिकक्षुधादिज्ञानमात्रोपेता **भवन्ति** । तत्र हेतुरुच्यते—**यथाप्रज्ञं** पूर्वस्मिञ्ज्ञानकर्मानुष्ठानाधिकारयुक्ते जन्मनि यादृशी प्रज्ञा शास्त्रीया लौकिकी वाऽभ्यस्ता । कर्मणोऽप्येतदुपलक्षणम् । कर्मापि विहितं प्रतिषिद्धं वा यादृशमनुष्ठितं तादृशीं प्रज्ञां तादृशं कर्म चानतिक्रम्य यस्मा**त्संभवाः** प्राणिनां जन्मानि भवन्ति । तस्माज्ज्ञानकर्मानुसारेण पशूनां बुद्धिमात्रं युक्तम् । एतदेवाभिप्रेत्य परलोकगामिनं जीवं प्रति **वाजसनेयिन** आमनन्ति—"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" [बृह० ४ । ४ । २] इति । "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" [बृह० ४ । ४ । ५] इति च । तदेवं मनुष्यदेहस्योत्तमोपाधित्वात्तस्मिन्नेवाऽऽत्मन आविर्भावातिशयं ध्यायेत् । यद्यपि देवादिदेहा इतोऽप्युत्तमोपाधयस्तथाऽपि मनुष्यस्यैव प्रायेण शास्त्राधिकारित्वात् "पुरुष एवोक्थमयमेव महान्प्रजा-

---

१ ख. ग. °त्सर्वे स्मृत्वाऽद्येमं ममे° । २ क. ग. घ. ङ. यकारस्य । ३ क. ख. ग. °ज्ञानक° ।

पतिः" [ ऐ० आ० २ अ० १ ख० २ ] इति प्रस्तुतत्वादेतस्मिन्नेव ध्यानमुचितम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥ ( १४ )

---

अथ तृतीयः खण्डः । ( पञ्चदशः )

---

पूर्वत्राऽऽत्माविर्भावध्यानमुक्तमत्र समुद्ररूपत्वादिध्यानमुच्यते । तत्राऽऽदौ पुरुषस्य समुद्ररूपत्वध्यानं विधत्ते—

**स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किंचाश्नुतेऽत्येनं मन्यते यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत,** इति ।

"पुरुष एवोक्थम्" [ ऐ० आ० २ अ० १ ख० २ ] इति शस्त्रस्वरूपत्वेन यः पुरुषः प्रकृतः **स एष पुरुषः समुद्र**रूपः । यथा समुद्रस्तटाकनद्यादिकं सर्वमतिक्रम्य प्रौढो वर्तते तथाऽयं पुरुषोऽपि **सर्वं लोक**मतिक्रम्य वर्तते । स एवातिक्रमः कथमिति चेत्तदुच्यते—**यद्ध किंच** भूलोके यत्किंचिद्भोग्यजातम**श्नुते** व्याप्नोति तमेनं भोग्यपदार्थ**मति**क्रम्य **मन्यते**ऽन्तरिक्षलोकगतमपि भोग्यं मे भूयादिति कामयते । यदा त्वन्तरिक्षलोकगतं प्राप्नोति तदानीमेनमपि भोग्यपदार्थमतिक्रम्य **मन्यते** स्वर्गभोगोऽपि मे भूयादिति कामयते । तस्यापि प्राप्तौ तमतिक्रम्य सत्यलोकादिभोगोऽपि मे भूयादिति कामयेतैव । एतदेवाभिप्रेत्य **शाखान्तरे मन्त्र**ब्राह्मण एवमाम्नायते—"कामᳪ समुद्रमाविशेत्याह । समुद्र इव हि कामः । नैव हि कामस्यान्तोऽस्ति । न समुद्रस्य" [ तै० ब्रा० का० २ प्र० २ अनु० ९ ] इति । अतः समुद्रसमानत्वात्पुरुषे समुद्रध्यानं युक्तम् ।

पुरुषशरीरावयवेषु पञ्चभूतध्यानं विधत्ते—

**स एष पुरुषः पञ्चविधस्तस्य यदुष्णं तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः,** इति ।

**उष्णं** जाठराग्न्यादिरूपम् । **खानि** मुखनासिकादिच्छिद्राणि । **शरीर**शब्देन काठिन्यं विवक्षितम् "यत्कठिनं सा पृथिवी" [ गर्भोप० १ ] इति श्रुत्यन्तरात् ।

पुरुषशरीरगतस्य प्राणवायोः पञ्चवृत्तिभेदध्यानं विधत्ते—

**स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानस्ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं**

---

१ ख. ग. °मयेत् । य° । २ क. ख. ग. °म्य स्वर्गलोके भो° । ३ क. ख. ग. °न्त्रतद्ब्राह्म°

मनो वागिति प्राणस्य ह्यन्वपायमेता अपियन्ति, इति ।

हृदयादूर्ध्वं मुखनासिकयोः संचरन्वायुः प्राणः । अधोद्वारे संचरन्नपानः । सर्वासु नाडीषु व्याप्य वर्तमानो व्यानः । जीवोत्क्रान्त्यादिकं कर्तुमूर्ध्वभागे कण्ठेऽवस्थित उदानः । अन्नपाने साम्येन कृत्स्नशरीरे नेतुं नाभिसमीपेऽवस्थितः समानः । तदेतद्वायोः पञ्चविधत्वं ध्यायेत् । चक्षुःश्रोत्रमनोवागादिदेवता अप्यत्र पृथग्ध्यातव्या इति न शङ्कनीयम् । तासां देवतानामूर्ध्वाधोभागवर्तिनोः प्राणापानयोरेवान्तर्भावात् । तदेव कथमिति चेत्तदुच्यते—यस्मात्प्राणस्यापायं देहादपगमनमनु सर्वा एताश्चक्षुरादिदेवता अपियन्ति लीयन्ते न देहे तिष्ठन्ति, तस्मादन्तर्भूतत्वान्न पृथग्ध्यानम् ।

यज्ञ[1]स्यावान्तरभेदरूपेण ध्यानं विधत्ते—

स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः स एष यज्ञानां संपन्नतमो यत्सोम एतस्मिन्ह्येताः पञ्च विधा अधिगम्यन्ते यत्प्राक्सवनेभ्यः सैका विधा त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( १९ )

वाचो मन्त्रोच्चारणादि[2]व्या[3]पृतायाश्चित्तस्य शास्त्रविहितार्थपर्यालोचनव्या[4]पृतस्यान्तःकरणस्य चोत्तरोत्तरिक्रमः । एकस्मादितरस्योत्त[5]रत्वं तस्मादप्यन्यस्योत्तरत्वमित्येवमुत्तरोत्तरभावो यस्य क्रमस्यास्ति सोऽयमुत्तरोत्तरिक्रमः । क्र[6]मेण व्यापार इत्यर्थः । तूष्णीमवस्थानादुत्तरभावी मनसा शा[7]स्त्रार्थपर्यालो[8]चनव्यापारस्ततोऽप्युत्तरभावी वाचा मन्त्रोच्चारणव्यापारस्तदुभयव्यापाररूपो यज्ञ इति यदस्ति स एष उक्थात्म[9]कपुरुषरूपः प्राणदेवः । स च यज्ञात्मकः प्राणाग्निहोत्रादिभेदैः पञ्चविध इति ध्या[10]येत् । न च सोमादप्यधिकं किंचित्कर्मान्तरं कुतो नोच्यत इति वाच्यम् । [11]अधिकस्य कर्मान्तरस्याभावात् । सोमयाग इति यदस्ति स एष यज्ञानां मध्येऽतिशयेन संपन्नः । यस्मादेतस्मिन्सोमयागे पञ्चप्रकारमनुष्ठानं दृश्यते । सुत्यादिनेऽनुष्ठेयेभ्यः सवनेभ्यः प्राचीनं दीक्षणीयादिकं यदस्ति सोऽयमेकः प्रकारः । प्रातःसवनं माध्यंदिनं सवनं तृतीयसवनं चेति प्रकारत्रयम् । सवनेभ्य ऊर्ध्वमवभृथमारभ्योद[12]वसानीयान्तं यत्कर्मजातमस्ति सोऽयं पञ्चमः

---

१ ख. ग. 'ज्ञतदवा°' । घ. ङ °ज्ञस्य तदवा° । २ क. °दिरूपादिव्या° । ३ घ. ङ. °व्यावृता° । ४ ङ. °व्यावृत° । ५ क. °त्तरित्वं । ६ क. ख. ङ. क्रमणं । ७ ख. ग. शास्त्रीयप° । घ. शास्त्रविहितार्थ° । ८ ख. ग. °चनं व्या° । ९ क. °त्मकः पु° । १० क. ख. ग. ध्यानम् । ११ ग. अत्यधि° । घ. ङ. अभ्यधि° । १२ क. ख. घ. ङ. °वसनी° ।

प्रकारः । एतेषां पञ्चप्रकाराणां सोमयागादन्यत्रासंभवात्सोमयाग एव संपन्नतमः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( १९ )

---

अथ चतुर्थः खण्डः । ( षोडशः )

---

पूर्वत्र [ ऐ० आ० २ अ० ३ ख० ३ ] समुद्ररूपत्वादिध्यानमुक्तम् । अत्र[3] स्तोमपञ्चकत्वादिध्यानमुच्यते । तस्मिन्ध्याने प्ररोचनार्थं प्राणरूपमुक्थं प्रशंसति—

**यो ह वै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवम-**
**ध्यूह्ळं स संप्रतिविदेष वै यज्ञे यज्ञोऽहन्यहर्दे-**
**वेषु देवोऽध्यूह्ळो यदेतन्महदुक्थम्**, इति ।

यथा हस्तिनोऽप्यत्यन्तश्रेष्ठो राजा हस्तिनमारोहति, एवमत्र श्रेष्ठो[6] यज्ञ इतरं यज्ञमधिरूढ इत्युपचर्यते । तथैवोत्कृष्टमहरितरस्मिन्नहन्यधिरूढम् । उत्तमश्च देव इतरदेवेष्वधिरूढः । तथा सति **यः** पुमाँनधमयज्ञादिष्वध्यूह्ळमुपर्यवस्थितमुत्तमयज्ञादिरूपमुपास्ते **स** पुमान्संप्रतिवित्सम्यगभिज्ञः । कोऽसावुत्तमयज्ञादिरूपः पदार्थ इति चेदुच्यते—**यदेतन्महदुक्थं** प्रौढं निष्केवल्यशस्त्रमेष एवोत्तमयज्ञादिरूपः पदार्थ इति सोमयागस्य संपन्नतमत्वं पूर्वमुक्तम् [ ऐ० आ० २ अ० ३ ख० ३ ]। अतोऽयं वर्तमानः सहस्रसंवत्सरसत्राख्योऽयं सोमयाग इतरयज्ञेऽग्निहोत्रादावधिरूढः, तथा महद्व्रतं महतो व्रतमित्यादिनिर्वचनविशेषस्य पूर्वमेव [ ऐ० आ० १ अ० १ ख० १ ] दर्शितत्वान्महाव्रताख्यमेवैतदहरितरस्मिन्नहन्यध्यूह्ळ(ढ)म्, देवश्च प्राणरूपः श्रेष्ठत्वाद्वागादिदेवेष्वधिरूढः, तद्रूपत्वादुक्थमधिकम् ।

तस्योक्थस्य पञ्चविधत्वध्यानं विधत्ते—

**तदेतत्पञ्चविधं त्रिवृत्पञ्चदशं सप्तदशमेकविंशं**
**पञ्चविंशमिति स्तोमतो गायत्रं रथंतरं**
**बृहद्भद्रं राजनमिति सामतो गायत्र्युष्णिग्बृ-**
**हतीत्रिष्टुब्द्विपदेति च्छन्दस्तः शिरो दक्षिणः**
**पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम्**, इति[10] ।

गीयमानतृचावस्थितानामृग्विशेषाणां समूहः स्तोमः । स च सामगैस्त्रिवृदादिनाम्ना व्यवह्रियते । तत्र त्रिवृत्स्तोमस्य स्वरूपं **सामब्राह्मणे** समाम्नातम्—“ तिसृभ्यो

---

१ क. ख. एवं । २ क. ख. पूर्वं । ३ ग. °त्र सोमप° । ४ घ. ङ. स्तोभप° । ५ क. °ञ्चकादिरूपत्वं ध्या° । ख. °ञ्चकादिरूपत्वध्या° । ६ ख. ग. श्रेष्ठय° । ७ घ. ङ. °मान्यज्ञा° । ८ घ. ङ. °वल्याख्यं श° । ९ क. ख. ग. °नः सं° । १० ग. °ति । इत्यारभ्य पुच्छमात्मेत्याख्यानमित्यन्तेन गी° ।

हिं करोति स प्रथमया तिसृभ्यो हिं करोति स मध्यमया तिसृभ्यो हिं करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः" इति । अयमर्थः—"उपास्मै गायता" [ ऋ० सं० म० ९ सू० ११ ऋ० १ ] इत्यादीनि तृचात्मकानि त्रीणि सूक्तानि सन्ति, तेषु तिसृभिर्ऋग्भिर्हिं करोति गायेत् । काभिस्तिसृभिः, प्रथमया त्रिष्वपि सूक्तेषु या या प्रथमा तया स उद्गाता गायेत् । तथा सति तिसृभिर्गीतं भवति, सोऽयं प्रथमः पर्यायः । द्वितीये सूक्तत्रयगतया मध्यमया गायेत् । तृतीयपर्याये सूक्तत्रयगतयोत्तमया गायेत् । अनेन प्रकारेण त्रिवृत्स्तोमसंबन्धिनी विशिष्टा स्तुतिः संपद्यते । सेयं स्तुतिरुद्यतीति नाम्नाऽभिधीयत इति । **पञ्चदशस्तोम** एवमाम्नातः—"पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिः" इति । पूर्वोक्तत्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः, अन्ये तु स्तोमा एकैकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते । तत्रायं क्रमः—प्रथमपर्याये आवृत्तिसहिताभिः पञ्चभिर्ऋग्भिर्गायेत् । तद्यथा—प्रथमपर्याये प्रथमामृचं त्रिर्गायेत् । इतरे द्वे सकृत्सकृद्गायेत् । द्वितीयपर्याये मध्यमां त्रिर्गायेत् । तृतीयपर्याये तूत्तमां त्रिर्गायेत् । सेयं पञ्चदशस्य स्तोमस्य संबन्धिनी विष्टुतिः पञ्चपञ्चिनीति नाम्ना व्यवह्रियते । **सप्तदशस्तोम** एवमाम्नातः—"पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिर्दशसप्त सप्तदशस्य विष्टुतिः" इति । प्रथमपर्याये प्रथमामृचं त्रिर्गायेत् । द्वितीयपर्याये मध्यमां त्रिर्गायेत् । तृतीयपर्याये मध्यमामुत्तमां च त्रिर्गायेत् । सेयं सप्तदशस्तोमसंबन्धिनी विष्टुतिः । सेयं दशसप्तेत्युच्यते । **एकविंशस्तोम** एवमाम्नातः—"सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिः" इति । प्रथमपर्याय उत्तमां सकृद्गायेत् । द्वितीयपर्याये मध्यमां सकृद्गायेत् । तृतीयपर्याये प्रथमां सकृद्गायेत् । सेयमेकविंशस्तोमसंबन्धिनी विष्टुतिः सप्तसप्तिनीत्यभिधीयते । पञ्चविंशस्तोमस्य त्वावृत्तिप्रकारभेदः *सामसूत्रे

---

* "पञ्चविंशस्तोमस्यैवं विष्टुतिः—अष्टाभ्यो हिं करोति स तिसृभिः स चतसृभिः स एकयाऽष्टाभ्यो हिं करोति स एकया स तिसृभिः स चतसृभिर्नवभ्यो हिं करोति स पञ्चभिः स एकया स तिसृभिरिति । धानंजय्यमतेनैकस्थः पक्षो नवभ्यो हिं करोति स चतसृभिर्द्वाभ्यां स तिसृभिरिति परिचरायामावापक्षो गौतमीयः" इति ग. पुस्तकटिप्पण्याम् ।

---

१ क. घ. °पञ्चनी° । २ क. °यमात्र° । ३ क. °थमा° । ४ क. घ. ङ. °पञ्चनी° । ५ क. ग. घ. ङ. °सृभिः सप्तदशस्य । ६ क. °यं सप्तदशेत्यु° । ७ घ. ङ. °सप्तन्ये° । ८ क. ख. घ. ङ. प्रथमां । ९ क. ख. घ. ङ. मध्यमां । १० घ. ङ. °सप्तनी° ।

द्रष्टव्यः। तदेवमुक्थं स्तोमवशात्पञ्चविधं ध्यायेत्। "तत्सवितुर्वरेण्यम्" [ ऋ० सं० म० ३ सू० ६२ ऋ० १० ] इत्यस्यामृच्युत्पन्नं साम **गायत्रनामकम्**। "अभि त्वा शूर" [ ऋ० सं० म० ७ सू० ३२ ऋ० २२ ] इत्यस्यामुत्पन्नं **रथंतरम्**। "त्वामिद्धि हवामहे" [ ऋ० सं० म० ६ सू० ४६ ऋ० १ ] इत्यस्यामृच्युत्पन्नं **बृहत्**। "इमा नुकम्" [ ऋ० सं म० १० सू० १५७ ऋ० १ ] इत्यस्यामृच्युत्पन्नं **भद्रम्**। "इन्द्रं नरो नेम धिता" [ ऋ० सं० म० ७ सू० २७ ऋ० २८] इत्यस्यामृच्युत्पन्नं **राजनम्**। एवमुक्थस्य सामतः पञ्चविधत्वम्। चतुर्विंशत्यक्षरा **गायत्री**। अष्टाविंशत्यक्षरो**ष्णिक्**। षट्त्रिंशदक्षरा **बृहती**। चतुश्चत्वारिंशदक्षरा **त्रिष्टुप्**। पादद्वयेनैव निष्पन्ना **द्विपदा**। इत्येवं छन्दोवशात्पञ्चविधत्वम्। यथा पक्षिणः शिरःपक्षाद्यवयवास्तथा निष्केवल्यशस्त्रस्य "इन्द्रमिद्गाथिनः" [ ऋ० सं० म० १ सू० ७ ऋ० १ ] इत्यादिमन्त्रसमूहः शिरः। अभि त्वा शूर" [ ऋ० सं० म० ७ सू० ३२ ऋ० २२ ] इत्यादिको **दक्षिणः पक्षः**। "त्वामिद्धि" [ ऋ० सं० म० ६ सू० ४६ ऋ० १ ] इत्यादिक **उत्तरः पक्षः**। "इमा नुकम्" [ ऋ० सं० म० १० सू १५७ ऋ० १] इत्यादिसमूहः **पुच्छम्**। "तदिदास" [ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिको मध्यशरीररूप **आत्मा**। इत्येवं पक्षिरूपं ब्राह्मणेनाऽऽख्यायते। तदेतदाख्यायमानं पञ्चविधं पक्षिरूपमुक्थे ध्यायेदित्यर्थः।

प्रकारान्तरेण पञ्चविधत्वध्यानं विधत्ते—

**पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति तत्स्तोभसहस्रं भवति, इति।**

सामगा महाव्रते राजनसाम्ना स्तुवते[1]। साम्नि च पञ्च भागाः सन्ति। प्रस्ताव उद्गीथः प्रतिहार उपद्रवो निधनमित्येते भागाः। तत्र प्रस्तावभागं गायन्प्रस्तोता पञ्चकृत्व आवृत्तं गायति। एवमुद्गाताप्रतिहर्तारौ स्वस्वभागं पञ्चकृत्वो गायतः। ऋत्विगन्तराभावादुपद्रवभागमुद्गातैव गायति। सोऽपि पञ्चकृत्वो गायति। **सर्वे निधनमुपयन्ती**तिविधानात्प्रस्तोत्रादयः **सर्वेऽपि पञ्चकृत्वो निधन**भागं गायन्ति। एवं सत्यत्र भागभेदेन यत्पञ्चविधत्वं यच्चैकैकस्याऽऽवृत्त्या पञ्चविधत्वं तदुभयमुक्थे ध्यातव्यम्। प्रस्तावादिभागानां पञ्चकृत्वो गानमस्ति। तत्तस्मिन्गाने **स्तोभानां[2] सहस्रं** संपद्यते। ऋगक्षरव्यतिरेकेण गीतिपूरणार्थं[3] येऽक्षरसमूहाः प्रक्षिप्यन्ते ते स्तोभसंज्ञकास्तेषां सहस्रत्वसंपादनं सामसूत्रे द्रष्टव्यम्। सेयं सहस्रसंख्या यथोक्तपञ्चविधत्वप्रशंसार्थमुपन्यस्यते।

---

१ घ. ङ. स्तुवन्ति। २ क. स्तोमानां। ख. ग. स्तोमभागानां। ३ ग. °तिपरिपू°।

प्रकारान्तरेण पञ्चविधत्वध्यानं विधत्ते—

**एवं ह्येताः पञ्च विधा अनुशस्यन्ते यत्प्राक्तृचाशीतिभ्यः सैका विधा तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी, इति ।**

यथा प्रस्तावादिभागैस्तत्तदावृत्तिभिश्च पञ्चविधं स्तोत्रं सामगाः संपादयन्ति, **एवमेवैता** निष्केवल्यगता ऋचो होत्रा **पञ्च विधा अनुशस्यन्ते** । कथं पाञ्चविध्यमिति चेत्तदुच्यते—"महाँ इन्द्रो य ओजसा" [ ऋ० सं० म० ८ सू० ७ ऋ० १ ] इत्यादिका येयं गायत्री तृचाशीतिर्या च "मा चिदन्यत्" [ ऋ० सं० म० ८ सू० १ ऋ० १ ] इत्यादिका बार्हती तृचाशीतिर्याऽपि "य इन्द्र सोम [पातमः]" [ ऋ० सं० म० ८ सू० १२ ऋ० १ ] इत्यादिकौष्णिही तृचाशीतिस्तास्तिस्रस्तृचाशीतयः । शस्त्रपक्षिणोऽन्नरूपास्ताभ्यः प्राचीनमात्मशिरःपक्षादिभागरूपं यन्मन्त्रजातमस्ति सेयमेका विधा । तृचाशीतयस्तु त्रि(तिस्रो)विधाः । ताभ्य ऊर्ध्वमुदरभागश्चेत्येवंरूपं यन्मन्त्रजातमास्ति **सा पञ्चमी विधा** । तदेतच्छस्त्रस्य पञ्चविधत्वं ध्यायेत् ।

तदेतच्छस्त्रगतं पञ्चविधत्वं प्रशंसति—

**तदेतत्सहस्रं तत्सर्वं तानि दश दशेति वै सर्वमेतावती हि संख्या दश दशतस्तच्छतं दश शतानि तत्सहस्रं तत्सर्वं तानि त्रीणि च्छन्दांसि भवन्ति त्रेधा विहितं वा इदमन्नमशनं पानं खादस्तदेतैराप्नोति, इति ॥**

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( १६ )

यथोक्तपञ्चविधे शस्त्रे यदेतन्मन्त्रजातमस्ति तत्सर्वं मिलित्वा बुद्धिकौशलेनाक्षरगणनया बृहतीसहस्रं संपद्यते । पूर्वोक्तस्तोभद्वारा बृहतीद्वारा च यत्सहस्रं संपन्नं **तत्सर्वम्** । नहि सहस्रव्यतिरेकेण किंचिज्जगदस्ति, अशेषसंख्यायाः सहस्रेऽन्तर्भावात् । संख्येयस्य च वस्तुजातस्य संख्यायामन्तर्भावात् । कथमशेषसंख्यायाः सहस्रेऽन्तर्भाव इति चेदुच्यते—**तानि** संख्यापर्वाणि **दश दशे**त्येव व्यवह्रियन्तेऽतः संख्याजातं **सर्वं** सहस्रेऽस्ति । दशशब्देन यावत्युच्यत **एतावत्ये**व लोके विद्यमाना **सर्वा संख्या** न त्वितोऽधिका काचिदस्ति । तथा हि—एकं द्वे त्रीणीत्येवं गणनायां दशपर्यन्ता नूतनाः संख्यास्तत ऊर्ध्वं तस्या एव संख्याया आवृत्तिर्गण्यते । एकादश

१ घ. ङ. °भागेषु तत्त° । २ क. °र्या च य । ३ क. ख. °वं य° । ४ क. सेयं । ५ क. ख. घ. °ह्रेति । द° ।

द्वादशेत्येवं दशकादूर्ध्वमेकादिसंख्याया एव व्यवह्रियमाणत्वात् । शतं सहस्रमयुतमित्यादिकं संख्यान्तरं विद्यत इति चेन्न । तस्याप्यावृत्तायां दशसंख्यायामन्तर्भावात् । दश दशत इत्यादिनाऽन्तर्भाव एवोदाहृत्य प्रदर्श्यते । तकारान्तो दशच्छब्दो दशानां समूहं ब्रूते । "पञ्चद्दशतौ वर्गे वा" [ पा० सू० अ० ५ पा० १ सू० ६० ] इति पाणिनिना सूत्रितत्वात् । दशसंख्याकानि वर्गरूपाणि दशकानि यानि सन्ति तानि मिलित्वा शतशब्देनोच्यन्ते । तथा दशसंख्याकानि शतानि यानि सन्ति तानि मिलित्वा सहस्रशब्देनोच्यन्ते । एवं दशत्वसंख्यावृत्तिबलादेवायुतलक्षादिनिष्पत्तेस्तत्सर्वं संख्याजातं यथोक्तेष्वेव दशशतसहस्ररूपेषु संख्यापर्वस्वन्तर्भवति । यद्यपि दशसंख्यायामेवान्तर्भावस्तथाऽपि तदुत्पत्तये शतसंख्या सहस्रसंख्या चोदाहरणीया, तस्मात्तानि संख्यापर्वाणि त्रीणि च्छन्दांसि च्छादकानि सर्वसंख्याव्यापकानि भवन्ति । तच्च पर्वत्रयं त्रेधेत्यादिना प्रशस्यते । लोके प्राणिभिर्भुज्यमानं यदिदमन्नमस्ति तच्च त्रेधा विहितमशनमोदनरूपं पानं जलक्षीरादिरूपं खाद्यो लड्डुकादि । तँच्च त्रिविधमन्नमेतैर्दश शतं सहस्रमित्येवंरूपैस्त्रिभिः संख्यापर्वभिः प्राप्नोति । फलेन प्रशस्यमानत्वात्पर्वत्रयं ध्यातव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( १६ )

---

अथ पञ्चमः खण्डः । ( सप्तदशः )

---

उक्थस्य पञ्चविधत्वादिध्यानमभिधाय बृहतीसहस्ररूपत्वध्यानं विधत्ते—

तद्वा इदं बृहतीसहस्रं संपन्नम्, इति ।

यन्निष्केवल्यशस्त्रमुपासनायां प्रतीकत्वेन प्रकृतं तदेवेदमक्षरगणनया बृहतीछन्दस्कानामृचां सहस्रं संपन्नमिति ध्यायेत् ।

तदेतत्स्वमतं प्रशंसितुं परमतमुपन्यस्यति—

तद्धैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते किमन्यत्सदन्यद्ब्रूयामेति, इति ।

एके शाखिनो नानाविधानां छन्दसां सहस्ररूपं निष्केवल्यशस्त्रमिति प्रतिज्ञां कुर्वन्ति । तत्र सहस्रसंपादन एव नियमो नँ बृहतीछन्दँसीति तेषामभिप्रायः । ते हि

---

१ क. ख. ग. °यां सहस्रसं° । २ क. °ते तथा "प° । ३ क. °नि च भ° । ४ क. ख. घ. ङ. तच्चत्रिवि° । ५ ग. न तु बृ° । ६ क. °न्दसामिति ।

परस्परं विचार्य निश्चिन्वन्ति। प्रकृताद्बृहतीसहस्रादन्यच्छन्दोन्तरयुक्तं सहस्रं किं तत्समीचीनमित्येवमेकस्य प्रश्नः। अत्रेतरस्योत्तरार्थं सच्छब्द आवर्तनीयः। प्रश्नोत्तराभ्यां मतान्तरस्य सम्यक्त्वनिश्चयाद्बृहतीसहस्रादन्यच्छन्दोन्तरयुक्तं सहस्रं ब्रूयामेति परस्परमुक्तवन्तः।

अन्यत्र पक्षेऽप्यवान्तरमतभेदान्दर्शयति—

**त्रिष्टुप्सहस्रमेके जगतीसहस्रमेकेऽनुष्टुप्सहस्रमेके,** इति।

तत्रानुष्टुब्वादिनः स्वमतप्रशंसार्थं मन्त्रमुदाहरति—

**तदुक्तमृषिणा,** इति।

स च मन्त्रः संहितायामेवमाम्नातः—

"बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्।
अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषा" इति॥
[ ऋ० सं० म० १० सू० १२४ ऋ० ९ ]

योऽयमिन्द्रोऽस्ति तमिन्द्रमभिज्ञाः पुरुषा हंसमाहुः। हन्ति वर्षणाय मेघं भिनत्तीति हंसः। कीदृशमिन्द्रं दिव्यानां द्युलोकवर्तिमेघस्थितानामपां सख्ये चरन्तम्। आपो हि स्वप्रवर्तकत्वेनेन्द्रं सखायं मन्यन्ते। कीदृशीनामपां बीभत्सूनाम्। संबन्धमिच्छवो बीभत्सवः। मेघगता ह्यापः स्थावरजङ्गमप्राणिनामुपकारं कर्तुं तैः प्राणिभिः सह भूमौ संबन्धमिच्छन्ति। अतस्तादृशीनामपां भूमौ प्रेरणायेन्द्रस्ताभिरद्भिः सह युज्यते। तादृशं सयुजमाहुरित्यन्वयः। अनुष्टुप्शब्देन मेघगर्जनरूपा वागुपलक्ष्यते "वाग्वा अनुष्टुप्" [ नृ० पू० १।१ ] इति श्रुतेः। तादृशीमनुष्टुप्शब्दोपलक्षितां गर्जनरूपां वाचमनुसृत्य चर्चूर्यमाणं पुनः पुनश्चरन्तमिन्द्रं परमैश्वर्ययुक्तं प्राणदेवं कवयो मेधाविन उपासका मनीषा मननेन विवेकज्ञानेन निचिक्युर्नितरामुपचितवन्तः। ध्यातवन्त इत्यर्थः।

अस्य मन्त्रस्योत्तरार्धं प्रकृतस्यानुष्टुप्पक्षस्योपयुक्तं व्याचष्टे—

**अनुष्टुभमनु चञ्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषेति वाचि वै तदैन्द्रं प्राणं न्यचायन्नित्येतत्तदुक्तं भवति,** इति।

अनुष्टुप्शब्दोपलक्षितायां वाच्येव तदोपासनकाले प्राणमिन्द्रसंबन्धिनं न्यचायन्नितरां ध्यातवन्तः। इत्येतदर्थजातं तत्तेनोत्तरार्धेनोक्तं भवति।

अस्मिन्पक्षे पूर्ववादिनोऽभिप्रेतं गुणं दर्शयति—

**स ईश्वरो यशस्वी कल्याणकीर्तिर्भवितोः,** इति।

---

१ ग. 'र्षणमयं मे'। २ ग. 'नां बन्धनं दकसंब'।

सोऽनुष्टुप्सहस्रेण शंसिता होता यशोयुक्तः पुण्यकीर्तियुक्तश्च भवितोरीश्वरो भवितुं प्रभवति । यशो धनादिनिमित्तं लौकिकम् । कल्याणकीर्तिर्यागादिनिमित्ता वैदिकी । त्रिष्टुब्जगतीपक्षयोरप्ययं गुणो द्रष्टव्यः ।

इदानीं सिद्धान्ती तस्मिन्ननुष्टुप्पक्षे दोषं दर्शयति—

**ईश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह**
**स्माऽऽहाकृत्स्नो ह्येष आत्मा यद्वागभि हि**
**प्राणे न मनसेऽस्यमानो वाचा नानुभवति,** इति ।

तुशब्देनानुष्टुप्पक्षो निराक्रियते । अनुष्टुप्सहस्रेण शंसन्होता कृत्स्नादायुषः **पुरा प्रैतोरीश्वरो** भवति । मर्तुं प्रभुर्भवति । अपमृत्युना म्रियत इत्यर्थः । इत्येवमभिज्ञः **पुरुष आह स्म** । युक्तं चैतदभिज्ञस्य वचनम् । अनुष्टुब्रूपस्याऽऽत्मनोऽकृत्स्नत्वात् । कथमकृत्स्नत्वमिति चेत्तदुच्यते—**यद्यदा वागभि हि** वाग्रूपत्वेन स्तुतामनुष्टुभमेवाभिलक्ष्य शस्त्रे प्रवर्तते न तु **प्राणत्वेन** स्तुते बृहतीसहस्रे प्रवर्तते । "वाग्वा अनुष्टुप्प्राणो बृहती" इत्येवं हि तत्तद्रूपेण स्तुतिः । तदानीं प्राणरूपां बृहतीमुपेक्ष्य वाग्रूपायामनुष्टुभ्येव **मनसेऽस्यमानः** स्वचित्तेनास्यमानः प्रेर्यमाणो होता स्वकीयया **वाचा** तच्छस्त्रं **नानुभवति** । न हि प्राणशक्तिसहायमन्तरेण केवलं मानसमात्रेण होता वाचा शस्त्रं वक्तुं क्षमते, सर्वस्येन्द्रियव्यापारस्य प्राणाधीनत्वात् ।

एवमकृत्स्नत्वदोषेणेतरपक्षं निन्दित्वा स्वपक्षं समर्थयते—

**बृहतीमभि संपादयेदेष वै कृत्स्न आत्मा यद्बृहती,** इति ।

अक्षरगणनया **बृहतीं** संपाद्य यदा ध्यायेत्तदानीं **बृहतीति यदस्ति** प्राणरूप **एष** एव प्राणः **कृत्स्नः** संपूर्ण **आत्मा** । "प्राणो बृहती" इत्युक्तत्वाद्बृहत्याः प्राणरूपत्वम् । प्राणस्या(श्वा)भिवदनादिसर्वेन्द्रियव्यापारनिष्पादकत्वात्संपूर्ण आत्मा ।

लौकिकजीवात्मदृष्टान्तेन बृहतीं प्रशंसति—

**सोऽयमात्मा सर्वतः शरीरैः परिवृतस्तद्यथाऽयमात्मा सर्वतः**
**शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता,** इति ।

देहमध्यवर्ती लौकिकप्रसिद्धो यो **जीवात्मा सोऽयं [सर्वतः शरीरैः] परिवृतः** सर्वासु दिक्षु शरीरावयवैर्वेष्टितो वर्तते । तत्तथा सति जीवात्मवदेव **बृहत्यपि** सहस्रत्वेन संपादिता सती **सर्वतः** शस्त्रमध्ये सर्वेषु स्थानेषु **छन्दोभिरध्ययनकालीनैस्तत्तद्दृग्गतैर्गायत्र्यादिभिः** सर्वतो वेष्टिता ।

१ क. ख. ग. धनानि° । २ क. ख. °ष्टुब्युक्तस्याऽऽ° । ३ क. ख. ग. °शक्ति स° । ४ ख. ग. °वलमनसेच्छामा° । ५ ग °न तु बृ° ।

जीवात्मदृष्टान्तेन प्रशस्य मध्यशरीरदृष्टान्तेनापि प्रशंसति—

**मध्यं ह्येषामङ्गानामात्मा मध्यं छन्दसां बृहती, इति ।**

जीवात्मनोऽवस्थानप्रदेशत्वाद्धृदयरूपो मध्यदेहभागो[1] वाऽऽत्मशब्देन विवक्षितः । स चाङ्गाना[2]मितरेषां हस्तपादादीनां मध्यं भवति । तथा छन्दसां मध्ये बृहती मध्यं न्यूनानां गायत्र्यादीनामधिकानां त्रिष्टुबादीनां च बृहत्या अभितो विद्यमानत्वात् ।

अनुष्टुप्पक्षोक्तदोषं स्वमते तत्परिहारं चानूद्य स्वमतमुपसंहरति—

**स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माऽऽह कृत्स्नो ह्येष आत्मा यद्बृहती तस्माद्बृहतीमेवाभि संपादयेत्, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( १७ )**

यथा बृहतीसहस्रं संपाद्य ध्यानमुक्तं तथैवानुष्टुप्संपादनेनापि ध्यानमुच्यते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणारण्यक-भाष्ये द्वितीयारण्यके तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( १७ )

---

अथ षष्ठः खण्डः । ( अष्टादशः )

---

यद्वाऽनुष्टुबन्तर्भावसंपादनेन बृहती प्रशस्यते—

**तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहती-सहस्रस्य संपन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभ आत्तं वै भूयसा कनीयः, इति ।**

षट्त्रिंशदक्षरायामेकैकस्यां बृहत्यां द्वात्रिंशदक्षराया अनुष्टुभ ऊर्ध्वमक्षराणि चत्वार्यतिरिच्यन्ते । तेषां चातिरिक्तानामक्षराणां कृत्स्नेऽपि शस्त्रे सहस्रचतुष्टयं भवति । तत्रानुष्टुप्त्वसंपादने सति पञ्चविंशत्युत्तरशतसंख्याका अनुष्टुभो भवन्ति । लोकेऽपि भूयसाऽधिकेन संख्याविशेषेण न्यूनं संख्यास्वरूपमात्तं वै स्वीकृतमेव व्याप्तमेव । तद्यथा शते पञ्चाशत्संख्याऽन्तर्भवति । सहस्रादौ शतादिसंख्याऽन्तर्भवति । तस्मात्षट्त्रिंशदक्षरायां बृहत्यां द्वात्रिंशदक्षराया अनुष्टुभोऽन्तर्भावो युक्त इत्यर्थः ।

बृहत्यामनुष्टुबन्तर्भावे कंचिन्मन्त्रमुदाहरति—

**तदुक्तमृषिणा, इति ।**

---

१ ग. °भागोऽत्राऽऽत्म° । २ ख. ग. घ. ङ. °नामेतेषां ।

स च मन्त्रः संहितायामेवमाम्नातः—

"वाचमष्टापदीमहं नवस्त्रक्तिमृतस्पृशम् ।
इन्द्रात्परि तन्वं ममे" इति ।

[ ऋ० सं० म०८ सू० ७६ ऋ० १२ ]

अत्र मन्त्रद्रष्टा कश्चिदृषिः स्वयं मन्त्ररूपः सन्नेवं ब्रूते । अहं मन्त्रात्मा वाचमनुष्टुभं ब्रूयाम् । इन्द्रात्परमैश्वर्ययुक्ताद्बृहतीरूपात्प्राणात्तन्वं परिममे, तस्य चेन्द्रस्य तनुं शरीरं परितो निर्मितवानस्मि । बृहती तावद्यथोक्तध्यानानुसारेणेन्द्रशब्दाभिधेयस्य प्राणस्य शरीरभूता, तस्यां बृहत्यामनुष्टुभमन्तर्भाव्येन्द्रनिमित्तं तस्या अप्यनुष्टुभ इन्द्रशरीरत्वं संपादितवानस्मीत्यर्थः । कीदृशीं वाचमष्टापदीं चतुरक्षरैरष्टाभिः पादैरुपेताम् । तथा नवस्त्रक्तिमष्टाभ्यः पादेभ्य ऊर्ध्वं बृहतीत्वसंपत्तये पुनरप्येकेन चतुरक्षरेण पादेन योगे सति नवसंख्याकस्त्रक्तियुक्ता भवति । स्त्रक्तयः कोणास्तद्युक्ताम् । तथर्तस्पृशमृतं सत्यं प्राणं बृहत्यात्मकं स्पृशतीत्यृतस्पृक्, तादृशीम् । बृहत्यामन्तर्भावात्तद्रूपप्राणस्पर्श उपपद्यते ।

एतस्य मन्त्रस्य प्रथमपादं व्याचष्टे—

**वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्ति, इति ।**

द्वात्रिंशदक्षरायामनुष्टुभि समभागैरष्टभिर्विभज्यमानायां चतुरक्षरपादा अष्टौ संपद्यन्ते ।

द्वितीयपादपूर्वभागं व्याचष्टे—

**नवस्त्रक्तिमिति बृहती संपद्यमाना नवस्त्रक्ति , इति ।**

पूर्वोक्ताऽष्टापदी या वाग्रूपाऽनुष्टुप्सैवान्येन चतुरक्षरपादेन संयोगे सति षट्त्रिंशदक्षरा बृहती संपद्यमाना सती नवस्त्रक्तिभिश्चतुरक्षरपादरूपैः कोणैरुपेता भवति । नवस्त्रक्तीति विसर्गलोपश्छान्दसः ।

उत्तरभागं व्याचष्टे—

**ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टा , इति ।**

येयमनुष्टुब्रूपा वागस्ति सेयमृचा बृहत्या स्पृष्टा संयुक्ता सती सत्यं कदाचिदपि बाधारहितं प्राणदेवं बृहतीरूपत्वेन ध्यातव्यं स्पृशतीति शेषः ।

---

वाचमष्टापदीम्०— ऋ० सं० म० ८ सू० ७६ ऋ० १२ । नवस्त्रक्तिम्०— ऋ० सं० म० ८ सू० ७६ ऋ० १२ ।

---

१ क. 'णरूपस्य स्प' । २ घ. ङ. प्राणरूपं ।

तृतीयपादं व्याचष्टे—

इन्द्रात्परि तन्वं मम इति तद्यदेवैतद्बृहतीसहस्र-
मनुष्टुप्संपन्नं भवति तस्मात्तदैन्द्रात्प्राणाद्बृहत्यै
वाचमनुष्टुभं तन्वं संनिर्मिमीते, इति ।

यद्यस्मात्कारणात्तदेवैतद्बृहतीसहस्रं पूर्वोक्तरीत्या पञ्चविंशत्यधिकशतोपेतमनुष्टुप्सहस्रं संपद्यते । सहस्रशब्दमध्याहृत्यानुष्टुप्सहस्रं संपन्नमिति व्याख्येयम् । तस्माद्बृहत्यामनुष्टुबन्तर्भावात्कारणादनुष्टुब्रूपां वाचं तस्मात्पूर्वमुपास्यत्वेनोक्तादैन्द्रात्परमेश्वरसंबन्धात्प्राणादेव बृहतीरूपान्निमित्तात्तन्वं तनुं शरीरमयं होता संनिर्मिमीते सम्यङ्निष्पादयति । बृहत्यात्मकप्राणस्य तदन्तर्भूताऽनुष्टुबपि शरीरं भवतीत्यर्थः ।

तदेवमनुष्टुबन्तर्भावेन बृहती प्रशस्ता, तादृशबृहतीसहस्ररूपस्योक्थस्य प्रकारान्तरेण पञ्चविधत्वध्यानं विधत्ते—

स वा एष वाचः परमो विकारो यदेतन्महदुक्थं तदे-
तत्पञ्चविधं मितममितं स्वरः सत्यानृते इति, इति ।

बृहतीसहस्रात्मकं यदेतत्प्रौढं शस्त्रं[3] स ऐषो[4]ऽक्षरसमष्टिरूपाया[5] वाचः परमो विकार उत्तमं कार्यम् । त्रिष्टुप्सहस्रादिभ्य उत्तमत्वं पूर्वमेव दर्शितम् । तादृशमेतदुक्थं[6] मितादिभिर्वाग्विशेषैः पञ्चविधमिति[7] ध्यायेत् । अक्षरसंख्याप्रयुक्तच्छन्दोविशेषयुक्तं[8] मितम् । तद्रहितममितम्, गीतिनिष्पादकः स्वरः, अबाध्यं तत्त्वं सत्यम्, बाध्यं मिथ्याभूतमनृतम्, इत्येते वाग्विशेषा ध्येयाः ।

तान्विशेषान्विस्पष्टमुदाहृत्य प्रदर्शयति—

ऋग्गाथा कुम्भ्या तन्मितं यजुर्निगदो वृथा वाक्तदमितं सामाथो
यः कश्च गेष्णः स स्वर ओमिति सत्यं नेत्यनृतम्, इति ।

अर्धपादव्यवस्थोपेतो[9] मन्त्र ऋगित्युच्यते "अग्निमीळे पुरो हितम्" [ ऋ० सं० म० १ सू० १ ऋ० १ ] इत्यादिका । तस्यामृग्जातौ सर्वलोकप्रसिद्धार्थप्रतिपादिका "प्रातः प्रातरनृतं ते वदन्ति" इत्यादिका गाथा, ऋगेव । आचारशिक्षारूपा कुम्भ्या । तद्यथा—"ब्रह्मचार्यस्यपोऽशान कर्म कुरुं[10] मा सुषुप्थाः" इत्यादिः[11] । अत्र यदेतदृक्सामान्यं

---

इन्द्रात्परि तन्वं०—ऋ० सं० म० ८ सू० ७६ ऋ० १२ ।

---

१ ग. तत्तस्मा° । २ क. °त्प्राणदेवाद्बृह° । ३ घ. ङ. सहस्रं । ४ घ. ङ. एवैषोऽ° । ५ क. °रसहस्रस° । ६ क. ख. ग. °दुक्थमित्यादि° । ७ क. °विधं मितामि° । ८ ग. °शेषैर्युक्तं । ९ क. ङ. °र्धर्चपा° । १० क. ग. °रु दिवा मा स्वाप्सीर्मा सु° । ११ घ. ङ. °त्यादि । अ° । क. °त्यादि च । अ° ।

यौ च गाथाकुम्ब्यारूपावृग्विशेषौ तदेतत्त्रयं छन्दोरूपेण नियतपरिमाणत्वान्मितमित्युच्यते। "इषे त्वा" [ तै० सं० १ । १ । १ ] इत्यादिमन्त्रजातं यजुस्तद्विशेषरूपः "अग्ने महाँ असि ब्राह्मणभारत" इत्यादिको निगदो ब्राह्मणगता येऽर्थवादा या च राजसभादौ परिहासादिरूपेणोच्यते सा सर्वा वृथा वाक्तदेतत्त्रयं नियतपरिमाणाभावादमितमित्युच्यते। प्रथमद्वितीयादिस्वरैर्निष्पाद्यं रथंतरवामदेवादिरूपं यत्साऽस्ति, अथो अपि च यः कोऽपि गेष्णः सामभागः सामगैः पर्वशब्देन व्यवह्रियमाणस्तत्सर्वमत्र स्वरशब्देन विवक्षितम्। "सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० आ० प्र० ८ अ० २ ] इत्यादिश्रुतिसिद्धस्यात्यन्तमबाध्यस्य वस्तुनः प्रतिपादको योऽयमोमितिशब्दस्तदेतदत्र वाचः संबन्धि सत्यमिति विवक्षितम्। सर्वप्रपञ्चस्य निषेधको योऽयं नेति शब्दस्तदेतदभावपर्यवसायित्वादत्रानृतशब्देन विवक्षितम्।

इत्थं ध्यातव्यमित्या(व्या मिता)द्याः पञ्च विधा निरूपिताः। तत्र सत्यध्यानं प्रशंसति—

तदेतत्पुष्पं फलं वाचो यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः पुष्पं हि फलं वाचः सत्यं वदति, इति।

ओमित्येवंरूपं यत्सत्यं तदेतद्वाग्रूपस्य वृक्षस्य फलस्थानीयम्। काण्डद्वयप्रतिपाद्यं कर्म ज्ञानं च शब्दसंबन्धित्वाद्वृक्षस्य पुष्परूपम्। तदुभयसाध्यं देवताजन्म मुक्तिश्चेत्युभयं तस्य वृक्षस्य फलरूपम्। तयोः पुष्पफलयोर्हेतुत्वादोंकारस्तद्रूपत्वेनोपचर्यते। एवं ध्याता पुमान्यस्माद्वाचः संबन्धि पुष्पं फलं च वदति तस्मादयं लौकिकधनसंपत्त्यादियशोयुक्तो वैदिकपुण्यानुष्ठानकीर्तियुक्तश्च भवितुं समर्थः।

प्रसङ्गाद्बुद्धिस्थमनृतवदननिषेधं पुरुषार्थतया दर्शयति—

अथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेद्दयेत त्वेनेन, इति।

प्रकृतादुपासनात्प्रशंसारूपाद्वाक्याद[3]र्थान्तरकथनार्थोऽथशब्दः। न प्रकृतमुपासनाङ्गमुच्यते किंत्वन्यः कश्चित्प्रासङ्गिकोऽनृतनिषेध इत्यर्थः। यदनृतं मिथ्याभाषणमस्ति तदेतद्वाग्वृक्षस्य मूलस्थानीयम्। सत्यस्य पुष्पफलस्थानीयत्वे सति तद्विपरीतस्यानृतस्य मूलत्वं युक्तम्। तत्तथा मूलत्वे सति लोके यथा कश्चिद्वृक्षो भूमेरुत्खातः सन्नाविर्भूतमूलो भूत्वा प्रथमं शुष्यति पश्चादुद्वर्तते विनश्यति च, एवमेवानृतं वदन्पुरुषो

१ ख. ग. घ. ङ. °दनृत°। २ क. ख. °नात्तप्र°। ३ घ. °क्यार्थो°। ४ क. °तवदननि°। ५ क. °नृतमिथ्याभा°। ख. ग. °नृतमित्यर्थभा°। ६ ख. ग. °मूलभूतः प्र°। ७ क. °श्यतीत्येव°।

वाग्वृक्षरूपमात्मानमाविर्मूलं करोति । मूलभूतस्यानृतवदनस्य परेषामग्रे प्रकटीकृतत्वात् । तेन पापेन स पुरुषः शुष्यति । सर्वैस्तिरस्कार्यत्वमेवास्य शोषः । अयमनृतवादी न तु प्रामाणिक इत्येवं सर्वे तिरस्कुर्वन्ति । स तादृशः पुरुष उद्वर्तते विनश्यति, नरकं प्राप्नोतीत्यर्थः । तस्मात्कारणाज्जनतिरस्कारान्नरकाच्च भीतः पुमाननृतं न ब्रूयात्किंत्वेनेनानृतेन निमित्तेन दयेत स्वात्मानं रक्षेत् ।

प्रासङ्गिकं पुरुषार्थमनृतानिषेधं[१] परिसमाप्य लौकिकव्यवहारोपन्यासमुखेन प्रकृतयोरोंकारनकारयोः सह ध्यानं प्रशंसितुं केवलमोंकारं लोकव्यवहारे निन्दति—

पराग्वा एतद्रिक्तमक्षरं यदेतदो३मिति तद्यत्किंचो-
मित्याहात्रैवास्मै तद्रिच्यते स यत्सर्वमों कुर्या-
द्रिञ्च्यादात्मानं स कामेभ्यो नालं स्यात्, इति ।

ओमिति यदेतदक्षरमस्ति तत्पराग्रिक्तं च । परमुत्कृष्टं जगत्कारणमखण्डैकरसं ब्रह्मतत्त्वमञ्चति गच्छति प्रतिपादयतीति पराक् । अत एव संसाराद्बहिर्भूतं सद्रिक्तं संसारभोगशून्यम् । तत्तथा सति संसारी पुमान्स्वयमुदरं पुष्णन्यत्किंचित्स्वकीयं याचकाय पुरुषायोमिति ब्रूयात्स्वकीयकुटुम्बनिर्वाहमविचार्य याचकं प्रति त्वदभीष्टं[३] तथैवास्तु त्वमेव स्वी कुर्वित्येव यदि ब्रूयात्तदानीमयं पुमानत्रैव लोकेऽस्मै गृहक्षेत्रादिभोगाय रिच्यते रिक्तो भोगशून्यो भवति । एकैकद्रव्यदाने यथा तद्भोगशून्यत्वं तथा स पुमान्यदि सर्वमपि स्वकीयं धनमों कुर्याद्याचकायाभ्यनुजानीयात्तदानीमात्मानं रिञ्च्याद्रिक्तं सर्वधनशून्यं कुर्यात् । स तादृशो धनहीनः पुमान्भोगेभ्यो न पर्याप्तः स्यात् ।

केवलमोंकारं निन्दित्वा केवलं नकारमपि निन्दति—

अथैतत्पूर्णमभ्यात्मं यन्नेति स यत्सर्वं नेति ब्रूयात्पा-
पिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्, इति ।

अथ केवलोंकारनिन्दानन्तरं केवलनकारो निन्द्यत इति शेषः । यदेतन्नेति निषेधकमक्षरमस्ति तदेतदभ्यात्मं पूर्णमात्मानं धनस्वामिनमभिलक्ष्य वर्तत इत्यभ्यात्मं तस्मिन्वर्तमानं सदिदमक्षरं धनसंपत्तिहेतुत्वात्पूर्णमित्युच्यते[४] । यः पुमानत्यन्तलुब्धः सन्नर्थिने बलिभिक्षादिकं किमपि न प्रयच्छति किं तु नेत्युच्चारयन्सर्वमपि[५] याच्यमानं निषेधति तथाविधस्य लुब्धस्य धनमक्षीणं सत्स्वगृहे पूर्णमवतिष्ठते । स तादृशो[६] लुब्धो[७] यदि याचकाय किमप्यदत्त्वा सर्वं नेति ब्रूयात्तदानीमस्य पापिका कीर्तिर्जायते ।

---

१ क. °ङ्गिकपु° । २ क. °षार्थानृ° । ३ ख. ग. °दभीप्सितं त° । ४ क. ख. ग. °संपूर्णहे° । ५ क. ख. °नं नेति नि° । ६ घ. ङ. °शो य° । ७ ग. °ब्धो या° ।

अत्यन्तलुब्धोऽयं दुरात्मा धिगेनमित्येवं सर्वे निन्दन्ति। सा निन्दा पापरूपा कीर्तिरेनं पापात्मानं तत्रैव गृहे हन्यान्मारयेज्जीवन्नप्यसौ मृत एव। तथा च भगवतोक्तम्—"संभावितस्य चाकीर्तिर्मरणादतिरिच्यते" [भ० गी० अ० २ श्लो० ३४] इति।

ननु [1]धनस्य दानादानयोरुभयोरपि [2]निन्दितत्वे का गतिः पुरुषस्येत्याशङ्क्याऽऽह—

तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनी करोति तयोर्मिथुनात्प्रजायते भूयान्भवति, इति।

यस्माद[3]केकं निषिद्धं तस्मा[4]त्तत्परित्यज्योभयं मिलित्वैवमनुष्ठेयम्। कथमित्याशङ्क्य स प्रकार उच्यते। "संप्राप्तो वैश्वदेवान्ते सोऽतिथिः" इत्यादिशास्त्रसिद्धो यो दानकालस्तस्मिन्नेव दद्यान्न त्वन्यस्मिन्काले। तत्तथा सत्योंकाररूपं सत्यं निषेधकनकाररूपमनृतं च मिथुनी करोति मिलित्वा युग्मं करोति। तयोर्दानप्रतिषेधयोः सत्यानृतयोर्मिथुनात्प्रजायत इह लोके निन्दारहितः प्रकृष्टो भवति। परलोके च भूयानुत्कृष्टजन्मानुभवति। यथा लोक ओंकारनकारौ मिलितौ प्रशस्तौ तथाऽत्रापि मिलितौ ध्येयावित्यर्थः।

मितादिपञ्चविधस्य ध्यानमुक्त्वा केवलस्याकारस्य ध्यानं विधत्ते—

यो वै तां वाचं वेद यस्या एष विकारः स संप्रतिविदकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति, इति।

पूर्वत्र "स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्" इत्यभिहि[5]तं शस्त्रं यस्या वाचो विकारस्तां वाचं यः पुमान्वक्ष्यमाणप्रकारेणोपास्ते स पुमान्संप्रतिवित्सम्यगभिज्ञः। कोऽयं प्रकारः सोऽभिधीयते—अकार एव सर्ववागात्मकः सेयमकाररूपा वाङ्मातृकामन्त्रैः ककारादिभिर्मकारान्तैः स्पर्शैः शषसहैरूष्मभिश्च व्यज्यमाना सती नानाविधा बहुरूपा च भवति। पूर्वमेकस्य सत इदानीमनेकत्वं बहुत्वम्। तेषां च बहुभेदानां परस्परवैलक्षण्यं नानारूपत्वम्। एक एवाऽऽकाशो यथा सूचिच्छिद्रं गृहच्छिद्रमित्येवमुपाधिभेदाद्बहुत्वं प्राप्य न्यूनाधिकभावेन परस्परवैलक्षण्यमपि प्राप्नोति, एवमेक एवाकारः कखगघेत्यादिभिरुपाधिभिरनेकत्वं प्राप्य परस्परम[6]ल्पघोषाक्षरयुक्तश्चेति वैलक्षण्यं प्रतिपद्यते। तदेवमकारस्य ककारादिषु सर्वे[7]ष्वनुगतत्वाद्भेदप्रतीतेरौपाधिकत्वाच्च सर्ववागात्मकत्वं सिद्धम्।

---

१ क. ख. तस्य। २ क. ख. निन्द्यत्वे। ३ घ. ङ. °देनं नि°। ४ ख. ग. घ. ङ. °स्मात्परि° ५ क. ख. ग. °तं तत्र श°। ६ घ. ङ. °मघो°। ७ ग. घ. ङ. °त्वात्सर्वे°।

अकारस्य ध्यानमुक्त्वा तदीयध्वनिभेदयोर्ध्यानं विधत्ते—

**तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तिर इव तिर इव ह्यशरीरमशरीरो हि प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तदाविराविर्हि शरीरम्, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥ ( १८ )**

**तस्यै** पूर्वोक्ताया अकाररूपायास्तस्या वाचो **यदुपांशु** यन्मन्दध्वनियुक्तमुच्चारणं **स प्राण** इति ध्यायेत् । **अथा**नन्तरं यदुच्चध्वनियुक्तमुच्चारणं **तच्छरीर**मिति ध्यायेत् । यस्मान्मन्दोच्चारणस्य प्राणरूपत्वं **तस्मा**त्तन्मन्दोच्चारणं **तिरो**भूतमिव भवति । व्यवहितैः पुरुषैरश्रूयमाणत्वात् । लोके यद्यदशरीरं तत्तन्नेत्रेणादृश्यत्त्वात्तिरोहितमिव भवति । **प्राणो**ऽप्यशरीरत्वात्तिरोभूत इति तद्रूपस्य मन्दध्वनेः परैरश्रवणं युक्तम् । पूर्वोक्तवैलक्षण्यार्थोऽथशब्दः । मन्दध्वनेर्विलक्षणो योऽयमुच्चध्वनिस्तच्छरीररूपं तस्माच्छरीररूपत्वात्तदुच्चध्वनियुक्तमुच्चारणमा**विः** प्रकटं भूत्वा परैः श्रूयते । यस्माच्छरीरं परैर्दृश्यमानत्वादाविर्भूतं तस्माच्छरीररूपस्योच्चध्वनेराविर्भावो युक्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥ ( १८ )

---

अथ सप्तमः खण्डः । ( एकोनविंशः )

---

“उक्थमुक्थम्” [ ऐ० आ० २ अ० १ ख० २ ] इत्यारभ्य “आविर्हि शरीरम्” इत्यन्तेन ग्रन्थेन बृहतीसहस्ररूप उक्थे प्राणदेवताया नानाविधगुणविशिष्टत्वेनोपासनमभिधाय पूर्वमेव “संभूय देवता अप्येति” [ ऐ० आ० २ अ० २ ख० ४ ] इति समष्टिरूपहिरण्यगर्भप्राप्तिलक्षणं फलमुक्तं तदेवात्र कृत्स्नोपास्तावालस्याभावेन श्रद्धामुत्पादयितुं पुनर्दर्शयति—

**तद्वा इदं बृहतीसहस्रं संपन्नं तद्यशः स इन्द्रः स भूतानामधिपतिः स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात्प्रैतीति ह स्माऽऽह महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति, इति ।**

---

१ क. °स्मान्म° । २ क. ख. °रूपं हि° ।

प्राणस्वरूपं निष्केवल्याख्यं यदुक्थं तदेवेदमक्षरगणनया बृहतीसहस्रं संपन्नम्। तच्च प्राणरूपं सगुणं ब्रह्म यशोनामकम्। अत एव श्रुत्यन्तरे श्रूयते—"न तस्येशे कश्चन तस्य नाम महद्यशः" [ तै० आ० प्र० १० अ० १ ] इति। स च बृहतीसहस्ररूपः प्राणदेव इन्द्रः परमैश्वर्ययुक्तः। अत एव भूतानां ब्रह्मादिस्तम्बान्तानां प्राणिनामधिपतिस्तादृशं यः पुमानुपास्ते स पुमान्विस्रसा हैव जीवन्नेव विस्रस्य मनुष्यत्वाद्यभिमानं सर्वात्मना परित्यज्य प्राणदेवो हिरण्यगर्भोऽस्मीत्याभिमानिकं साक्षात्कारं प्राप्यास्माल्लोकाद्दृश्यमानात्प्रैति निर्गच्छतीत्येवमितरायाः पुत्रो महिदासनामको मुनिः स्वशिष्यान्प्रत्याह स्म। प्रेत्य मरणादूर्ध्वं स्वयमिन्द्रो जगदीश्वरो हिरण्यगर्भो भूत्वैषु लोकेषु ब्रह्माण्डान्तर्गतेषु चतुर्दशभुवनेषु व्याप्य राजति दीप्यते। मरणात्प्रागेव भावनाजनितो देवभावः श्रुत्यन्तरेऽपि श्रूयते—"देवो भूत्वा देवानप्येति" [ बृह० ४। १। २ ] इति। यद्यप्युक्थशस्त्रस्य प्रतीकस्येदमुपासनमित्यहंग्रहस्याभावाद्भावनाजनितसाक्षात्काररूपो देवताभावो युक्त्या न संभवति तथाऽपि वाचनिकस्याहंग्रहस्य विद्यमानत्वात्संभवत्येव देवभावः। प्रतीकोपासकानामर्चिरादिमार्गे गच्छतां विद्युल्लोकादूर्ध्वं ब्रह्मलोकप्राप्तिर्नास्तीति ब्रह्ममीमांसायां चतुर्थाध्यायस्य तृतीयपादान्ते यन्निर्णीतं तदप्यत्र न प्रसरति। अहंग्रहसद्भावेन हिरण्यगर्भोऽहमस्मीत्येवं संकल्पस्य विद्यमानत्वात्। सूत्रकारोऽपि "तत्क्रतुश्च" [ ब्र० सू० अ० ४ पा० ३ सू० १६ ] इति सूत्रावयवेन ध्यातव्यदेवतात्मभावसंकल्पमेव ब्रह्मलोकप्राप्तौ हेतुमवोचत्। स च संकल्पोऽत्र "अहमुक्थमस्मीति विद्यात्" [ ऐ० आ० २ अ० १ ख० २ ] इत्येवं विहितः। तस्माद्धिरण्यगर्भप्राप्तिद्वारा क्रममुक्तौ न कोऽपि विघ्नोऽस्ति।

अर्वाचीनजन्मसु वैराग्यमन्तरेण यथोक्तोपासनायां प्रवृत्त्यसंभवात्तद्वैराग्यसिद्ध्यर्थं जुगुप्सितस्य मनुष्यदेहस्य स्वीकारप्रकारं दर्शयितुं जिज्ञासूनां प्रश्नं दर्शयति—

**तदाहुर्यदनेन रूपेणामुं लोकमभिसंभवती३**
**अथ केन रूपेणेमं लोकमाभवती३, इति।**

तत्तत्र शरीरग्रहणविषय आहुर्जिज्ञासवः पृच्छन्ति। यद्यस्मात्कारणादनेन रूपेण बृहतीसहस्रात्मकप्राणदेवोऽस्मीत्येतादृशेन ध्यानेनामुं लोकं हिरण्यगर्भं प्राप्नोतीत्येतावदेवगतं तन्निश्चयद्योतनार्था प्लुतिः। अथैतन्निश्चयानन्तरं जिज्ञासितोऽर्थः

१ क. ख. ग. °ते च। न। २ घ. ङ. सर्वथा। ३ ख. ग. °स्मीत्याद्याभि°। ४ घ. ङ. °ह्माण्डगते°। ५ घ ङ. °हसद्भावाभा°। ६ घ. °सनायाम°। ७ ख. ग. घ. ङ. °ति मी°। ८ क. ख. °देवात्म°। ९ ग. °त्येवमवि°। १० क. ख. ग. °त्तच्छरी°। ११ क. ख. ग. °गर्भरूपं प्रा°। १२ क. ख. °प्नोत्ये°। १३ ग. °दसंग°। १४ ख. ग. °गतमेव त°।

पृच्छ्यत इति शेषः । स एव प्रश्नोऽभिधीयते । केन रूपेण देवभावव्यतिरिक्तेन कीदृशेनाऽऽकारेण समीचीनेन जुगुप्सितेन वेमं मनुष्यलोकमभिसंभवति प्राप्नोति । विचारार्था प्लुतिः ।

अभिज्ञानामुत्तरं दर्शयति—

तद्यदेतत्स्त्रियां लोहितं भवत्यग्नेस्तद्रूपं तस्मात्त-
स्मान्न बीभत्सेताथ यदेतत्पुरुषे रेतो भवत्यादि-
त्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत सोऽयमा-
त्मेममात्मानममुष्मा[1] आत्मने संप्रयच्छत्यसावा-
त्माऽमुमात्मानमिमस्मा आत्मने संप्रयच्छति
तावन्योन्यमभिसंभवतोऽनेनाह रूपेणामुं लोक-
मभिसंभवत्यमुनो रूपेणेमं लोकमाभवति, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्याये सप्तमः खण्डः ॥ ७ ॥ ( १९ )

तत्तत्र प्रश्ने[2] स्पष्टमुत्तरमुच्यत इति शेषः । स्त्रीशरीरे यदेतल्लोहितं सप्त[म]धातुरूपं शोणितमस्ति तदेतदाग्निस्वरूपं लोहितवर्णसाम्यात् । यस्मादग्निरूपं लोहितं तस्मात्कारणादग्निरूपात्तस्मात्स्त्रीलोहितान्न बीभत्सेत । अशुचित्वबुद्ध्या बीभत्सां न कुर्यात् । यद्यपि[3] रागवशादेव प्राणिनां बीभत्सा नास्ति तथाऽपि कस्यचिच्छ्रौतस्मार्तकर्मानुष्ठानशीलस्य श्रद्धाजाड्यात्कथंचिद्बीभत्सा[4] स्यादिति तन्निषिध्यते । ऋतौ भार्यामुपेयादिति नियमविधेः स्मर्यमाणत्वाच्छास्त्रीयत्वेन श्रद्धालुनाऽपि बीभत्सा न कर्तव्या । अथशब्दो वैलक्षण्यार्थः[5] । स्त्रीलोहिताद्विलक्षणं यदेतत्पुरुषशरीरे रेतः सप्त[म]धातुरूपमस्ति तदेतच्छुक्लवर्णत्वसाम्यादादित्यस्य[6] रूपम् । तस्मात्कारणात्तादृशादित्यरूपाद्रेतसो न बीभत्सेत । अत्र स्त्रीदेहः[7] पृथिवीवदधोवर्तित्वादिदंशब्देनोच्यते । पुरुषदेहो द्युलोकवदुपरिवर्तित्वाददःशब्देनोच्यते । षाट्कौशिके पुत्रशरीरे मातृलोहितात्त्वगसृङ्मांसरूपं कोशत्रयं निष्पद्यते । लोहितवर्णस्य तत्रानुगमात् । पितृरेतसो मेदोऽस्थिमज्जारूपं कोशत्रयं निष्पद्यते । शुक्लवर्णस्य तस्मिन्ननुगमात्[8] । तथा सति सोऽयमात्मा स्त्रीदेह इमं[9] स्वकीयमात्मानं[10] त्वगादिधातुत्रयभागममुष्मा आत्मने पुरुषसंबन्धिने मेदोऽस्थिमज्जाभागाय[11] संप्रयच्छति तेन संयुज्यत इत्यर्थः । असावात्मोपरितनः पुरुषदेहोऽप्य-

---

१ क. ख. °मिममस्मा । २ ग. घ. ङ. प्रश्नस्य पृष्ट° । ३ ग. °द्यप्यनुरा° । ४ घ. ङ. °चित्तद्बी° । ५ घ. °क्षण्यद्योतनार्थः । ६ घ. °त्यस्वरू° । ७ क. ख. °देहं पृ° । ८ घ. ङ. तत्रानुगतत्वात् । ९ घ. ङ. इममात्मानं त्व° । १० क. ख. °कीयं त्व° । ११ क. °मज्जभा° ।

मुमात्मानं स्वकीयं मेदोस्थिमज्जाभागमिमस्मा आत्मनेऽधोवर्तिस्त्रीसंबन्धित्वगसृङ्मांसभागाय संप्रयच्छति तेन संयुज्यत इत्यर्थः। इत्थं तावुभौ भागावन्योन्यमत्यन्तमैक्यं प्राप्नुतः। अहशब्द एवकारार्थः। अनेनाह रूपेण स्त्रीलोहितजनितत्वगादिरूपेणैवामुं लोकमभिसंभवत्युपरितनं पुरुषभागं प्राप्नोति। *उकारोऽपिशब्दार्थः। अमुनो रूपेण पुरुषसंबन्धिमेदोस्थिमज्जारूपेणापीमं लोकमा भवति। स्त्रीजनितत्वगादिभागं प्रत्यागच्छति। इत्थं मनुष्यदेहस्य शुक्लशोणितजनितत्वेनात्यन्तजुगुप्सितत्वात्तत्प्राप्तिनिवारणार्थं ततो विरक्तो हिरण्यगर्भप्राप्तये यथोक्तोपासनायां प्रवर्तत इत्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये सप्तमः खण्डः॥ ७॥ (१९)

---

अथाष्टमः खण्डः। (विंशः)

---

अथोपास्तिफलप्रशंसार्थं मन्त्रमुदाहरति—

तत्रैते श्लोकाः३, इति।

तत्र तस्मिन्हिरण्यगर्भप्राप्तिलक्षणे फल एते वक्ष्यमाणाः श्लोकाः पादव्यवस्थोपेता मन्त्राः सन्ति।

तत्र प्रथमं मन्त्रमाह—

**यदक्षरं पञ्चविधं समेति युजो युक्ता अभियत्संवहन्ति।**
**सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति, [इति]।**

न क्षरति न विनश्यतीत्यक्षरं प्राणदेवतातत्त्वं सोऽयं प्राणदेवः पञ्चभूतकार्यत्वेन पञ्चविधं यच्छरीरं समेति सम्यक्प्राप्नोति। उपासकस्य शरीरमध्ये वर्तत इत्यर्थः। युज्यन्ते शरीराख्यरथे बध्यन्त इति युज इन्द्रियाश्वाः "इन्द्रियाणि हयानाहुः" [काठ० ३। ४] इति च श्रुत्यन्तरम्। ते चेन्द्रियाश्वा युक्ताः परमेश्वरेण शरीररथे संयोजिताः सन्तो यच्छरीरमभिसंवहन्ति। अभितः सर्वासु दिक्षु सम्यङ्नयन्ति। किंच यत्र शरीरे सत्यस्य सत्यं परब्रह्मस्वरूपमनुयुज्यते प्राणदेवतामनु शरीरेऽवस्थाप्यते। द्वितीयसत्यशब्दस्य परब्रह्मपरत्वं बृहदारण्यके ब्रह्मप्रकरणे पठ्यते—

---

* अमुना, उ, इति च्छेदः।

---

१ क. ख. °मज्जभा°। २ क. घ. ङ. °मिममस्मा। ३ घ. ङ. ददाति। ४ क. ख. °र्थः। ता°। ५ घ. ङ. °रिवर्तिपु°। ६ क. ख. °मज्जरू°। ७ क. °काः पदार्थव्य°। ख. ग. °काः पदव्य°। ८ क. ख. बध्नन्तीति। ९ घ. ङ. °न्तरे। ते। १० क. ङ. °न्ति। य°।

" अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् " [ बृह० २ । ३ । ६ ] इति । परब्रह्मणः प्राणदेवतामनु शरीरेऽवस्थानमाथर्वणिकैः पठ्यते—"स ईक्षांचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" [ प्रश्नो० ६ । ३ ] इति । अतः प्राणदेवतामनु *रूपं ब्रह्म यत्र शरीरे युज्यते तत्रोपासकशरीरे सर्वे वागाद्यभिमानिनोऽग्न्यादिदेवा एकं भवन्ति, एकत्वं प्रतिपद्यन्ते। उपासको हि स्वशरीरे वर्तमानसर्वदेवतात्मकप्राणरूपोऽहमस्मीत्येवं ध्यायति[1] ।

द्वितीयं मन्त्रमाह—

**यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत्संवहन्ति ।**
**सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति,** इति ।

पञ्चम्यन्तेनाक्षरशब्देन कदाचिदपि विनाशरहितो द्वितीयसत्यशब्दवाच्यः परमात्मोच्यते । प्रथमान्तेनाक्षरशब्देन व्यवहारकाले बाधरहितः प्रथमसत्यशब्दवाच्यः प्राणोऽभिधीयते । सोऽयं परमात्मन उत्पन्नः प्राण इन्द्रियैर्युक्तमुपासकसंबन्धि यच्छरीरमेति प्राप्नोति । युजो युक्ता इत्यादि पूर्ववत् । उपासकशरीरे सर्वदेवतासमष्टिरूपः परमात्मोपाधिरूप उपास्यः प्राणो वर्तत इत्येतस्यार्थस्य दार्ढ्याय पूर्वोक्तस्यैव पुनरप्युक्तिः ।

तृतीयं मन्त्रमाह—

**यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।**
**तद्वियूया कवयो अन्वविन्दन्नामायत्ता समतृप्यञ्छ्रुतेऽधि,** इति ।

याचकाय सर्ववस्त्वनुज्ञाप्रदानवाचकं वाचः संबन्धि यदेतदोमित्यक्षरं दारिद्यकारणमस्ति, यदपि दातृव्यवस्तुप्रतिषेधवाचकं नेत्येतदक्षरमपकीर्तिकारणमस्ति, यदप्यन्यदस्या वाचः संबन्धि क्रूरं खट्फडादिरूपमस्ति । तथा चान्यत्र श्रूयते—

"खट्फट् जहि । छिन्धी भिन्धी हन्धी कट् । इति वाचः क्रूराणि" । [ तै० आ० प्र० ४ अ० २७ ] इति । यदु च यदप्यन्यदुल्बणिष्णु अत्युल्बणं वाचः स्वरूपमाक्रोशादिकं तत्सर्वं कवयो मेधाविन उपासका वियूय परित्यज्य प्राणतत्त्वमन्वविन्दन्ध्यात्वा लब्धवन्तः[2] । ते च कवयो नामायत्ताः प्राणदेवतानाम्नोऽकारस्याधीनाः[3] सन्तोऽकारो वै सर्वा वागित्याद्युक्तप्रकारेण प्राणरूपमकारमेव ध्यायन्तः श्रुते[4] यथोक्तश्रुतिप्रोक्ते प्राणतत्त्वेऽधिसमतृप्यन् । आधिक्यं यथा भवति तथा तृप्तिं प्राप्ताः ।

* " ब्रह्मरूपम् " इति पठितुं योग्यम् ।

१ घ. ङ. ध्यायेत् । २ घ. ङ. °तव्ये व° । ३ ख. ग. °नाम्नौका° । घ. ङ. °नाम्नोंका° । ४ क. घ. ङ. श्रूयते ।

चतुर्थमन्त्रमाह—

यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान्, इति ।

श्रुते श्रुतिप्रोक्ते यस्मिन्प्राणतत्त्वे नामा पूर्वोक्तस्य नाम्नोऽकाररूपस्याधीनाः कवयोऽधिसमतृप्यन्, तत्र तस्मिन्प्राणतत्त्वे देवा अग्न्यादयः सर्वयुजः सर्वेणापि प्रकारेण युक्ता भवन्ति । सर्वेऽपि देवा [अ]विशेषेण प्राणस्वरूपा इत्येवमुपासकेन चिन्त्यमानत्वात् । तेन प्राणोपाधिकेन ब्रह्मणा पाप्मानं हिरण्यगर्भप्राप्तिप्रतिबन्धकं सर्वं कर्मजातमपहत्य विनाश्य विद्वानुपासकः स्वर्गं लोकं हिरण्यगर्भस्वरूपभूतमप्येति प्राप्नोति ।

पञ्चमं मन्त्रमाह—

नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्रीपुमान्ब्रुवन् ।
पुमांसं न ब्रुवन्नेनं वदन्वदति कश्चन, इति ।

एवं प्राणदेवं वदन्कश्चन वदिष्यामीत्येवमुद्युक्तः कोऽपि पुरुषो वाचा स्वकीयजिह्वागतेन शब्देन स्त्रियं ब्रुवन्स्त्रीशरीररूपोऽयमिति ब्रुवन्नप्येनं प्राणदेवं न वदति । तथैवास्त्रीपुमान्स्त्रीपुरुषव्यतिरिक्तो नपुंसकोऽयमित्येवं ब्रुवन्नप्येनं न वदति । तथा पुमांसं ब्रुवन्पुमानयमित्येवं ब्रुवन्नप्येनं प्राणं न वदति । अयमर्थः । लोके पुमान्स्त्री नपुंसकश्चेत्येवं तिस्र एव स्थूलशरीरव्यक्तयस्तत्र तच्छरीरस्वीकारात्प्राणदेवस्तेन तेन पुमानित्यादिशब्देनोपचर्यते । न तु वस्तुतः प्राणदेवस्य पुंदेहादिकमस्ति ।

तथा च श्वेताश्वतरा आमनन्ति—

"नैव स्त्री न पुमानेष नैव चायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स चोद्यते"

[ श्वेता० ५ । १० ] इति ।

एवं सति प्राणदेवं तद्वाचकेन शब्देन वदिष्यामीत्येवमुद्युक्तः पुरुषो यदि पुमान्स्त्री नपुंसकमित्येतेषामन्यतमेन शब्देन ब्रूयात्तदानीमयं प्राणदेवं न वदत्येव । तेषां त्रयाणां स्थूलदेहवाचित्वेन प्राणवाचित्वाभावात् । किं बहुना प्राणदेवतासाक्षात्कारयुक्तः पुरुषः शिष्यान्प्रति प्राणदेवस्य स्थूलदेहरूपत्वं यथा न प्रतीयते तथैव ब्रूयादिति ।

यदि स्त्री नपुंसकं पुमानित्येतैः शब्दैः प्राणो नाभिधीयते केन तर्ह्यभिधीयेतेत्याशङ्क्य श्लोकरूपत्वं परित्यज्य ब्राह्मणरूपेण ग्रन्थेनाऽऽह—

अः इति ब्रह्म तत्राऽऽगतमहमिति, इति ।

---

१ क. ख. ग. °र्थमा° । २ ख. श्रुते । ३ ग. घ. ङ. °रस्या° । ४ ग. °णरू° । ५ ग घ. ङ. सर्वक° । ६ ग. °के स्त्री पुमान्नपुंसकं चेत्ये° । ७ ख. °सकं चेत्ये° । ८ ग. घ. ङ. स युज्यते । ९ घ. ङ. °वाचकत्वे° । १० घ. ङ. °सकः पु° ।

प्रथमाविभक्त्यन्तो योऽयमकारः सोऽयं प्राणोपाधिकस्य ब्रह्मणो वाचकनामत्वेन निर्दिश्यते । यथा हिरण्यगर्भः सर्वप्राणिष्वनुगतः "सर्वाहंमानी हिरण्यगर्भः" [ नृसिं० उत्त० ९ ] इति श्रुतेः । तथैवायमकारः सर्वेषु ककारादिष्वनुगतत्वेन हिरण्यगर्भवद्वक्तुं योग्यस्तस्मादकारेण प्राणोपाधिकं ब्रह्मानुसंधाय तत्र तस्मिन्ब्रह्मण्यहमित्येतदुपासकस्वरूपवाचकं पदमागतं प्राप्तं यथा भवति तथा प्राणमेवं व्यवहरेत् । अत एवाहमुक्थमस्मीति विद्यादिति विधिः पूर्वमुदाहृतः ।

उपास्यस्वरूपं संक्षिप्य दर्शयित्वा तत्फलं संक्षिप्य दर्शयति—

**तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति जीवाक्षरेणैव जीवाहराप्नोति जीवाह्ना जीवाक्षरमिति, इति ।**

तद्वा इदमित्यारभ्याह्नां सहस्राणि भवन्तीत्यन्तं पूर्वमेव [ ऐ० आ० २ अ० २ ख० ४ ] व्याख्यातम् । तच्च वक्ष्यमाणस्याक्षरस्य प्रशंसार्थं पुनरनूद्यते । बृहतीसहस्रगतानामक्षराणां मध्येऽनुगतं यदेतदकाराख्यमक्षरं तदेतज्जीवरूपम् । सति ह्यकारे तद्युक्ततया ककारादीनि सर्वाण्यपि विस्पष्टमुच्चारयितुं शक्यन्ते । तथा गवामयनगतानां सर्वेषामह्नां मध्ये महाव्रताख्यमहर्जीवरूपम् । अयनसंपूर्तिहेतुत्वात् । एवं सत्यकाररूपेणैव जीवाक्षरेणैव महाव्रताख्यं जीवाहः प्राप्नोति । महाव्रताङ्गभूतबृहतीसहस्ररूपप्राणस्याकाररूपत्वेनोपासितत्वात् । तेन च जीवाह्ना महाव्रताहर्गतबृहतीसहस्ररूपप्राणोपासनेन जीवाक्षरं सर्वप्राणिजीवनहेतुभूतमविनश्वरं प्राणतत्त्वं प्राप्नोति । इतिशब्दः फलवचनसमाप्त्यर्थः ।

यथोक्तफलसाधनं प्राणविज्ञानं रथरूपकल्पनया प्रशंसति—

**अनकाममारोऽथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः संग्रहीता तदयं प्राणोऽधितिष्ठति, इति ।**

अथ यथोक्तोपासनफलकथनानन्तरं तत्फलप्राप्तये कश्चिद्देवरथः संपाद्यते । देवस्य प्राणस्य हिरण्यगर्भस्य रथो देवरथः । स च कीदृशोऽनकाममारो हिरण्यगर्भपदादर्वाचीनानिन्द्रलोकचन्द्रलोकभूलोकादिगतान्कामान्मारयतीति काममारो न काममारोऽकाममारः कामसंपादक इत्यर्थः । तद्विपरीतोऽनकाममारः सर्वथा नाशयत्येव कामा-

१ घ. ङ. °गर्भ वक्तुं । २ घ. ङ. °र्वमेवोक्तः । उ° । ३ घ. ङ.°पासकस्व° । ४ ग. °रभ्योऽह्नां । ५ क. ख. °णरूपत्वं प्रा° । ६ ग. क. °धनप्रा° । ७ ग. फलविज्ञानं । ८ ख. ग. संपद्यते ।

नित्यर्थः। न खलु हिरण्यगर्भं प्राप्तः कश्चिदप्यर्वाचीनं लोकं कामयते। तस्य तादृशस्य देवरथस्यावयवाः संपाद्यन्ते। येयमुपासकस्य वाक्सैवै रथस्योद्धिः। ऊर्ध्वं धीयते स्थाप्यते युगमत्रेति रथस्य मुखमीषयोरग्रमुद्धिरित्युच्यते। पुरुषस्य श्रोत्रे रथस्य पक्षसी पार्श्वद्वयवर्तिनी चक्रे। पुरुषस्य चक्षुषी रथस्य युक्ते युगपार्श्वद्वये बद्धयोरश्वयोः स्वरूपे। पुरुषस्य यन्मनः सोऽयं रथस्य संग्रहीता सारथिः। तदेतद्रथस्वरूपं प्राणाख्यो देवोऽधितिष्ठति, उपर्यारोहति। एतादृशेन प्राणोपासनरूपेण रथेन हिरण्यगर्भं प्राप्नोतीत्यर्थः।

अथ रथप्रशंसार्थं मन्त्रद्वयमुदाहरति—

तदुक्तमृषिणा, इति।

मन्त्रद्वयेनेत्यर्थः। प्रथममन्त्रः संहितायामेवमाम्नातः—"आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना। यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः" [ऋ० सं० म० १० सू० ३९ ऋ० १२] इति। अश्विना हेऽश्विनौ देवौ वां युवयोर्यं रथमृभवो देवरूपास्तक्षाणश्चक्रुर्निर्मितवन्तः। लोकेऽत्यन्तवेगवत्त्वेन प्रसिद्धं यन्मनस्तस्मान्मनसोऽपि जवीयसाऽतिशयेन वेगवता तेन रथेनाऽऽयातमस्मदनुग्रहार्थमागच्छतम्। यस्य रथस्य योगेऽश्वयोजने संपन्ने सति दिवो दुहिता द्युलोकदेवतायाः पुत्री काचिदुषा जायते। प्राच्यां दिशि सूर्यरथसंयोगे संपन्ने सत्युषःकालो भवतीति प्रसिद्धम्। सूर्यसहभावित्वमभिप्रेत्याश्विरथेऽपि तदुपचर्यते। उषःकालसंपत्तौ सत्यां विवस्वतः सूर्यस्य संबन्धिनी ये अहनी ते उभे सुदिने प्रजानां सुखचेष्टासंस्थापनहेतू भवतः। तत्र रात्रेरप्यहःशब्दार्थत्वमभिप्रेत्य द्विवचनमुक्तम्। उभयोरप्यहःशब्दार्थत्वं मन्त्रान्तरेऽपि दृश्यते—"अहश्च कृष्णमहरर्जुनं च" [ऋ० सं० म० ६ सू० ९ ऋ० १ इति। अन्धकारोपेता रात्रिः कृष्णमहः। अर्जुनं श्वेतं प्रकाशोपेतमहः प्रसिद्धमेव। द्वितीयमन्त्रः संहितायामेवमाम्नातः—"निमिषश्चिज्जवीयसा रथेनाऽऽयातमश्विना। अन्ति षद्भूतु वामवः" इति। [ऋ० सं० म० ८ सू० ७३ ऋ० २] अश्विना हेऽश्विनौ देवौ निमिषश्चिन्निमेष इव यथा निमेषो विलम्बं न करोति तथा जवीयसाऽत्यन्तवेगयुक्तेन रथेनाऽऽयातमागच्छतम्। वां युवयोरवो रक्षणमन्ति अस्माकमन्तिके सत्सर्वदा वर्तमानं भूतु भवतु।

---

१ घ. ङ. °सः कोऽप्य°। २ ग. संपद्यन्ते। ३ घ. ङ. °व देवर°। ४ क. युगं यत्रे°। ५ ख. ग. °श्वैव°। ६ घ. ङ. °द्वयोर°। ७ घ. ङ. पुत्रिका। ८ घ. ङ. °र्यसं°। ९ ग. °थस्य यो°। १० ग. °ष्टास्वप°।

एतयोर्मन्त्रयोः प्रदर्शनार्थं प्रथमपादावुदाहरति—

आ तेन यातं मनसो जवीयसा निमि-
षश्चिज्जवीयसेति जवीयसेति, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयाध्यायेऽ-
ष्टमः खण्डः ॥ ८ ॥ (२०)

## इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यके तृतीयोऽध्यायः ॥ ३ ॥

इतिशब्दोऽयं मन्त्रद्वयप्रतीकोदाहरणार्थः। द्विरभ्यासोऽध्यायसमाप्त्यर्थः। "उक्थमुक्थम्" [ऐ० आ० २ अ० १ ख० २] इत्यारभ्य "जवीयसा" इत्यन्तेन ग्रन्थेन प्रतिपाद्यमेकमेव प्राणोपासनमुपास्तिभेदप्रतिपादकयोः पृथगुपक्रमोपसंहारयोरभावाद्यानि तत्र तत्र पृथक्फलश्रवणानि तानि[1] सर्वाणि गुणफलानि द्रष्टव्यानि। यत्र त्वेकमेव फलं[2] पुनः श्रूयते तत्र गुणान्तरे रुच्युत्पादनाय फलानुवादो द्रष्टव्यः। ननु च्छान्दोग्यबृहदारण्यकादिष्वपि प्राणविद्या समाम्नाता। अतस्तत्रत्या गुणा अत्रोपसंहर्तव्याः। शाखाभेदेऽपि[3] पञ्चाग्निविद्यादौ विद्यैक्यस्य[4] गुणोपसंहारस्य च मीमांसायां निर्णीतत्वात्। मैवम्। असाधारणगुणप्रत्यभिज्ञाराहित्येन विद्यैक्याभावे[5] सति गुणोपसंहारासंभवात्। अत्र कर्माङ्गमुक्थं प्राणदृष्ट्योपासनीयम्। तत्र तु प्राण एवोपासनीय इति[6] चोद्यभेदाद्विद्याभेदः। एतच्च च्छान्दोग्यबृहदारण्यकयोर्देवासुराख्यायिकायामुदाहृत्य भिन्नैवोद्गीथविद्येति निर्णयाँत्तद्दृष्टान्तेन विद्यानानात्वमवगम्यते। न च प्राणस्य देवस्यैकत्वेन विद्यैक्यं शङ्कनीयम्। तथा सति ब्रह्मण एकत्वेन सर्वेषां ब्रह्मोपासनानामेकत्वप्रसङ्गात्। तदेकत्वं च "नानाशब्दादिभेदात्" [ब्र० सू० अ० ३ पा० ३ सू० ५८] इत्यधिकरणे निराकृतम्। यद्यप्येतत्प्रतीकोपासनं तथाऽपि वाचनिकस्याहंग्रहस्य विद्यमानत्वादितरब्रह्मोपासनवत्साक्षात्कारपर्यन्तमुपासितव्यम्। ततो जातस्य साक्षात्कारस्य रक्षणार्थं मरणपर्यन्तमावर्तनीयम्। अन्यथा चित्तविक्षेपेण साक्षात्कारे नष्टे च सति देवो भूत्वा देवानप्येतीत्येतादृशं[7] फलं नोपपद्यते। श्रूयते चात्र तादृशं फलम् "प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद" [ऐ० आ०

---

आ तेन यातं०—ऋ० सं० म० १० सू० ३९ ऋ० १२। निमिषश्चिज्जवीयसा०—ऋ० सं० म० ८ सू० ७३ ऋ० २।

---

१ क. °नि तानि स°। २ घ. ङ. °लं श्रू°। ३ ख. ग. शाखभे°। ४ घ. ङ. विध्यैक्य°। ५ घ. ङ. विध्यैक्या°। ६ क. ख. ग. °ति चेदभे°। ७ क. °याद्दृ°। ८ घ. ङ. °मन्त्र ग°।

२ अ० २ ख० ४ ] इति । यद्यप्यन्यत्र कर्मा[१]ङ्गाववद्धमुपासनं कर्म[२]काल एवानुष्ठेयं तथाऽपि यावज्जीवमावर्तनीयत्वात्कर्मानुष्ठानरहितेऽपि काले मनसैव बृहतीसहस्ररूपमुक्थं संपाद्योपासनीयम् । अत एव कर्मपारतन्त्र्याभावादितरब्रह्मोपासनेष्विव नास्त्यासननियमः । दिग्देशकालनियमस्तु चित्तैकाग्र्यं प्रत्यनुपयुक्तत्वान्नास्तीति निर्णीतम् । एवमामरणमु[३]पासीनस्येतरप्राणिवन्मार्गोपक्रमपर्यंतमुत्क्रान्तिः समाना द्रष्टव्या । तत्राऽऽदौ वागादीन्द्रियाणां वृत्तिर्मनसि विलीयते । मनोवृत्तिश्च प्राणे लीयते । प्राणश्च जीववृ[४]त्त्यां लीनो भवति । जीवोऽपि प्राणसहितस्तेजःप्रधानेषु पञ्चभूतेषु लीयते । त[५]था भूतपञ्चकं परमात्मनि बीजावशेषं प्रलीयते । तावता पूर्वस्य जन्मनः समाप्तिः । अथ परमात्मनि सावशे[६]ष[७]त्वेन लीनं तल्लिङ्गशरीरं हृदयपुण्डरीके पुनरुद्भूय मूर्धन्यया नाड्या निर्गत्य रात्रावहनि वा सूर्यरश्मिं प्राप्योत्तरायणेन दक्षिणायनेन वाऽर्चिरादिमार्गेणैव गच्छ[८]ति । अर्चिरादयः सर्वेऽप्यातिवाहिका देवास्तैस्तत्र तत्र नीतः क्रमेण कार्यब्रह्मलोकं प्राप्य तत्र स्वसंकल्पादेव भोग्यजातं सृजति । स्थूलशरीरं तु स्वेच्छया सृष्ट्वा तेन च शरीरेण जागरणवद्भोगान्भुङ्क्ते । यद्वा स्थूलदेहसृष्टिमन्तरेण स्वप्नवन्मनसैव सर्वान्भोगान्भुङ्क्ते । यदा स्वेच्छया बहून्देहान्सृजति तदा तेषु[१०] सर्वेषु देहेषु पृथक्पृथगन्तःकरणोपाधिकाञ्जीवान्सृष्ट्वा तद्रूपेण य[११]थेच्छं विहरति । तदेवं जगत्सृष्टिव्यतिरिक्तं सर्वमैश्वर्यमस्य योगिनः परमेश्वरेण समानम् । ततस्तत्रोत्पन्नज्ञानः सन्ब्रह्मलोकावसा[१२]ने तेन च ब्रह्मणा सह मु[१३]च्यते । तदेतत्सर्वं मीमांसायां तृतीयचतुर्थयोरध्याययोर्द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्यायेऽष्टमः खण्डः ॥ ८ ॥ (२०)

**इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यकभाष्ये द्वितीयारण्यके तृतीयोऽध्यायः ॥ ३ ॥**

---

## अथ द्वितीयारण्यके चतुर्थोऽध्यायः ।

तत्र प्रथमः खण्डः । ( एकविंशः )

---

इत्थमध्यायत्रयेण प्राणविद्या प्रपञ्चिता । तावता ब्रह्मविद्यायां पुरुषस्य मुख्याधिकारः संपन्नः । कर्मकाण्डोक्तैः कर्मभिर्विविदिषाया उत्पन्नत्वादुपासनया चित्तैकाग्र्यस्य संपन्नत्वाच्च । तत्संपत्तौ श[१४]मादयो गुणा अर्थसिद्धाः । ते चाऽऽत्मविद्यायामन्त-

१ घ. ङ. °[illegible]त्वद्धद्ध° । २ क. ख. °मेफलमेवा° । ग. °मेफल । ३ ग. °पासन° । घ. ङ. °पासकस्ये° । ४ ख. ग. °वृत्त्या ली° । ५ घ. ङ. तद्यद्भूत° । ६ घ. ङ. °शेषं ली° । ७ ग. °षत्वान्न ली° । ८ घ. ङ. °च्छतः । अ० । ९ घ. ङ. °न श° । १० ग. °षु दे° । ११ ग. यथेष्टं । १२ घ. ङ. °ने ब्र° । १३ क. युज्यते । १४ घ. ङ. शमदमा° ।

रङ्गभूताः, "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति" [ बृह० ४ । ४ । ३ ] इति श्रुतेः। अतो मुख्याधिकारिणमुपलभ्य श्रुतिरध्यायत्रयेण ब्रह्मतत्त्वं[1] विस्पष्टमुपदेष्टुमादौ[2] तत्त्वं संग्रहेण सूत्रयति[3]—

**आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्,** इति।

आत्मशब्दस्यार्थो[4] महर्षिभिरेवं स्मर्यते—

"यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य संततो भावस्तस्मादात्मेति गीयते[5]"।

[ लिङ्गपु० अ० ७० श्लो० ९६ ] इति।

द्विविधो ह्यात्मा व्यवहारविशिष्टः केवलश्चेति[6]। व्यवहारोऽपि त्रिविधः। जागरणं स्वप्नः सुषुप्तिश्चेति। तत्र सुषुप्तावयं जीवः स्वोपाधिविलये[7] सति परमानन्दरूपं ब्रह्म प्राप्नोति। तथा च **कैवल्योपनिषदि** श्रूयते—"सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति" [ कैव० १३ ] इति। तस्मादाप्नोतीत्यात्मेति स्मर्यमाणं प्रथमं निर्वचनं द्रष्टव्यम्। स्वप्नावस्थायामयं[8] जीवो जागरणस्थपदार्थवासनाः[9] सर्वा आदत्ते। तथा च **वाजसनेयिनः**[10] पठन्ति—"स यत्र[11] प्रस्वपित्यस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति" [ बृह० ४ । ३ । ९ ] इति[12]। अस्यायमर्थः—यदाऽयं जीवो वाक्चक्षुरादिदशविधबाह्यकरणोपरतिरूपं[13] स्वापमाप्नोति तदानीं सर्वावतो गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य[14] लोकस्येन्द्रियैरवलोक्यमानस्यास्य जगतो मात्रां लेशरूपां वासनामुपादाय तत्तत्पदार्थेभ्योऽपाच्छिद्य[15][16] स्वयं[17] स्वीकृत्य ततो जागरणाभिमानं स्वयमेव विनाश्य स्वप्ने[18][19] जगद्रूपं च स्वयमेव निर्माय जगदाकारेण परिणतेन स्वेन भासा स्वकीयेनान्तःकरणेन तथा स्वेन ज्योतिषा स्वरूपचैतन्येन कल्पितपदार्थावभासकेन युक्तः सन्प्रस्वपितीति। तस्माद्वासनानां स्वीकारादादत्त इत्यात्मेति द्वितीयं[20] निर्वचनं द्रष्टव्यम्। जागरणावस्थायां चक्षुरादिबाह्येन्द्रियैर्बाह्यरूपादिविषयानत्ति भुङ्क्ते। तथा चाऽऽथर्वणिकैराम्नायते—"स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति" [ कैव० १२ ] इति। ततो बाह्यविषय-

---

१ घ. ङ. °त्त्वं स्प°। २ ग. °देष्टव्यमा°। ३ क. ख. घ. ङ. सूचयति। ४ घ. ङ. °शब्दो म°। ५ घ. ङ. कीर्तितः। ६ ग. °ति। विशिष्टव्य°। ७ ग. स्वोपधि°। ८ क. °स्थायां जी°। ९ ग. °रस्थ°। १० घ. ङ. °यिन आमनन्ति। ११ क. यत्र स्व°। घ. ङ. यत्रायं प्रस्वपितील्य°। १२ घ. ङ. °ति। य°। १३ घ. ङ. °पं प्रस्वा°। १४ ग. °दीम°। १५ ग. °त्परिमाणपदा°। १६ क. ग. °र्थेभ्यो व्यवच्छि°। १७ ग. °यं विहत्य स्वी°। १८ ग. °स्वप्रज°। १९ क. °प्ने जागरणरूपं°। २० क. °तीयनि°।

भोगानत्तीत्यात्मेति तृतीयं[1] निर्वचनं द्रष्टव्यम् । उपाधिविशिष्टस्यावस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तम् । अथ केवलस्य निर्वचनमुच्यते । यद्यस्मात्कारणादस्याऽऽत्मनो भावः स्वभावविशेषः संततः परिच्छेदरहितः । तथा च "सत्यं ज्ञानमनन्तं ब्रह्म" [तै० आ० प्र० ८ अ० २] इत्यत्र श्रुत्यन्तरे देशपरिच्छेदकालपरिच्छेदराहित्यलक्षणमानन्त्यमभिहितम् । तस्मादतति सातत्येन सर्वत्र गच्छतीत्यात्मेति चतुर्थं[2] निर्वचनं द्रष्टव्यमिति । एवं सत्यत्रा[3]ऽऽत्मतत्त्वनिर्देशस्य प्रस्तुतत्वादखण्डैकरसत्वेन संततत्वमात्मशब्दप्रवृत्तिनिमित्तम् । यदि धातुप्रत्ययजन्यमवयवार्थमुपेक्ष्य रूढिमाश्रित्य स्वरूपवाचित्वमु[4]च्यते तदाऽप्यध्यस्तस्य निखिलस्य जगतोऽधिष्ठानत्वेन सर्वस्वरूपत्वमस्ति । न[5] ह्यारोपितानां सर्पधारादण्डमालाबलीवर्दमूत्रितत्वादीनामधिष्ठानभूतां रज्जुमन्तरेण किंचिदन्यद्वास्तवं स्वरूपमस्ति । किं बहुना यद्ययमात्मशब्दो यौगिको यदि वा रूढः सर्वथाऽपि संततोऽखण्डैकरसः सर्वजगदधिष्ठानत्वेन तदीयवास्तवस्वरूपभूतः पदार्थ आत्मशब्देन विवक्षितः । वैशब्दोऽवधारणार्थः । इदमिदानीं[6] सर्वजनीनप्रत्यक्षादिप्रमाणैः सर्वैरपि प्रतीयमानं जगदग्रे सृष्टेः पूर्वमात्मैवाऽऽसीन्न तु कार्यभूतं नामरूपात्मकं जगदासीत् । नाप्यात्मगोचरौ शब्दप्रत्य[7]यावास्ताम् । लोके मृत्कार्यभूतघटशरावाद्युत्पत्तेः पूर्वं मृदेवास्ति न तु घटादिकं तथाऽपि मृद्गोचरौ शब्दप्रत्ययौ विद्येते एव तद्वदत्रापि प्रसक्तौ सत्यां शब्दप्रत्ययावपि वैशब्देन व्यावर्त्येते । देहेन्द्रियादीनामभावेन जिह्वानिष्पाद्यस्य शब्दस्य मनोनिष्पाद्यस्य प्रत्ययस्य चाभावः सुतरामुपपद्यते । नन्विदमात्माऽऽसीदितिसामानाधिकरण्येन जगद्वैशिष्ट्यमात्मनः प्रतीयते । नीलमुत्पलमिति सामानाधिकरण्यश्रवणे सत्युत्पलद्रव्यस्य नीलत्वगुणवैशिष्ट्यस्य प्रतिभासात् । मैवम् । वैशिष्ट्ये सत्यग्रशब्दस्य वैयर्थ्यप्रसङ्गात् । इदानीं जगद्विशिष्ट आत्मा प्रतिभासत इत्यनुपपत्त्या स्थितिकालं परित्यज्य केवलमात्मानं वक्तुमग्रशब्देन सृष्टेः प्राचीनकाल उपादीयते । तदेवमनेन वाक्येनाखण्डैकरसमात्मतत्त्वं सूत्रितं[8] भवति । एकादिशब्दैरखण्डैकरसत्वमेव स्पष्टी[9] क्रियते । लोके वृक्षादिपदार्थेषु स्वगतः सजातीयो विजातीयश्चेति त्रिविधो भेदोऽस्ति । यथा शाखास्कन्धपत्रादीनां परस्परप्रतियोगिको वृक्षस्य स्वगतो भेदः । वृक्षान्तरप्रतियोगिकः सजातीयः । पाषाणप्रतियोगिको विजातीयः । तद्वदात्मनोऽपि प्रसक्तावेकशब्देन स्वगतभेदो व्यावर्त्यते । वृक्षवन्नानात्मको न भवति किंत्वेकात्मक इत्यर्थः । एवशब्देनाऽऽत्मान्तरव्यावृत्तिः । योऽयमेकः स एव न त्वन्यः कश्चित्तादृश इत्यर्थः । नान्यदित्यादिना विजातीयभेदो

---

१ ग. °तीयनि° । २ क. ख. ग. °र्थं द्रष्टव्यं निर्वचनमि° । ३ ख. °त्यत्र त° । ४ घ. ङ. °मुच्येत त° । ५ क. न त्वारो° । ६ क. ख. घ. ङ. °नीं सार्व° । ७ घ. ङ. °त्ययौ पूर्वमास्ता° । ८ क. घ. ङ. सूचितं । ९ घ. ङ. स्पष्टं ।

निषिध्यते । अन्यत्प्रकृतादात्मनो विलक्षणं किंचन किंचिदपि वस्तु न मिषत् । धातूनामनेकार्थत्वान्नासीदित्युक्तं भवति । न च जगदुत्पादनाय मायाख्यायाः शक्तेरङ्गीकार्यत्वादन्यसद्भावः शङ्कनीयः । आत्मशक्तित्वेनावस्तुत्वेन च मायायाः पृथग्गणनानर्हत्वात् । न हि भृत्येभ्यो जीवितं प्रयच्छन्तः स्वामिनस्त्वैतद्धनं त्वदीयशक्तेश्चैतावदिति विभज्य गणयन्ति । नाप्यवस्तुभूतं चन्द्रप्रतिबिम्बादिकमभिलक्ष्य द्वौ चन्द्रमसौ वस्तुभूतावित्येवं बुद्धिमन्तो व्यवहरन्ति । तस्मादङ्गीकृतायामपि मायायामात्मनोऽखण्डैकरसात्मतायां न कोऽपि विघ्नोऽस्ति । ईदृशः स यदि तत्रापि जगदनुवर्तेत तदानीं व्यर्थोऽयमग्रशब्दप्रयासः स्यात् । सामानाधिकरण्यं तु बाधायामप्युपपद्यते । यस्त्वदीयश्चोरः स स्थाणुरित्येवं बाधदर्शनात् । तद्वदत्रापि यज्जगत्त्वेनेदानीं प्रतिभासते तज्जगन्न भवति किं त्वात्मैवेत्येवं योजनीयम् । नन्विदानीमपि तत्त्वदृष्ट्या नेदं जगत्किंत्वात्मैव । बाढम् । तथाऽपि बुभुत्सोर्मूढस्य जगत्त्वप्रत्ययदार्ढ्यादनुभवविरोधभ्रमो मा भूदिति सृष्टेः प्राचीनकाल उपन्यस्यते । कालस्यापि सृष्ट्यन्तर्भावात्कालवाचकोऽग्रशब्दोऽनुपपन्न इति चेन्न । परप्रसिद्ध्यनुसरणार्थत्वात् । परप्रसिद्ध्या परो बोधनीय इति न्यायः । परेस्थं तु बुभुत्सोः पूर्वसृष्टिवर्तमानसृष्ट्योर्मध्ये प्रलयकालप्रसिद्धिरस्त्यतस्तदीयभाषया बोधयितुमग्र इत्युच्यते । अनेनैव न्यायेनाऽऽत्माऽऽसीदिति शब्दद्वयं परप्रसिद्ध्या योजनीयम् । अन्यथा पुनरुक्तिपरिहाराय शब्दद्वयस्यार्थभेदेऽङ्गीकृते सति सत्ताविशिष्ट आत्मेत्येवं प्रतिभासादखण्डार्थत्वं हीयेत । श्रुतेस्त्वात्मशब्दसच्छब्दौ पर्यायत्वेनाभिमतौ । अत एव—“ आत्मा वा इदमेक एवाग्र आसीत् ” इत्यस्य स्थाने छन्दोगाः—“ सदेव सौम्येदमग्र आसीत् ” [छा० ६ । २ । १ ।] इति पठन्ति । सर्वथा सर्वभेदशून्य आत्माऽत्र विवक्षितो न तु हिरण्यगर्भादिर्लौकिक आत्मा ।

एतच्च तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

“आत्मा वा इदमित्यत्र विराट्स्यादथवेश्वरः ।<br>
भूतसृष्टेर्नेश्वरः स्याद्व्याख्यानयनाद्विराट् ॥<br>
भूतोपसंहृतेरीशः स्यादद्वैतावधारणात् ।<br>
अर्थवादो गवाद्युक्तिर्ब्रह्मात्मत्वं विवक्षितम् ॥

“ आत्मा वा इदमेक एवाग्र आसीत् ” इत्यत्र विराट्स्यादथवेश्वर इति संदेहे विराडेवाऽऽत्मशब्दवाच्यो नेश्वरः । कुतः । “ स ईक्षत लोकानुसृजै ” [ ऐ० आ० २ अ० ४ ख० १ ] इति पञ्चभूतसृष्टिमनुक्त्वा लोकमात्रसृष्टेरभिधानात् । ईश्वरप्र-

१ ग. °दकमा° । २ क. ख. °थगभिधाना° . ३ क. ख. बाध्यतायां° । ४ ग. °भावसद्भावा° । ५ घ. ङ. °रस्परबु° । ६ ग. °स्य बु° । ७ ग. °तेश्चाऽऽत्म° । ८ क. ख. ग. °न्ति । सर्वभे° । ९ ख. ग. °राडे° ।

करणेषु तैत्तिरीयच्छन्दोगादिषु भूतसृष्ट्यभिधानदर्शनात् । "ताभ्यो गामानयत्" [ऐ० आ० २ अ० ९ ख० १] इति चोक्तं[1] गवाद्यानयनं शरीरिणो विराजो घटते न त्वशरीरस्य परमेश्वरस्येति प्राप्ते ब्रूमः—"एक एवाग्र आसीत्" इत्यद्वैतावधारणादीश्वरोऽत्राऽऽत्मशब्दार्थः । तथा सति शाखान्तरोक्तं[2] भूतसृष्टिरत्रोपसंहर्तुं शक्यते । यत्तु गवाद्यानयनं तदर्थवाद[3]रूपम्, तद्वेदनस्य स्वातन्त्र्येण पुरुषार्थत्वाभावात् । अथ भूतार्थवादत्वं मन्येथास्तर्हि विराडादिद्वारा परमेश्वर एव गवादिकमानयतु । श्रूयमाणस्य गवा[4]नयनादिप्रपञ्चस्य सर्वस्यार्थवादत्वे श्रुतेर्विवक्षितोऽर्थः कोऽपि न सिध्येदिति चेन्न । जीवब्रह्मैक्यस्य विवक्षितत्वात् । "आत्मा वै" इत्युपक्रम्य "स एतमेव पुरुषं ब्रह्म ततममपश्यत्प्रज्ञानं ब्रह्म" [ऐ० आ० २ अ० ४ ख० ३] इत्युपसंहारात् । "तस्मादीश्वर[5] एवाऽऽत्मशब्दवाच्यः" ।

इत्थं संग्रहेणाऽऽत्मतत्त्वं सूत्रितम्[6], तच्चाध्यारोपापवादाभ्यां प्रपञ्चयते । तत्र "स ईक्षत" इत्यारभ्य "अयमावसथः" [ऐ० आ० २ अ० ४ ख० ३] इत्यन्तेन ग्रन्थेनाऽऽरोपं प्रपञ्चयितुकाम आदावारोपं संगृह्णाति—

**स ईक्षत लोकान्नु सृजा इति स इमाल्लोँकानसृजत, इति ।**

आत्मा वा इदमित्यनेन सूत्रेण सूत्रितः स परमेश्वरः पृथिव्यादील्लोँकान्स्रक्ष्यामीत्येवमीक्षत ईक्षणं विचारं कृतवान् । नुशब्दो वितर्के । इत्थं विचार्य स परमेश्वर **इमाल्लोँकानसृजत** । यद्यप्यत्राऽऽत्मैवेति केवलं तत्त्वं प्रकृतं तथाऽपि निर्विकारस्य जगद्भावापत्त्यसंभवाच्छाखान्तरो[9][10]क्ता मायाशक्तिरप्यर्थादुक्तेति द्रष्टव्यम् । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" [श्वेता० ४ । १०] इति हि श्रुत्यन्तरम् । "इन्द्रो मायाभिः पुरुरूप ईयते" [ऋ० सं० म० ६ सू० ४७ ऋ० १८] इति च । मायासहितस्योपादानस्य विवक्षितत्वाद्विवर्तवाद एवात्राभ्युपेतव्यो न त्वारम्भपरिणामवादौ । यद्यपि "लोकान्नु सृजै" इत्येतावन्मात्रविचारेण कुलालवन्निमित्तकारणत्वमेव प्रतीयते तथाऽपि "सोऽकामयत बहु स्यां प्रजायेय" [तै० उ० २।६ । १] इति शाखान्तरगतस्य स्वकीयबहुभाव[11]विचारवाक्यस्य गुणोपसंहारन्यायेनात्रोपसंहारादुपादानत्वमपि सिध्यति । एतच्च भगवता व्यासेन सूत्रितम्—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्[12]" [ब्र० सू० अ० १ पा० ४ सू० २३] इति । योऽयं परमात्मा नासौ केवलं निमित्तमेव किं तु प्रकृतिरुपादानमपि । कुतः । "येनाश्रुतं श्रुतं भवति" [छान्दो० ६ । १ । ३] इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया

---

१ ग. घ. ङ. चोक्तग° । २ ग. °क्तमूलसृ° । ३ क. ख. °दस्वरू° । ४ घ. °वादि° । ५ ग. घ. ङ. °र आत्म° । ६ घ. ङ. सूचितं । ७ ग. °क्षणं । ८ घ. ङ. °गदुद्धा° । ९ क. °वादवान्त° । १० क. °रोक्तमा° । ११ ख. ग. °ववाक्यविचारस्य । १२ ग. °नुपरो° ।

उपादानरूपदृष्टान्तस्य चानुसारात्[१] । तदेतत्सूत्रोक्तं स्वपक्षसाधनपरपक्षदूषणमुखेन स्मृतिपादेन तर्कपादेन च प्रपञ्चितम् । स्रष्टव्यानां लोकानां भौतिकत्वेन भूतव्यतिरेकेणासंभवाद्भूतसृष्टिरप्यत्रोपसंहरणीया । सा चान्यत्रैवमाम्नायते[२]—"तस्मा द्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी" [तै० आ० प्र० ८ अ० २] इति । एतद्विषयविचारश्च द्वितीयाध्याये तृतीयपादस्य[३] पूर्वभागे प्रतिपादितः । परमेश्वरस्य सत्यसंकल्पत्वाद्भूतसृष्टौ लोकसृष्टौ वा संकल्पव्यतिरिक्तं साधनान्तरं नापेक्षितम् । अत एवान्यत्र श्रूयते—"सत्यकामः सत्यसंकल्पः" [छान्दो० ८ । १ । ५] इति । "स तपस्तप्त्वा । इदꣳ सर्वमसृजत" [तै० उ० २ । ६ । १] इत्यन्यत्र श्रवणात्तपोरूपसाधनमपेक्षितमिति चेन्मैवम् । न ह्यत्र कृच्छ्रचान्द्रायणादिकं तपः, किं तु स्रष्टव्यसंकल्प एव "यस्य ज्ञानमयं तपः" [मुण्ड० १ । १ । ९] इति श्रुत्यन्तरात् । संकल्पस्य निरङ्कुशत्वान्नास्तीश्वरस्य भूयान्प्रयासः । तस्य च संकल्पस्य सत्यत्वाज्जगतो न मनोराज्यतुल्यत्वम् ।

ये लोकाः परमेश्वरेण सृष्टास्तान्स्वस्वनाम्ना निदर्शयति[४]—

**अम्भो मरीचीर्मरमापः,** इति ।

एतेषां शब्दानां लोकवाचित्वप्रसिद्धेरभावात्स्वयमेव श्रुतिर्व्याचष्टे—

**अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः,** इति ।

**दिवं परेण** द्युलोकस्योपरि महर्लोकजनोलोकतपोलोकसत्यलोका ये सन्ति या च **द्यौः प्रतिष्ठा** सर्वेषां देवानामाश्रयभूतो द्युलोकोऽदोऽम्भ एतत्सर्वमम्भःशब्दवाच्यम् । लोकेषु पञ्चभूतानां साधारणत्वेऽपि जलस्यास्मदुपभोग्ययोग्यत्वेन प्राधान्यमभिप्रेत्यादोऽम्भ इत्युक्तम् । उपरितनलोकाद्वृष्टिद्वारेणाऽऽगतमम्भ एवास्माभिः साक्षादुपलभ्यते, न तु भूतान्तरम् । सूर्यमरीचीनामाधारत्वादन्तरिक्षलोको **मरीचय** इति शब्देनोच्यते । भूलोकवर्तिनां प्राणिनां सहसा म्रियमाणत्वान्मरशब्देन **पृथिव्युप**लक्ष्यते । पृथिव्या **अधस्तात्**पातालविशेषरूपा भोगभूमयो **याः** सन्ति **ताः** सर्वास्तल्लोकवासिभिर्नागादिभिराप्यमानत्वाद्**आप** इत्युच्यन्ते ।

लोकसृष्टिमुक्त्वा पालकाभावेन लोकानां विनाशो मा भूदिति लोकपालसृष्टिं[८] दर्शयति—

**स ईक्षतेमे लोका लोकपालान्नु सृजा इति**

---

१ घ. ङ. °नुसरणात् । २ क. घ. ङ. °त्रैवाऽऽम्ना° । ३ क. °दपू° । ४ घ. ङ. निर्दिशति । ५ क. ग. घ. °जनलो° । ६ क. ख. °राप्याम्यमा° । घ. ङ. °राप्यायमा° । ७ क. ख. °नि पालक° । ८ ग. घ. °लकसृ° ।

सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्, इति ।

स परमेश्वरः पुनरप्येवं विचारितवान् । इमे खलु लोका निष्पन्नास्तेषां भोगस्थानानामचेतनानां लोकानां रक्षणार्थं चेतनाँल्लोकपालान्देवान्सर्वथा स्रक्ष्यामीति । स विचारयुक्त ईश्वरोऽद्भ्य एव जलोपलक्षितपञ्चभूतेभ्य एव पुरुषं पुरुषाकारं विराट्पिण्डं समुद्धृत्यामूर्छयन्मूर्तं कठिनमकरोत् । यथा कुलालस्तडागे जलस्याधस्तादार्द्रां मृदमानीय शोषयित्वा कठिनं पिण्डं करोति तद्वदेवायं विराट्पुरुषः समष्टिरूपो ब्रह्माण्डरूपस्य लोकस्य पालकः ।

अथ तदवान्तरलोकपालानां चेतनानामग्न्यादिदेवतानां सृष्टिं दर्शयति—

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥ (२१)

तं विराट्पुरुषदेहमभ्यतपदभितस्तत्तच्छिद्रतद्गतेन्द्रियतदभिमानिदेवतासृष्ट्यर्थं स परमेश्वरः पर्यालोचितवान् । पर्यालोचनमेव तप इति पूर्वमुक्तम् । अभितः पर्यालोचितस्य विराट्पिण्डस्य मुखं छिद्रं निरभिद्यत मुखच्छिद्रं विदारितमभूत् । यथा पक्षिसर्पादीनां पक्वमण्डं भिन्नं भवति तद्वत् । तस्मान्मुखच्छिद्राद्वागिन्द्रियं निष्पन्नम् । तस्माच्चेन्द्रियादग्निर्देवता निष्पन्ना । एवमुत्तरपर्यायेष्वपि च्छिद्रेन्द्रियदेवता व्याख्येयाः । प्राणो घ्राणेन्द्रियम् । लोमशब्देन तदाधारभूतत्वङ्निष्ठं स्पर्शनेन्द्रियमुच्यते । हृदयमष्टदलं कमलम् । अपानोऽधःसंचारी वायुः । रेतो गुह्येन्द्रियम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥ (२१)

---

१ क. ख. ग. °पालकान्दे° । २ घ. ङ. °राजं विराट्° । ३ ग. °स्तटाके ज° । ४ ग. °द्वदयं । ५ क. ख. °मिदेव° ।

अथ द्वितीयः खण्डः । ( द्वात्रिंशः )

इन्द्रियाणामभिमानिदेवतानां च सृष्टिरुक्ता । अथ तासां देवतानां भोगयोग्याल्पशरीरसृष्टिं विवक्षुस्तदुपोद्धातत्वेन क्षुत्पिपासयोः सृष्टिं दर्शयति—

**ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत्**, इति ।

या इन्द्रियतदभिमानिदेवतास्ता एताः सृष्टाः सत्योऽस्मिन्पूर्वोक्ते महत्यर्णवे समुद्रवदत्यन्तविस्तृते विराड्देहे प्रापतन्प्रकर्षेण पतिता अभवन् । तं सर्वेन्द्रियतद्देवताधिष्ठानभूतं विराड्देहं क्षुत्पिपासाभ्यामन्ववार्जदनुगमितवान्संयोजितवानित्यर्थः ।

अथाल्पदेहसृष्टिमाह—

**ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन्त्सुकृतं बतेति पुरुषो वाव सुकृतम्**, इति ।

ता विराड्देहे पतिता इन्द्रियाभिमानिन्यो देवताः स्रष्टारं परमेश्वरं प्रत्येवमब्रुवन् । भोः परमेश्वरायं विराड्देहोऽस्माकं भोगक्षमो न भवति । अतिप्रौढं तं विराड्देहमापूर्य तत्र प्रतिष्ठां प्राप्तुं वयमसमर्थाः । अन्नं चैतद्देहपर्याप्तं[2] संपादयितुं वयमसमर्थाः । अतो यस्मिन्नल्पशरीरे प्रतिष्ठिताः सत्यो वयं तद्देहपर्याप्तमन्नमत्तुं शक्ता भवामस्तादृशमायतनं[3] शरीरं नोऽस्मदर्थं प्रजानीहि, अवधारय संपादयेत्यर्थः । ततः परमेश्वरस्ताभ्यो देवताभ्यो भोगाय गोदेहमानयत् । ताश्च देवता अब्रुवन्नोऽस्माकमयं[4] देहो नैवालमुपरितनानां दन्तानामभावेन दूर्वादिमूलस्योत्खातुमशक्यत्वात् । अतोऽयमपि गोदेहस्तिष्ठतु[5], इतोऽन्यमप्युभयतोदन्तं देहं सृजेत्येवमब्रुवन् । ततः परमेश्वरस्तदर्थमश्वमानयत् । ताश्च देवता विवेकज्ञानाभावादयमश्वदेहोऽपि न पर्याप्त इत्युक्तवत्यः । ततः परमेश्वरस्तदर्थं विवेकसंपन्नं पुरुषदेहमानयत् । ताश्च देवतास्तावता परितुष्टा आश्चर्यवाचकेन च बतशब्देन स्वकीयं परितोषं सूचयन्त्यः सुष्ठु कृतं परमेश्वरेणेत्यब्रुवन् । यस्मान्मनुष्यदेह एव विवेकज्ञानसंपन्नः । तथा च पूर्वमुदाहृतम्—" पुरुषे त्वेवाऽऽविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नः" [ऐ० आ० २ अ० ३ ख० २] इति । तस्मान्मनुष्यदेह एव सुकृतमित्यनेन शब्देन परितोषद्योतकेन वक्तुं योग्यः ।

---

१ क. °गभोग्या° । २ ग. °द्देहे प° । ३ क. ख. घ. ङ. °नं नोऽ° । ४ क. ख. °वमब्रु° । ५ ग. °तु, अतोऽ° ।

ईश्वरसृष्टेषु भोगक्षमशरीरेषु देवतानां प्रवेशायेश्वरप्रेरणं दर्शयति—

ता अब्रवीद्यथायतनं प्रविशतेति, इति ।

यस्मिन्नायतने छिद्रे यदिन्द्रियमुत्पन्नं या चाभिमानिनी देवतोत्पन्ना तदायतनमनतिक्रम्य हे देवताः प्रविशत ।

देवतानामित्थमनुज्ञातानां प्रवेशं दर्शयति—

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्, इति ।

योऽयमग्निर्वागिन्द्रियाभिमानी देवः सोऽयं वाग्भूत्वा वागिन्द्रिय एवान्तर्भूय मुखच्छिद्रं प्राविशत् । एवमुत्तरत्रापि योज्यम् । न खलु वागादिष्विन्द्रियेष्वग्न्यादिदेवताः प्रत्यक्षमुपलभ्यन्ते । नापि देवताभिरनभिप्रेरितानामिन्द्रियाणां स्वस्वविषयग्रहणसामर्थ्यमस्ति । एतच्च भगवता व्यासेन सूत्रितम्—"ज्योतिराद्यधिष्ठानं तु तदामननात्" [ ब्र० सू० अ० २ पा० ४ सू० १४ ] इति ज्योतिरादिभिरग्न्यादिदैवतैरधिष्ठानं वागादीन्द्रियाणां प्रेरणमभ्युपगन्तव्यम् । कुतः । तदामननात्तस्य देवताप्रेरणस्य "अग्निर्वाग्भूत्वा" इत्यादिना श्रूयमाणत्वात् । यथाऽयं विचारो द्वितीयाध्यायस्य चतुर्थपादे सूत्रितः, एवमन्येऽपीन्द्रियविषया विचारास्तस्मिन्पादे द्रष्टव्याः ।

क्षुत्पिपासयोर्विराड्देहे नियतस्य स्थानविशेषस्य पूर्वमश्रवणात्कृत्स्नशरीरे प्रवेशं दर्शयति—

तमशनापिपासे अब्रूतामावाभ्यामभि प्रजानीहीति ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥ ( २२ )

ये क्षुत्पिपासे परमेश्वरेण विराड्देहे संयोजिते ते उभे परमेश्वरं प्रति स्वार्थं स्थानविशेषमनुगृहाणेत्यब्रूताम् । ईश्वरस्तु स्थानविशेषमदृष्ट्वा वामुभे अप्येतास्वेवाग्न्या-

---

१ ग. °सृष्टिषु । २ क. ख. ग. देवानां । ३ ग. °रणां द° । ४ ग. °लक्ष्यन्ते । ५ ग. °प्रेताना° । ६ ग. स्ववि° । ७ क. दर्शितम् । ८ ग. °दिदेवैर° । ९ घ. ङ. चिन्तितः । १० घ. ङ. °षयवि° ।

दिदेवतास्वाभजामि, ततस्तास्वेव भागिन्यौ विषयविभागयुक्ते करोमीत्यब्रवीत्। यस्मादेवमीश्वरेणोक्तं तस्माल्लोके यस्यै कस्या अप्यग्न्यादिदेवतायै हविर्गृह्यते भोग्यं वस्तु समर्प्यतेऽस्यामग्न्यादिदेवतायामेते क्षुत्पिपासे भागयुक्ते एव भवतः। अग्निवाय्वादिदेवतानां शरीरेष्वप्याहारस्वीकारे क्षुत्पिपासयोरेव तृप्तिर्भवति। तथा मनुष्यशरीरेऽपि चक्षुरादिदेवतायै हविःस्वीकारे क्षुत्पिपासे तृप्यतः। यदा पात्रे पतितं समीचीनमन्नं भोक्तुकाम आदरेण पश्यति तदानीं भोग्यस्य प्रत्यासन्नत्वात्परितोषेण मनसि तृष्णा शान्तेव भवति न तु यथापूर्वं बाधते। एवमत्यन्तप्रियान्नवार्ताश्रवणस्पर्शनादौ यथोचितं तृप्तिलेशो द्रष्टव्यः। तदेतत्सर्वं देवतासु क्षुत्पिपासयोर्भागोपेतत्वम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके चतुर्थाध्याये द्वितीयः खण्डः॥ २॥ (२२)

---

अथ तृतीयः खण्डः। (त्रयोविंशः)

---

यानि भोगाद्यधिष्ठानानि गवाश्वपुरुषादिशरीराणि यानि च भोगकरणानि वह्न्यादिदेवताधिष्ठितानि वाक्चक्षुरादीनि गवादिदेहेषु प्रविष्टानि तानि सर्वाण्यभिधाय भोग्यसृष्टिमभिविधत्ते—

**स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत या वै सा मूर्तिरजायतान्नं वै तत्, इति।**

स परमेश्वरः पुनरप्येवं विचारितवान्। ये पृथिव्यादिलोका ये च लोकपालाः सेन्द्रियशरीरदेवतारूपास्ते सर्वेऽपीमे सृष्टाः खल्वतः परमेश्वरस्तेषामन्नमन्तरेण जीवनासंभवादेतदर्थमन्नं स्रक्ष्यामि, इति विचार्यान्ननिष्पादनार्थं तत्कारणभूतानि जलप्रधानानि पञ्च भूतान्यभ्यतपत्सर्वतः पर्यालोचनमकरोत्। ईदृशाज्जलसहितात्क्षेत्राद्व्रीह्यादयो जायन्तामीदृशानि मूषकादिशरीराणि मार्जारादीनामन्नभूतानि जायन्तामित्येवं संकल्पं कृतवान्। ताभ्योऽद्भ्यो जलोपलक्षितभूतेभ्यो व्रीहियवादिरूपा मूषकादिरूपा च मूर्तिरजायत। तत्र व्रीहियवादिमूर्तिर्मनुष्याणामन्नं तैरद्यमानत्वात्। तथा मूषकादिमूर्तिर्मार्जारादिभिरद्यमानत्वात्तेषामन्नम्।

अन्नसृष्टिमुक्त्वाऽन्वयव्यतिरेकाभ्यां तत्स्वीकारसाधनं निश्चिनोति—

**तदेनत्सृष्टं पराङ्त्यजिघांसत्तद्वाचाऽजिघृक्षत्तन्ना-**

---

१ ग. °ग्यप्र°। २ ग. °न्नत्वपरि°। ३ ख. ग. शान्तैव। ४ घ. ङ. °योर्भोगो°। ५ ग. घ. °तादिरू°।

शक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्न-मत्रप्स्यत्तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुं स यद्धै-नत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यच्चक्षुषाऽजिघृक्ष-त्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा-हैवान्नमत्रप्स्यत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्तत्त्वचाऽजिघृक्ष-त्तन्नाशक्नोत्त्वचा ग्रहीतुं स यद्धैनत्त्वचाऽग्रहैष्यत्स्पृष्ट्वा हैवा-न्नमत्रप्स्यत्तन्मनसाऽजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धै-नन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत्तच्छिश्नेनाजिघृक्ष-त्तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्य-द्विसृज्य हैवान्नमत्रप्स्यत्तदपानेनाजिघृक्षत्तदावयत् , इति ।

यत्सृष्टमन्नं व्रीहियवादिकं मूषकादिकं च तत्र व्रीह्याद्यन्नस्य स्वकीयवधविषयविवे-कज्ञानाभावाद्गन्तुमसमर्थत्वाच्च नास्ति[1] जनात्पलायनम् । यत्तु मूषकादिरूपं तदन्नं तदेत-[2]न्मार्जारादीनां भोक्तॄणां स्ववधहेतुत्वं निश्चित्य तेभ्यः पराङ्मुखं सदत्यजिघांसदतिश-येन हन्तुं[3] गन्तुमैच्छत्पलायितुं प्रारभतेत्यर्थः । पलायितुमुद्युक्तं तन्मूषकादिरूपमन्नं दृष्ट्वा भोक्तृवर्गो मार्जारादिर्वागिन्द्रियेण ग्रहीतुमैच्छत् । ततः सर्वप्रयत्नेन वागिन्द्रियं प्रयुञ्जानोऽपि तेन तदन्नं ग्रहीतुं नाशक्नोत् । इदानींतनोदाहरणेन सृष्टिकालीना तदशक्तिः[4] स्पष्टी क्रियते—स भोक्तृवर्ग आदिसृष्टिकाले यद्येतन्मूषकादिरूपमन्नं वाचा गृह्णीयात्तदेदानीमपि भोक्ता तदन्नवाचकैः शब्दैरीदृशमित्युक्तिमात्रेण तृप्तो भवेत् । न हि वागिन्द्रियस्याभिध्यानव्यतिरेकेणाऽऽकर्षणसामर्थ्यं किंचिदस्ति । न चैव-मन्नवाचकशब्दोच्चारणमात्रेण तृप्तिर्दृश्यते, तस्मात्सृष्टिकालेऽपि वाचोऽन्नस्वीकारसामर्थ्यं नास्तीत्यनुमेयम् । प्राणेन घ्राणेन्द्रियेण, एतदारभ्य शिश्नान्तेषु षट्सु पर्यायेषु पूर्वव-द्व्याख्येयम् । अभिप्राण्याऽऽघ्रायेत्यर्थः । अत्रापानशब्देनान्नस्य मुखबिलादन्तःप्रवे-शरूपं[5] निगरणं कुर्वन्नन्तर्मुखो यो वायुः सोऽभिधीयते । तेनापानेन तदन्नं ग्रहीतुमै-च्छत्ततस्तदन्नमावयज्जग्राहाशितवान् ।

अन्वयव्यतिरेकाभ्यां वायोरेवान्नग्रहणसाधनत्वं निश्चित्य दार्ढ्यार्थं वायुं प्रशंसति—

सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः , इति ।

मुखबिलादन्तःसंचारी वायुरिति यदस्ति स एषोऽन्नस्य ग्रहो ग्राहकः । अय-

---

१ ग. °स्ति पला° । २ ग. °देव मार्जा° । ३ क. हन्तुमैच्छद्गन्तुं पला° । ४ ग. °दन्नश° । ५ ग. घ. °शनरू° ।

मर्थोऽस्मदनुभवसिद्ध इत्यर्थः । किंचायं **वायुरन्नायुर्वै**, अन्नद्वारेणाऽऽयुष्यहेतुरेव । अन्नरसेन हि प्राणो देहे बध्यते । अत एव वाजसनेयिनः शिशुब्राह्मणे प्राणवर्णनप्रस्तावे—"अन्नं दाम" [ बृह० २ । २ । १ ] इति वाक्येनान्नस्य प्राणबन्धनरज्जुत्वमामनन्ति । तथाऽन्नबन्धनशैथिल्ये सति जीवस्य देहपरित्यागं सदृष्टान्तमामनन्ति, तद्यथा—" आम्रं वौदुम्बरं वा पिप्पलं बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्यते " [ बृह० ४ । ३ । ३६ ] इति । अन्नबन्धनप्रयुक्तस्य प्राणावस्थानस्याऽऽयुर्हेतुत्वं लोके प्रसिद्धं कौषीतकिनः समामनन्ति—" यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः " [ कौषी० ३ । २ ] इति । तदेतत्सर्वमभिप्रेत्यान्नायुर्वा एष इत्युच्यते ।

भोगाधिष्ठानभोगसाधनभोग्यभोगानां सृष्टिमभिधाय भोगस्वामिनं दर्शयितुमीश्वरस्य विचारमाह—

**स ईक्षत कथं न्विदं मदृते स्यादिति, इति ।**

यदिदं[1] देहेन्द्रियतद[2]भिमानिदेवतदीयान्नतत्स्वीकाररूपं व्यवहारजातमस्ति तदिदं सर्वं **मदृते** भोगस्वामिनं जीवरूपं मां विना **कथं नु** नाम **स्यान्न** कथं चिदुपपद्यते । न हि नगरस्वामिनं राजानं विहाय पुरस्य वा पौरजनानां वा रचना शोभते । तस्माद्भोगस्वामिना मया जीवरूपधारिणा देहे प्रवेष्टव्यमित्यर्थः ।

प्रवेशद्वारविचारं दर्शयति—

**स ईक्षत कतरेण प्रपद्या इति, इति ।**

द्वावत्र प्रवेशमार्गौ पादाग्रं[4] मूर्ध्नि ब्रह्मरन्ध्रं च । तयोर्मध्ये **कतरेण** केन मार्गेण **प्रपद्यै** प्रविशानि ।

" कथं नु " इदमिति वाक्येन जीवप्रवेशस्य देहेन्द्रियव्यवहारपालनरूपं प्रयोजनं विचारितम् । इदानीमात्मबोधरूपस्य प्रयोजनान्तरस्य विचारं दर्शयति—

**स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभि-**
**प्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि**
**त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपा-**
**नितं यदि शिश्नेन विसृष्टमथ कोऽहमिति, इति ।**

मां स्वामिनमनपेक्ष्य वागादयोऽभिवदनादिव्यापारेषु स्वतन्त्राः कर्तारः स्युस्तदानीमहं को नाम स्यां न कोऽपि भवेयम् । अस्ति कश्चिदेष देहादिव्यतिरिक्तश्चिदात्मा ।

---

१ क. ग. °दि दे° । २ घ. ङ. °न्द्रियं त° । ३ क. °वतान्न° । ख. °वतादावन्न° । घ. ङ. °वतयाऽऽदावन्न° । ४ घ. ङ. पदाग्रं ।

स च परब्रह्मस्वभाव इत्येवं कश्चिदपि न जानीयात् । यदा त्वहमेव सर्वव्यापाराणां कर्ता वागादयस्तु मया प्रेरिताः सन्तोऽभिवदनादिक्रियाः कुर्युस्तदानीं वागादिकरणको व्यापारः सकर्तृको भवितुमर्हति क्रियात्वाल्लोकप्रसिद्धगमनादिक्रियावदिति मम सद्भावोऽनुमातुं शक्यते । सोऽयमनुमानेनाऽऽत्मसद्भाव उषस्तब्राह्मणे समाम्नातः— "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः" [ बृह० ३ । ४ । १ ] इति । तस्मादात्मबोधोऽपि जीवरूपप्रवेशस्य प्रयोजनम् । तदेतदभिप्रेत्यान्यत्र श्रूयते— "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" [ ऋ० सं० म० ६ सू० ४७ ऋ० १८ ] इति । [ एवं ] प्रवेशद्वारं देहेन्द्रियादिपालनस्वात्मावबोधरूपे प्रवेशप्रयोजने च विचारितवान् ।

अथ प्रवेशं दर्शयति—

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत, इति ।**

पूर्वं "तं प्रपदाभ्यां प्रापद्यत" [ ऐ० आ० २ अ० १ ख० ४ ] इत्यत्र प्राणरूपक्रियाशक्त्युपाधिकस्य पादाग्रे प्रवेशोऽभिहितः । इदानीं ज्ञानशक्त्युपाधिकस्य मूर्धमध्यस्थितच्छिद्रे प्रवेशोऽभिधीयते । यथोक्तविचारोपेतः स परमेश्वर एतमेव मूर्धमध्यभागमेव कपालसंधिरूपं सीमानं स्थानविशेषं विदार्य च्छिद्रं कृत्वा तच्छिद्ररूपया द्वारा ज्ञानशक्तिसहितः सन्देहमध्ये प्राविशत् । यस्माज्ज्ञानोपाधिकस्य मूर्धमध्ये प्रवेशस्तस्मान्मूर्धनि ज्ञानेन्द्रियबाहुल्यमुपलभ्यते । क्रियाशक्त्युपाधिकस्य पादाग्रे प्रवेशात्कण्ठादधोभागे कर्मेन्द्रियबाहुल्यमुपलभ्यते ।

मूर्धगतं प्रवेशद्वारं प्रशंसति—

**सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम्, इति ।**

अक्षिश्रोत्रादिगोलकानां भृत्यादिस्थानीयैश्चक्षुरादीन्द्रियैरधिष्ठितत्वात्स्वामिनः स्वस्य प्रवेशार्थमसाधारणं किंचिद्द्वारमपेक्षितमित्यभिप्रेत्य प्रीतिपूर्वकं विदारितत्वादिकमुत्कर्षं प्रकटयितुं तस्य द्वारस्य विदृतिरिति नाम संपन्नम् । तेन द्वारेण निर्गतस्य ब्रह्मलोकप्राप्तिद्वारा मुच्यमानत्वादानन्दहेतुत्वेन तदेतद्द्वारं नान्दनमित्युच्यते ।

शरीरे प्रविष्टस्य संचारस्थानानि तेष्ववस्थाविशेषांश्च दर्शयति—

**तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति, इति ।**

---

१ क. ख. °सिद्धिग° । २ ग. °द्ववासना° । ३ क. °शोऽत्राभि° । ४ क. ख. ग. °श्वरः स ए° । ५ ग. °च्छिद्ररूपद्वा° ।

यथा महाराजस्य क्रीडार्थमुपर्यधोभावेन वर्तमानाः प्रासादस्य भूमयो निर्मीयन्त एवमस्याऽऽत्मनः शरीरमध्ये क्रीडार्थं त्रय आवसथास्त्रीणि स्थानानि निर्मितानि। त्रिषु स्थानेषु त्रयः स्वप्नास्तेनाऽऽत्मनाऽवलोक्यन्ते। अयमावसथ इत्यादिना नेत्रकण्ठहृदयाख्यानि स्थानानि हस्ताग्रेण प्रदर्श्यन्ते। तेषु हि जागरणाद्यवस्थानां निष्पत्तिः। तथा च ब्रह्मोपनिषद्याम्नायते—"नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समादिशेत्। सुषुप्तं हृदयस्थं तु" [ ब्रह्मोप० ३ ] इति। जागरितादीनां महाराजस्य प्रासादत्रये क्रीडावज्जीवक्रीडारूपत्वं कैवल्योपनिषद्याम्नायते—

"स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति।
स्वप्नेषु जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके॥
सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति।
पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः।
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम्"

[ कैव० १२ ] इति।

ननु जागरणसुषुप्तयोः स्वप्नादन्यत्वे त्रयः स्वप्ना इत्ययुक्तमिति चेन्न। स्वप्नलक्षणोपेतत्वात्। विद्यमानं वस्तुतत्त्वं तिरोधाय समुत्पन्नोऽन्यथाप्रतिभासः स्वप्न इति तल्लक्षणम्। जागरणसुषुप्तयोरपि विद्यमानस्य ब्रह्मतत्त्वस्य तिरोधानेनान्यथाभूतस्य जीवतत्त्वस्य चावभास इत्यस्ति लक्षणम्। तस्माल्लोकप्रसिद्धस्य स्वप्नस्यैकत्वेऽपि लक्षणसिद्धाः स्वप्नास्त्रयः। त्रय आवसथा इत्यनेन पितृशरीरमातृशरीरस्वशरीररूपाणि वा त्रीणि स्थानानि लक्ष्यन्ते। तथाचोपरितनाध्याये प्रपञ्चयिष्यते। संसारो द्विविधः। दैनंदिनव्यवहारो जन्मान्तरस्वीकारश्चेति। तत्र दैनंदिनव्यवहारस्य नेत्रादीनि स्थानानि जन्मान्तरव्यवहारस्य पितृमातृस्वीयशरीराणि स्थानानीति विवेकः। इतिशब्दः संसाररूपस्याध्यारोपप्रकरणस्य समाप्त्यर्थः।

अथापवादप्रकरणार्थं संक्षिप्य दर्शयति—

स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिषदिति
स एतमेव पुरुषं ब्रह्मततममपश्यत्, इति।

स परमात्मा जातो देहप्रवेशेन जन्ममरणजागरणस्वप्नसुषुप्तिभिः संसारीभूतः सन्कदाचिदीश्वरानुग्रहाद्गुरुशास्त्रप्रसादेन च भूतान्याकाशादीनि प्राणिनश्चाभिव्यैख्य-

१ घ. ङ. °भागेन। २ क. ख. °मानप्रा°। ग. °मानस्य प्रा°। ३ घ. ङ. °नि ह°। ४ क. ख. हृदिस्थं विद्यादिति। ५ घ. घ. °त्रयक्री°। ६ क. जीवो जात°। ७ घ. ङ. विवक्ष्यन्ते। ८ क. ख. °नि त्रीणि ज°। ९ क. °री कृतः।

त्सर्वतो विवेकेन ज्ञातवान् । दृश्यमानान्याकाशादीनि[1] भूतानि प्राणदेहाश्च कुत उत्पद्यन्ते केन वा रक्ष्यन्ते कस्मिन्वा प्रलीयन्त इत्येवं शास्त्रं विविच्य सर्वस्य संसारस्य मायाकल्पितत्वाद्ब्रह्मैव सर्वस्यापि वस्तुतत्त्वं तस्मादिह जगति किं वा वस्तु ब्रह्मणोऽन्यद्वावादिषद्वदिष्यामि न किंचिदपि ब्रह्मव्यतिरिक्ततया वक्तुं शक्नोमीति निश्चित्य स जीव एतमेव शरीरे प्रविष्टं[2] पुरुषं चिद्रूपं साक्षिणं ब्रह्मापश्यत् । ब्रह्मत्वेन निश्चितवान् । कीदृशं ब्रह्म ततमम् । एकस्तकारो लुप्तः । अतिशयेन ततं विस्तृतं तततमम् । दृश्यस्य सर्वस्य जगतो द्रष्टुर्जीवस्य च ब्रह्मैव तत्त्वमित्यपवादप्रकरणस्य सर्वस्य तात्पर्यार्थः ।

यथोक्तं ब्रह्मसाक्षात्कारं नामनिर्वचनेन प्रशंसति—

इदमदर्शमिती३ँ तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके चतुर्थोध्याये तृतीयः खण्डः ॥ ३ ॥ ( २३ )

## इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

शरीरे प्रविष्टः स जीवात्मा ब्रह्मात्मत्वं साक्षात्कृत्येदमदर्शमिति वाक्येन स्वकीयमपरोक्षानुभवं प्रकटयन्परितुतोष । परितोषद्योतनार्था प्लुतिः । यस्मादिदमदर्शमित्युक्तवांस्तस्मादिदं दृष्टमित्यनयैव व्युत्पत्त्या सोऽयमिदन्द्र इति नाम प्राप्तवान् । तस्य नाम्नो निर्वचनानुसारेण योग्यत्वप्रसिद्धिं द्योतयितुमिदन्द्रो ह वै नामेत्युक्तम् । न च लोके परमेश्वरमिन्द्र इत्येवं व्यवहरन्ति न त्विदन्द्रमिति शङ्कनीयम् । परमार्थतो यथोक्तरीत्येदन्द्रमेव[4] सन्तं परोक्षत्वार्थमेकमक्षरं विलोप्येन्द्र इत्येव[5] व्यवहृतत्वात् । नापि परोक्षत्ववैयर्थ्यं शङ्कनीयम् । यस्माद्देवाः पूज्याः सर्वे स्वकीयं नाम गूढं कृत्वोपाध्याया आचार्या इत्यादिके परोक्षनामन्येव प्रीतिं कुर्वन्ति । हिशब्देनास्मिन्नर्थे लोकप्रसिद्धिर्दर्शिता । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके चतुर्थोध्याये तृतीयः खण्डः ॥ ३ ॥ ( २३ )

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

---

१ क. ख. ग. 'नि प्रा' । २ ग. घ. 'ष्टं चि' । ३ ग. 'हौकत' । ४ घ. ङ. 'क्तनीत्ये' । ५ क. 'न्द्रमित्येव' ।

## अथ द्वितीयारण्यके पञ्चमोऽध्यायः।

तत्र प्रथमः खण्डः। (चतुर्विंशः)

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।
शिष्याणां बोधसिद्ध्यर्थं कृतज्ञैः कल्पितः क्रमः"।

इति पूर्वाचार्यैः कृत्स्नवेदान्तानां तात्पर्यं संगृहीतम्। तदेवात्र[1] चतुर्थाध्याये विस्पष्टमुदीरितम् "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्" [ऐ० आ० २ अ० ४ ख० १] इत्येतन्निष्प्रपञ्चब्रह्मात्मतत्त्वस्य[2] प्रतिपादकं सूत्रम्। तस्य सूत्रस्यार्थमवबोधयितुं "स ईक्षत लोकान्नु सृजै" [ऐ० आ० २ अ० ४ ख० १] इत्यारभ्य "अयमावसथः" [ऐ० आ० २ अ० ४ ख० ३] इत्यन्तेन ग्रन्थेन कृत्स्नप्रपञ्चस्याध्यारोपः प्रतिपादितः। ब्रह्माण्डस्य मध्ये य एते चतुर्दश लोका यैश्चैतांल्लोकानात्मशरीरत्वेनाभिमन्यमानो विराट्पुरुषो यानि च[3] तद्देहच्छिद्रेषूत्पन्नानि[4] वाक्चक्षुरादीन्द्रियाणि याश्च तदिन्द्रियाभिमानिन्योऽग्निवाय्वादित्यादिदेवता[5] यानि च तासां देवतानां भोगयोग्यानि गवाश्वमनुष्यादिशरीराणि यच्च तेषु शरीरेषु प्रविष्टानां देवतानामन्नं यश्च वायुनैव तदन्नस्वीकारो यदपि जीवरूपेण[6] तेषु देहेषु प्रविश्य जागरणाद्यव[7]स्थात्रयस्य[8] शरीरान्तरसंचारस्य[9] चानुभवनं सोऽयं सर्वोऽप्यद्वितीये[10] परमात्मन्यध्यारोपितः प्रपञ्चः। स चाऽऽत्मबोधोपयोग्यः[11]। एतेन हि जगदङ्कुरेण तन्मूलमात्मतत्त्वमस्तीत्यवगन्तुं शक्यम्। एतदेवाभिप्रेत्य च्छन्दोगा आमनन्ति—"अन्नेन सोम्य[12] शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य[13] शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य[14] शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः[15] सर्वाः प्रजाः सदायतनाः संप्रतिष्ठाः" [छान्दो० ६। ८। ४] इति। तदेवमध्यारोपेणाद्वितीयस्याऽऽत्म[16]तत्त्वस्यास्तित्व[17]मात्रं सिद्धम्। तस्याध्यारोपस्यापवादेन तत्त्वस्येत्थं भावोऽवगन्तुं[18] शक्यते। तस्मात्—"स जातो भूतानि" [ऐ० आ० २ अ० ४ ख० ३] इत्यारभ्य "परोक्षप्रिया इव हि देवाः" [ऐ० आ० २ अ० ४ ख० ३] इत्यन्तेन ग्रन्थेनाध्यारोपस्यापवादः संगृहीतः। तत्राध्यारोपभागे "तस्य त्रय आवसथाः" [ऐ० आ० २ अ० ४ ख० ३] इति वाक्येन शरीरान्तरसंचारोऽपि संग्रहेण प्रतिपादितः। तदेतत्पितृशरीरं मातृश-

---

१ घ. ङ. तच्चात्र। २ घ. ङ. °ब्रह्मात्मत°। ३ ख. ग. यश्च ता°। ४ घ. ङ. च देह°। ५ घ. ङ. तदभि°। ६ घ. ङ. °ण दे°। ७ घ. ङ. °गराद्य°। ८ घ. ङ. °स्य स्वश°। ९ घ. ङ. °रस्यानु°। १० क. °तीयप°। ११ घ. °योगः। ए°। १२ क. घ. ङ. सौम्य। १३ घ. ङ. सौम्य। १४ घ. ङ. सौम्य। १५ घ. ङ. °लाः सौम्ये°। १६ घ. ङ. °यमात्म°। १७ घ. ङ. °तत्त्वमा°। १८ घ. ङ. °वो वक्तुं श°।

रीरं[1] स्वशरीरमित्येतदावसथत्रयं पञ्चमाध्याये विवरिष्यते। तत्राऽऽद्यौ पितृशरीररूपमावसथं दर्शयति—

*पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः, इति।

योऽयं शरीरं[3] जिघृक्षुर्जीवात्मा सोऽयं पुरुषे पितृशरीरे प्रथमतो गर्भो भवति। न चात्र स्त्रीगर्भवदुदरवृद्ध्या सोऽभिव्यज्यते, किंतु यदेतत्पितृशरीरे सप्तमधातुरूपं रेतोऽस्ति तदेव[4] गर्भ इत्युच्यते। तस्मिन्रेतसि जनिष्यमाणस्य जीवस्य प्रविष्टत्वात्। स्वर्गाद्वा नरकाद्वा वृष्टिद्वारा भूमौ समागतो जीवो व्रीहियवाद्यन्नद्वारा पितृशरीरे प्रविशति। एतच्च पञ्चाग्निविद्यायां प्रपञ्चेनाऽऽम्नातम्। तस्मिंश्च पुरुषशरीरेऽन्नरसशोणितमांसादिक्रमेण परिणते रेतस्यवस्थितो भवति सोऽयं पुरुषे गर्भ इत्युच्यते।

तस्य गर्भस्य जन्मप्रकारं दर्शयति—

तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवाऽऽत्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म, इति।

पुरुषे[5] गर्भत्वेन व्यवस्थितं यद्रेतोऽस्ति तदेतत्तस्मिन्पुरुषशरीर आपादमस्तकं सर्वेभ्योऽवयवेभ्यः सारभूतं[6] सत्संभूतं निर्गतं भवति। तच्च[7] सर्वावयवनिर्गतं रेतोभूतं सार[8]मात्मानं स्वस्यैव रूपान्तरभूतमात्मन्येव स्वशरीर एवासौ पुरुषो बिभर्ति पोषयति। तत्पोषितं रेतोऽग्निसंपर्केण घृतमिव कामाग्निना विलीनं सद्धृदये समागत्य व्यवस्थितं भवति। तादृशं रेतो यदर्तुकालीनेन गमनेन[9] स्त्रिया योनौ गर्भाशये सिञ्चति, अथ तदानीमयं पुरुष एनज्जीवान्तराविष्टं रेतोरूपं शरीरं जनयति। तदेतद्रेतोनिःसरणरूपमस्य रेतस्यवस्थितस्य संसारिणो जीवस्य प्रथमं जन्मेत्युच्यते। "तस्य त्रय आवसथाः" इत्युक्तानां मध्ये प्रथमादावसथात्पितृशरीररूपात्संपन्नमिति कृत्वा प्रथमं जन्म भवति।

ननु स्त्रीशरीरे प्रविष्टं परकीयं रेतः स्त्रिया उपद्रवकारि स्याच्छरीरलग्नबाणादिवदित्याशङ्कयाऽऽह—

तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति, इति।

---

* मूलपुस्तकेषु, घ. ङ. संज्ञितभाष्यपुस्तकस्थमूले चैतस्मात्प्राक्—" अपक्रामन्तु गर्भिण्यः" इत्यधिको ग्रन्थो वर्तते।

---

१ ख. ग. °रं स्व शः°। २ घ. ङ. °थमेऽध्या°। ३ क. ख. ग. रं विजि°। ४ घ. ङ. °देतद्गर्भ। ५ क. ख. ग. रुषग°। ६ ग. °तं सत्सं°। ७ घ. ङ. तत्र। ८ घ. °तोरूपं सा°। ९ घ. ङ. °न स्त्रीयो°।

स्त्रीयोनौ प्रविष्टं तत्पुरुषरेतस्तस्याः स्त्रिया आत्मभूयं स्वशरीरभावं गच्छति। यथा स्वकीयमङ्गं स्तनहस्तादिकं न स्वशरीरात्पृथग्भूतं तद्वत्। तस्मात्स्वशरीरत्वेनैकीभावात्करणादेनां स्त्रियं न हिनस्ति, उदरलग्नबाणवद्धिंसां न करोति।

तद्गर्भद्वारेण स्त्रीपुरुषयोः परस्परमुपकार्योपकारकभावं दर्शयति—

**साऽस्यैतमात्मानमत्र गतं भावयति सा भावयित्री भावयितव्या भवति, इति ।**

**सा** गर्भधारिणी स्त्री, अत्र गतं स्वशरीरे प्रविष्टम**स्य** पुरुषस्य रेतःसेक्तुरे**तमात्मानं** पुरुषरूपं **भावयति** परिपालयति। विरुद्धाशनादिपरित्यागोऽनुकूलान्नाद्युपयोगश्च परिपालनम्। यस्मात्स्त्री गर्भपरिपालनेन **भावयित्री** पुरुषस्यैव पालयित्री तस्मात्कारणात्तेन पुरुषेण **सा** स्त्री **भावयितव्या**ऽभीष्टान्नपानवस्त्रादिप्रदानेन पालयितव्या भवति।

स्त्रीपुरुषयोरुभयोरपि पुत्रं प्रत्युपकारकत्वं दर्शयति—

**तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति, इति ।**

**तं** पुरुषरूपं **गर्भं** मातृरूपा **स्त्री** महान्तं प्रयासं सोढ्वा नव दश वा मासान्स्वोदरे धारयित्वा पोषयति। **स** च पिता**ऽग्र एव** प्रसवात्प्रागेव निष्पन्नं **कुमारं जन्मनोऽग्रे** प्रसवादूर्ध्व**मधिभावयति**। अधिकत्वेन शास्त्रीयजातकर्मादिना संस्करोति।

कुमारसंस्कारेण पितुरुपयोगं दर्शयति—

**स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयति, इति ।**

पुत्रसंस्कार इति यदस्ति तेन पिता स्वस्यैव संस्कारं करोति। पुत्रस्य स्वदेहरूपत्वात्। तथा चान्यत्र श्रूयते—"पतिर्जायां प्रविशति गर्भो भूत्वा समातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते" [ बृह० ] इति "आत्मा वै पुत्र नामासि" [ कौषी० ११ ] इति च।

ननु पुरुषस्योपनयनादिना स्वकीयः संस्कारः पूर्वमेव संपन्नः किमनेन पुत्रसंस्कारेण पुत्रोत्पादनेन चेत्यत आह—

**एषां लोकानां संतत्या एवं संतता हीमे लोकाः, इति ।**

पुत्रपौत्रप्रपौत्रादय इमे जना लोकास्तेषां **लोकाना**मविच्छेदाय संस्कृतपुत्रोत्पाद-

---

१ घ. छ. °ङ्गं ह° । २ घ. ङ. न श° । ३ क. ख. ग. °भावकर° । ४ घ. ङ. °त्यागेनानु° । ५ घ. ङ. °रत्वं । ६ घ. ङ. पुत्ररू° । ७ ग. स एव पि° । ८ घ. ङ. संस्कारं करो° ।

नम्। अने[1]न पित्रा स्वोत्पादिते पुत्रे संस्कृते सति तथैव पुत्रोऽप्यन्यं पुत्रमुत्पाद्य संस्करोति सोऽप्यन्यं पुत्रमित्ये[2]वेमिमे लोका अविच्छिन्ना भवन्ति। अन्यथा विच्छिद्येरन्।

मातृशरीरान्निर्गमनस्य पूर्वोक्तजन्मापेक्षया द्वितीयत्वं दर्शयति—

**तदस्य द्वितीयं जन्म,** इति।

जनकस्य पुत्रप्रयुक्तमुपयोगं दर्शयति—

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते,** इति।

**अस्य** पितुर्द्वावात्मानौ देहौ, तयोर्मध्येऽ**यमात्मा** पुत्ररूपो देहः **पुण्येभ्यः कर्मभ्यः** शास्त्रोक्तकर्मनिष्पादनार्थं **प्रतिधीयते** स्वस्य प्रतिनिधित्वेन गृ[3]हे स्थाप्यते।

ननु किमनेन प्र[4]तिनिधिना स्वयमेव कुतो न करोतीत्यत आह—

**अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति,** इति।

**अस्य** पितुरि**तर आत्मा** स्थविरो देहः **कृतकृत्यः** कृतान्येतज्जन्मप्रयुक्तानि कृत्यानि सर्वाणि येनासौ कृतकृत्यः। लौकिकानां कुटुम्बपोषणादीनां शास्त्रीयाणामग्निहोत्रादीनां च निष्पादितत्वात्कृतकृत्यत्वम्। **वयोगतो** वयसा पूर्वकर्मसंपादितेनाऽऽयुषा हीनः **प्रैति** म्रियते। अतः पुत्रदेहेनैव पुण्यं कर्तव्यं न तु मृतेन पितृदेहेन कर्तुं शक्यम्।

पूर्वोक्तजन्मद्वयमपेक्ष्य जन्मान्तरं दर्शयति—

**स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म,** इ[5]ति।

**स** वृ[6]द्धः पिते**तो**ऽस्माज्जरठदेहात्**प्रयन्नेव** निर्गच्छन्नेव स्वर्गे नरके मनुष्यलोके वा स्वकर्मानुसारेण **पुनर्जायते** न त्वस्माद्देहान्निष्क्रान्तस्य जन्मान्तराय कालव्यवधानमस्ति। अस्मिन्नेव शरीरे स्थित्वा मनसा देहान्तरं स्वीकृत्य पश्चादमुं देहं परित्यजति। यथा जलूका मुखेन तृणान्तरमवष्टभ्य ततः पृष्ठभागमुपसंहरति तद्वत्। तथाच वाजसनेयिनः समामनन्ति—"तद्यथा तृणजलौ[7]युका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसंहरति" [बृह० ४। ४। ३] इति। तद्यथोक्तं पुनर्ज[8]ननरूपमस्य संसारिण आत्मनस्तृतीयं जन्मेत्युच्यते। यद्यपि पूर्वोक्तं जन्मद्वयं पुत्रदेहस्येदं तु देहान्तरस्य तथाऽपि पितृपुत्रोपाध्योरेव भिन्नत्वादुपाध्युपलक्षितस्याऽऽत्मन एकत्वमभिप्रेत्यैकस्य जन्मत्रयमित्युपचर्यते। यद्वा पितुः सकाशाद्रेतोरूपेण मातुः सकाशात्कुमाररूपेण च पुत्रे यज्जन्मद्वयमुदाहृतं तेनैव न्यायेन पितुरपि स्वकी[9]यमातृ(ता)पितृसकाशाज्जन्मद्वयमर्था-

१ क. ख. ग. °न स्वो°। २ क. ख. ग. °वमेवेमे। ३ घ. ङ. गृहेऽवस्था°। ४ घ. ङ. प्रतिधानेन। ५ घ. ङ. °ति। सं°। ६ क. ख. कृद्धः। ७ ग. °लायुका। ८ ङ. °र्जन्मरू°। ९ क. ख. ग. °यपितृमातृस°।

दुक्तमेवेत्यभिप्रेत्य तदपेक्षया पितुरिदं तृतीयं जन्म पुत्रस्य तु जन्मद्वयं साक्षाद्दृष्टं पितृदृष्टान्तेन तु मरणादूर्ध्वं तृतीयं जन्म भविष्यति । एवं सर्वस्यापि जन्मत्रयं पुनः पुनरावर्तते । अनेन जन्मत्रयोपवर्णनेन संसाराद्विरक्तिरुपजायते । न हि मातापितृमलद्वयरूपदेहस्य निरन्तरधारणादन्यदधिकं जुगुप्सितं वैराग्यकारणमुदाहर्तुं शक्यम् ।

अत एव विष्णुपुराणे पठ्यते—

"स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
विरागकारणं तस्य किमन्यदुपदिश्यते" इति ॥

तस्यैतस्य जुगुप्सितस्य संसारस्य ज्ञानमन्तरेण विनाशाभावं तत्त्वज्ञानेन निवृत्तिं च द्योतयितुं मन्त्रमुदाहरति—

तदुक्तमृषिणा, इति ।

"पुरुषे ह वै" [ ऐ० आ० २ अ० ९ ख० १ ] इत्यारभ्य "तृतीयं जन्म" इत्यन्तेन ग्रन्थेन संसारस्य यत्कष्टत्वमुपवर्णितं यच्च संसारनिवर्तकं तत्त्वज्ञानमुत्तरत्र विवक्षितं तदुभयमप्यर्थजातं केनचिन्मन्त्रेणाभिहितम् ।

तमेतं मन्त्रं पठति—

**गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।**
**शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति, इति ।**

अहं वामदेवाख्यो मुनिर्गर्भे नु मातुर्गर्भ एवावस्थितः सन्नेषामग्निवाय्वादित्यादीनां देवानां विश्वा जनिमानि सर्वाण्यपि जन्मान्यन्ववेदमनुक्रमेण विदितवानस्मि । "मुखाद्वाग्वाचोऽग्निः" [ ऐ० आ० २ अ० ४ ख० १ ] इत्यादिश्रुतिप्रतिपादितं परमात्मना संपादितं देवानां जन्म ज्ञातवानस्मि । औपनिषदमात्मज्ञानं मम संपन्नमित्यर्थः । अथ एतस्मादात्मज्ञानोदयादधस्तान्मां वामदेवमायसीर्लोहनिर्मितशृङ्खलासमानाः शतं पुरः शतसंख्याकानि शरीराण्यरक्षन् । यथा कारागृहेऽवस्थापिततस्करं प्रबलं बह्व्यः शृङ्खलाः पलायनाद्रक्षन्ति एवं शतसंख्योपलक्षितान्यनन्तानि शरीराणि यथाऽहं मुक्तो न भवामि तथैवारक्षन् । इदानीं गुरुशास्त्रप्रसादाल्लब्धतत्त्वविद्यायुक्तोऽविद्यामयात्संसाराच्छ्येन इव जालं भित्त्वा जवसा निरदीयं त्वरया निर्गतोऽस्मि । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

---

गर्भे नु सन्नन्वेषाम्०—ऋ० सं० म० ४ सू० २७ ऋ० १ ।

---

१ क. ख. ग. 'न्तरं धा' । २ घ. ङ. यत्कृष्ट' । ३ ङ. 'मर्थं' । ४ क. ख. एव स्थि' । ५ घ. ङ. 'य्वादी' । ६ ध. ङ. 'नां वि' ।

अस्य मन्त्रस्य तात्पर्यं दर्शयति—

गर्भ एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्त्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् , *इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥ ( २४ )

## इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यके पञ्चमोऽध्यायः ॥ ५ ॥

अहमिति मन्त्रे योऽभिहितः स वामदेवो मातृगर्भ एव शयानः सन्नेतत्पूर्वोक्तमन्त्रार्थजातमेवमुवाच । स वामदेव एवं मन्त्रोक्तप्रकारेणाऽऽत्मतत्त्वं विद्वान्प्रारब्धकर्मणि क्षीणे सत्यस्माच्छरीरभेदाद्देहविनाशादूर्ध्वमु(र्ध्व उ)त्तरकालेऽवस्थितः सर्वस्मात्संसारबन्धादुत्क्रम्यामुष्मिन्निन्द्रियागोचरे स्वर्गे सुष्ठु तत्त्वज्ञानेनार्जिते लोके स्वप्रकाशकत्वेनावलोक्यमाने स्वरूपे सर्वान्कामांस्तैत्तिरीयके प्रोक्तान्सार्वभौमादिहिरण्यगर्भपर्यन्तगतान्सर्वानानन्दानाप्त्वा परमानन्दस्वरूपब्रह्मात्मत्वेन प्राप्यामृतो मरणरहितः समभवत् । यद्यपि गर्भे गुरुशास्त्रोपदेशो नास्ति तथाऽपि जन्मान्तरोपदेशस्य केनचित्प्रबलकर्मणा तदानीं प्रतिबद्धस्य गर्भे प्रतिबन्धक्षयमपेक्ष्य ज्ञानोत्पादकत्वं संभवति । तथा च भगवता व्यासेन सूत्रितम्—"ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" [ ब्र० सू० अ० ३ पा० ४ सू० ५१ अधि० १६ ] इति । प्रस्तुतप्रतिबन्धाभावे सति यस्मिञ्जन्मन्युपदेशस्तस्मिन्नेव जन्मनि ज्ञानं भवति, अन्यथा जन्मान्तरे । कुतः । वामदेवे तद्दर्शनादिति सूत्रार्थः । यद्यपि मुक्तौ कामा विषयानन्दा न सन्ति तथाऽपि विषयानन्दानां ब्रह्मानन्दलेशत्वेन तस्मिन्नन्तर्भावाद्ब्रह्मानन्दप्राप्त्या सर्वकामप्राप्तिरुपचर्यते । तत्त्वज्ञानिनो वर्तमानदेहपातादूर्ध्वं देहान्तरसंबन्धस्याभावेन देहप्राणवियोगरूपस्य मरणस्याप्रसक्तत्वादमृतत्वं द्रष्टव्यम् । समभवदित्यभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥ ( २४ )

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यककाण्डभाष्ये द्वितीयारण्यके पञ्चमोऽध्यायः ॥ ५ ॥

---

* एतदग्रे "यथास्थानं तु गर्भिण्यः" इति ग्रन्थः सकलमूलपुस्तकेषु, घ. ङ. संज्ञितभाष्यपुस्तकस्थमूले चाधिकः ।

---

१ घ. ङ. 'रभेदादु' । २ घ. ङ. 'यप्रो' । ३ घ ङ. 'र्यन्तानाग' । ४ क. ख. 'बन्धस्य । ५ घ. ङ. 'रुच्यते । ६ घ. ङ. 'निनां व' । ७ क. ख. ग. 'न्तरे सं' । ८ घ. ङ. 'गस्य ।

# अथ द्वितीयारण्यके षष्ठोऽध्यायः ।

तत्र प्रथमः खण्डः । ( पञ्चविंशः )

**अध्यारोपप्रकरणे**—"तस्य त्रय आवसथाः" [ऐ० आ० २ अ० ४ ख० ३] इतिवाक्येन पितृमातृस्वशरीररूपं संसरणार्थं स्थानत्रयं यदुक्तं तत्पुनः **पञ्चमाध्याये** वैराग्योत्पत्त्यर्थं "पुरुषे ह वै" [ऐ० आ० २ अ० ५ ख० १] इत्यादिना प्रपञ्चितम् । "स जातो भूतान्यभिव्यैख्यत्" [ऐ० आ० २ अ० ४ ख० ३] इत्यादिनाऽपवादप्रकरणेन यत्तत्त्वज्ञानं संगृहीतं यच्च वामदेवोदाहरणेन ज्ञानफलं संक्षिप्य दर्शितं तदुभयं विशदी कर्तुं **षष्ठाध्याय** आरभ्यते । तत्र "आत्मा वै" [ऐ० आ० २ अ० ४ ख० १] इदमित्याद्यध्यायेन सामान्यतस्तत्त्वमवगत्य "पुरुषे ह वै" [ऐ० आ० २ अ० ५ ख० १] इत्यध्यायोक्तजन्मक्लेशविचारेण परं वैराग्यं प्राप्तानां जिज्ञासूनां विचारं दर्शयति—

**कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा, इति ।**

"आत्मा वा इदमेक एवाग्र आसीत्" [ऐ० आ० २ अ० ४ ख० १] इत्यादि श्रुतौ कश्चिन्निरुपाधिक आत्मा श्रुतः । तथा "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" [ऐ० आ० २ अ० ४ ख० ३] इति श्रुतौ कश्चित्सोपाधिक आत्मा श्रुतः । **वयं** तु प्रतिदिनं प्रतिक्षणमात्मेति **यमुपास्महे** स **कः** सोपाधिको निरुपाधिको वेत्यर्थः । उपासनं नाम नैरन्तर्येण तात्पर्यपुरःसरो व्यवहारः । अहं गच्छाम्यहमागच्छामि ममायं देहो ममेदं गृहमिति निरन्तरमादरेणाऽऽत्मव्यवहारो लोके दृश्यते, सोऽयमत्रोपासनत्वेनोपचर्यते । तथा स आत्मा श्रुतौ "आत्मा वै" [ऐ० आ० २ अ० ४ ख० १] इत्यादिना श्रुतः **कतरः**, सोपाधिकनिरुपाधिकयोर्मध्ये कतरः कोऽसावित्यर्थः ।

ननु कतरः स आत्मेत्ययं विचारोऽस्तु श्रुत्यैकगम्यस्य तस्य विचारमन्तरेणानिश्चयात्कोऽयमात्मेत्ययं तु विचारो न युक्तस्तस्याहंप्रत्ययगम्यत्वेन प्रसिद्धत्वादित्याशङ्क्य विचारहेतुमनेककोट्यात्मकं संशयं दर्शयति—

**येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति, इति ।**

---

१ क. ख. ग. -इतिश्रु॰ ।

यद्यप्यहंप्रत्ययगम्यश्चैतन्यरूप आत्मेति सामान्याकारेण प्रसिद्धिरस्ति तथाऽपि तद्विशेषे संशयो विद्यते । बाह्यान्तःकरणेषु सर्वेष्वपि चैतन्यं पृथक्[1]पृथगभिव्यज्यते यथा जलपात्रेषु[2] प्रत्येकं सूर्यादिप्रतिबिम्बस्तद्वत् । तथा सति चक्षुरिन्द्रियाभिव्यक्तचैतन्येन देहेन्द्रिय[3]संघाताभिमानी लौकिकः पुरुषो नीलपीतादिरूपं पश्यति[4] । अतो येन चाक्षुषचैतन्येन पश्यति तच्चैतन्यं किमात्मेत्येका कोटिः । तथा येन श्रोत्राभिव्यक्तचैतन्येन शब्दं शृणोति तत्किमात्मेति द्वितीया कोटिः । एवं घ्राणवाग्जिह्वादीन्द्रियाभिव्यक्तचैतन्यविशेषाणामात्मतत्त्वरूपं संदेहकोटित्वं द्रष्टव्यम् । चैतन्यस्यैव रूपरसादिज्ञापकत्वं **कठवल्ली**ष्वाम्नायते—

"येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति" [ काठ० ४ । ३ ] इति ॥

श्रोत्रादीन्द्रियद्वारा विषयग्राहकत्वमभिप्रेत्य **तलवकारै**रप्याम्नायते—" श्रोत्रस्य श्रोत्रं मनसो मनो वाचो ह वाचꣳ स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः " [ केनो० २ ] इति । **वाजसनेयिनो**ऽपि तत्तदिन्द्रियसाक्षिचैतन्येन तत्तदिन्द्रियद्वारकविषयग्रहणमभिप्रेत्य तत्तदिन्द्रियनाम्ना व्यवहारमामनन्ति—" प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो यन्मनो विदुः " [ बृह० ४ । ४ । १८ ] इति । बाह्येन्द्रियाभिव्यक्तचैतन्येष्वात्मतत्त्वसंशयं दर्शयित्वाऽन्तःकरणद्वयतद्वृत्तिविशेषाभिव्यक्तचैतन्येष्वात्मतत्त्वसंशयमभिप्रेत्य यदेतद्धृदयमित्यादिना तत्तदुपाधिस्वरूपमुपन्यस्यते— **हृदयं** बुद्धिः, सा चाऽऽत्मनि कर्तृत्वादिधर्मारोपसाधनत्वादन्तःकरणमित्युच्यते । तस्य च बुद्धिविशिष्टस्य कर्तुरात्मनो रूपादिविषयसंकल्पविकल्पादिसाधनं **मन** इत्युच्यते । बुद्धिमनसोर्द्वयोरन्तःकरणविशेषयोः समुच्चयार्थश्चकारः । एतदेवान्तःकरणद्वैविध्यमभिप्रेत्य **तैत्तिरीयके**—" तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः " [ तैत्ति० २ । ४ । १ ] इति कोशद्वयमुपन्यस्तम् । तस्य च मनसो वृत्तिविशेषा **एतत्संज्ञान**मित्यादिना प्रपञ्च्यन्ते । यन्मनोऽस्त्येतदेव वृत्तिरूपेण परिणतं सत्संज्ञानमित्युच्यते । सम्यगिदं वस्त्विति ज्ञप्तिः **संज्ञानम्** । **आज्ञान**माज्ञप्तिरीश्वरभावः । **विज्ञान**मिदमस्माद्विशिष्टमित्येवमादिविवेकः । **प्रज्ञानं** ग्रन्थार्थादावुन्मेषः । **मेधा** ग्रन्थतदर्थधारणा । **दृष्टि**श्चक्षुर्द्वारा रूपोपलब्धिहेतुर्मनोवृत्तिः । **धृति**र्धैर्यं प्राप्तायामप्यापदि तद्वि[6]षयगणनाराहित्यम् । **मति**र्मननं राजकार्याद्यालोचनम्, **मनीषा** तत्र स्वातन्त्र्यम् । **जूति**र्जवः प्राप्तकार्येषु मनसो[7] व्यग्रता । यद्वा जूतिर्मनसो

---

१ घ. ङ. °थग्व्यज्य° । २ घ. ङ. °षु सू° । ३ घ. ङ. °न्द्रियादिसं° । ४ घ. ङ. °ति । ये° । ५ घ. ङ. तत्तद्विशेषग° । ६ ख. °द्विशेषग° । ७ ग. °नसोऽव्य° । घ. ङ. °नसोऽप्येकाग्र° ।

रोगादिजनितदुःखित्वम् [1] । स्मृतिरनुभूतार्थवस्तुस्मरणम् । संकल्पोऽसमीचीनेऽपि वस्तुनि सम्यक्त्वेन कल्पनम् । क्रतुरवश्यं करिष्यामीत्यध्यवसायः । असुः प्राणादिजीवनक्रियानिमित्ता वृत्तिः । कामोऽसंनिहितविषयाकाङ्क्षा । वशः स्त्रीव्यतिकराद्यभिलाषः [2] [3] * । इतिशब्दः प्रदर्शनार्थः । इत्येवमाद्या अन्येऽपि सात्त्विकराजसतामसवृत्तिभेदा बहवो द्रष्टव्याः [4] । अत्र सर्वत्र किमेतद्वृत्त्युपहितं चैतन्यमात्मेत्येवं संशयकोटयो योजनीयाः ।

इत्थं संशयमुपन्यस्य निर्णयं दर्शयति—

**सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति,** इति ।

" येन वा पश्यति " [ ऐ० आ० २ अ० ६ ख० १ ] इत्यादिना " क्रतुरसुः कामो वशः " इत्यन्तेन ग्रन्थेन यान्युपन्यस्तान्येतानि [5] सर्वाण्यपि [6] तत्तद्वृत्त्युपाधिद्वारोपलक्षितस्य प्रज्ञानस्य शुद्धचैतन्यस्य नामधेयानि संपद्यन्ते । प्रकृष्टं ज्ञानं प्रज्ञानम् । चैतन्यं हि स्वतो निर्मलत्वात्प्रकृष्टमेव । अथमोपाधिसंपर्कवशादपकर्षः प्रतीयते । यदा तूपाधिविशिष्टत्वं परित्यज्य तत्तदुपाधिभिरुपलक्षितं शाखाचन्द्रन्यायेन विविच्यते तदानीमुपाधिकृतस्यापकर्षस्याभावात्प्रकर्ष एव परिशिष्यते । तच्च [7] प्रकृष्टं चैतन्यं सर्वेष्वप्युक्तोपाधिष्वनुगतमिति [8] कृत्वा तस्यैव मुख्यमात्मत्वमिति निर्णयः । उपाधिविशिष्टस्य न मुख्यमात्मत्वं शुद्धचैतन्यस्यैव मुख्यात्मत्वमित्ययमेव विवेको बृहदारण्यके—" स एष इह प्रविष्टः " [ बृह० १–४–७ ] इत्यादिना प्रविष्टं जीवात्मानं प्रकृत्यैवमाम्नायते—" तं न पश्यन्त्यकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव " [ बृह० १–४–७ ] इति । अयमर्थः—देहे नखाग्रपर्यन्तं प्रविष्टं ज्ञानक्रियाशक्त्युपाधिकं तमात्मानं विवेकिनः पुरुषाः स्वात्मतया न पश्यन्ति [10] । हि यस्मात्स आत्मोपाधिविशिष्टः कृत्स्नो न भवति । तस्मान्न मुख्यात्मत्वम् । अकृत्स्नत्वमेव कुत इति चेत्तदुच्यते । प्राणन्नेव [11] वदनेन श्वासं कुर्वन्नेव प्राणोपाधिविशिष्टतया प्राणनामको भवति, न चासौ वागाद्युपाधिविशिष्टेष्वनुगच्छति । एवं वागादिष्वप्येकैकोपाधिना विशिष्ट इतरत्र [12] नानुगच्छति । अभिवदनकाल एव वागुपाधिकः, रूपदर्शनकाल एव चक्षुरुपाधिकः , एवमितरत्रापि । कथं तर्ह्यात्मनः कृत्स्नत्वमित्याकाङ्क्षायां प्राणवागाद्युपाधि-

---

* व्यतिकरः संबन्धः ।

---

१ क. 'खिता । स्मृ' । २ घ. ङ. कामः सं' । ३ ग. घ. ङ. 'व्यक्ताकारा' । ४ घ. ङ. 'वृत्तयो विचक्षणैर्द्रष्ट' । ५ घ. ङ. 'तद्धृदयपिहि' । ६ घ. ङ. 'स्तानि तान्येव स' । ७ क. ख. तत्र प्र' । ८ घ. ङ. 'प्युपाधि' । ९ घ. ङ. प्रत्येव' । १० क. घ. ङ. 'न्ति । य' । ११ क. ख. 'व श्वा' । १२ घ. ङ. नाभिग' ।

वैशिष्ट्यस्य परित्यागे सति कृत्स्नत्वमित्ययमर्थो बृहदारण्यक एवाऽऽम्नातः—"आत्मेत्येवोपासीतात्र ह्येते[3] सर्व एकं भवन्ति" [ बृह० १ । ४ । ७ ] इति । ये वागाद्युपाधिषु चैतन्यविशेषास्ते सर्वेऽपि निरुपाधिक आत्मन्येवान्तर्भवन्ति । यथा जलपात्रगताः सूर्याः सर्वेऽपि तत्कल्पनाधिष्ठानभूते मुख्ये सूर्येऽन्तर्भवन्ति तद्वत् ।

तदेवं कोऽयमात्मेत्येतस्मिंस्त्वंपदार्थविचारे निरुपाधिकं साक्षिचैतन्यं प्रज्ञानशब्दाभिधेयमात्मेति निर्णयोऽभिहितः । अथ कतरः स आत्मेत्येतस्मिंस्तत्पदार्थविचारे निर्णयं दर्शयति—

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिजानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रम्,** इति ।

ब्रह्मादिस्थावरान्तं यज्जगदस्ति तत्सर्वं **प्रज्ञानेत्रम्** । निरुपाधिकत्वेन प्रकृष्टा ज्ञप्तिः प्रज्ञा । नीयते सर्वं जगदनेनेति सृष्टिस्थितिप्रलयव्यवहाराणां मूलकारणं नेत्रम् प्रज्ञैव नेत्रं यस्य जगतस्तत्प्रज्ञानेत्रम् । शेषजगतो मूलकारणभूतं यच्चैतन्यं तत् कतरः स आत्मेत्येतस्मिंस्तत्पदार्थविचारे मुख्यात्मत्वेन निर्णेतव्यमिति तात्पर्यार्थः **एष ब्रह्मेत्यनेन** पुंलिङ्गेन ब्रह्मशब्देन "हिरण्यगर्भः समवर्तताग्रे" [ ऋ० सं० म १० सू० १२१ ऋ० १ ] इत्यादिशास्त्रप्रसिद्धः प्रथमशरीरी विवक्षितः । तस्य शास्त्रप्रसिद्धिं द्योतयितुमेतच्छब्दः । **इन्द्रो** देवराजः । **प्रजापतिः** पूर्वोक्तेन्द्रियतदभिमानिदेवतात्मको विराड्देहः । **सर्वे देवा** अग्निवाय्वादयः । **पृथिव्यादीनि पञ्च** महाभूतानि प्रसिद्धानि । **इमानि** पञ्च महाभूतानीत्येतस्य पृथिवीत्यारभ्येत्येतानीत्यन्तं विवरणम् । **इमानि** चान्यानि क्षुद्रैरकल्पैर्मशकपिपीलिकादिदेहैर्मिश्राणि । इवशब्दोऽनर्थकः । **बीजानि** कारणानि । मनुष्यादिपिपीलिकान्ताः सर्वे देहाः स्वयं पञ्चभूतकार्यभूताः सन्तः सजातीयदेहान्तरहेतुत्वेन बीजशब्दाभिधेयाः । तेषां बीजानां नानाजातीयत्वमितराणि **चेतराणीत्यनेन** प्रतिज्ञायते । परस्परविलक्षणबहुभेदयुक्तानीत्यर्थः । अण्डजानीत्यादि प्रतिज्ञातमेव नानात्वं प्रपञ्च्यते । पक्षिसर्पादीन्यण्डजानि[4] । **जारुजानि** जरायुजानि मनुष्यगवादीनि । क्रिमिदंशादीनि **स्वेदजानि** । तरुगुल्मादीन्युद्भिजानि । यथोक्तेष्वेव जरायुजानामश्वा **गावः पुरुषा हस्तिन** इत्यु-

---

१ घ. ङ. °ष्ट्यप°। २ क ग. एवमाम्ना°। ३ क. ह्येके स°। ग. ह्येतत्सर्वं। ४ घ. ङ. °नि। ज°।

दाहृत्य प्रदर्शनम् । उक्तानामनुक्तानां च संग्रहोपसंग्रहार्थं यत्किंचेदं प्राणीत्यादिवाक्यम् ।

यदेतज्जगदुत्पत्तिस्थितिलयकारणत्वं चैतन्यस्य प्रज्ञानेत्रपदेन संगृह्योक्तं तदेव विवृणोति—

**प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा, इति ।**

**प्रज्ञाने** निरुपाधिकचैतन्ये पूर्वोक्तं सर्वं जगत्**प्रतिष्ठितं** रज्ज्वां सर्पवदारोपितम् । अनेनोत्पत्तिहेतुत्वमुक्तम् । **लोकः** सर्वं प्राणिसमूहः **प्रज्ञानेत्रः** । प्रज्ञा चैतन्यमेव नेत्रं व्यवहारकारणं यस्यासौ प्रज्ञानेत्रः । अनेन स्थितिहेतुत्वमुक्तम् । **प्रज्ञा** चैतन्यं **प्रतिष्ठा** लयस्थानम् । प्रतितिष्ठति विलीयतेऽत्रेति व्युत्पत्तेः । अनेन संहारहेतुत्वमुक्तम् । एतावता शाखान्तरप्रसिद्धं जगज्जन्मस्थितिलयकारणत्वाख्यं ब्रह्मणस्तटस्थलक्षणमुक्तं भवति । एवं तु लक्षणं तैत्तिरीया विस्पष्टमामनन्ति—"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म" [तै० ३ । १ । १ ] इति ।

तदेवं विचारद्वयेन तत्त्वंपदार्थौ शोधितौ । अथ महावाक्येन तयोरैक्यं दर्शयति—

**प्रज्ञानं ब्रह्म, इति ।**

"सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति" [ ऐ० आ० २ अ० ६ ख० १ ] इतिवाक्येन देहेन्द्रियादिसाक्षिरूपं यत्**प्रज्ञानं** त्वंपदार्थरूपं निर्णीतं तदेवैष ब्रह्मेत्यादिवाक्येन जगत्कारणतया निर्णीतं परं **ब्रह्म** । न चानयोरीषदपि भेदोऽस्ति । अहंप्रत्ययगम्यत्वाकारेण यदा विवक्ष्यते तदा जीव इत्युच्यते । यदा तु शास्त्रप्रतिपाद्यत्वाकारो विवक्षितस्तदानीं ब्रह्मेत्यभिधीयते । अतो व्यवहारभेदमात्रं न तु तत्त्वतो भेदोऽस्ति । न चैवं सति पुनरुक्तिप्रसङ्गः । अब्रह्मत्वपरोक्षत्वयोर्व्यावर्त्ययोर्भेदेन पदद्वयोपयोगात् ।

एतच्च **वाक्यवृत्तौ** विस्पष्टमभिहितम्—

"प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदाभवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्त्येत तदैव हि ॥

---

१ ग. संक्षेपेण संहारार्थे य° । २ घ. ङ. °णत्वेन चेतनस्य । ३ घ. ङ. सर्वज° । ४ घ. ङ. सर्पादिव° । ५ घ. ङ. °नेत्रे व्य° । ६ घ. ङ. °णत्वमु° । ७ क. °नं तत्त्वंप° । ८ घ. ङ. °षद्भेदो° ।

तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते'' इति ॥

इत्थं चतुर्थाध्याये—"स जातो भूतान्यभिव्यैख्यत्" [ ऐ० आ० २ अ० ४ ख० ३ ] इत्यादिनाऽपवादप्रकरणेन संगृहीतमात्मतत्त्वमस्मिन्नध्याये तत्त्वंपदार्थविचारमुखेन(ण) प्रपञ्चितम् । अथ तत्त्वज्ञानफलं दर्शयति—

**स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्त्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत्, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके षष्ठाध्याये प्रथमः खण्डः ॥ १ ॥ ( २९ )**

**इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यके षष्ठोऽध्यायः ॥ ६ ॥**

यः पुमान् "प्रज्ञानं ब्रह्म" इत्येवं जानाति स पुमानेतेन प्रज्ञेनाऽऽत्मना चैतन्यस्वरूपेण स्वयमाविर्भवति[2] । तदूर्ध्वं विदेहमुक्तिं प्रतिपद्यते । तन्मुक्तिप्रतिपादकमस्माल्लोकादित्यादिवाक्यं पूर्वस्मिन्पञ्चमाध्याये व्याख्यातम् । तस्य वाक्यस्य पुनरप्यत्रोक्तिर्विद्योपसंहारार्था । समभवदित्यभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके षष्ठाध्याये प्रथमः खण्डः ॥ १ ॥ ( २९ )

**इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यकभाष्ये द्वितीयारण्यके षष्ठोऽध्यायः ॥ ६ ॥**

---

## अथ द्वितीयारण्यके सप्तमोऽध्यायः ।

तत्र प्रथमः खण्डः । ( षड्विंशः )

---

षष्ठे तत्त्वविद्यां परिसमाप्य सप्तमे शान्तिकरं मन्त्रं पठति—

**वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्म एधि वेदस्य म आणी स्थः श्रुतं मे मा प्रहासीरनेनाधीते-**

---

१ ग. ङ. °वशिष्यते" । २ घ. ङ. °ति । अत ऊर्ध्वं ।

नाहोरात्रान्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम्, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे द्वितीयारण्यके सप्तमाध्याये प्रथमः खण्डः ॥ १ ॥ ( २६ )

## इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यके सप्तमोऽध्यायः ॥ ७ ॥

## इति बह्वृचब्राह्मणारण्यककाण्डे द्वितीयारण्यकं समाप्तम् ॥ २ ॥

यथोक्ततत्त्वविद्याप्रतिपादकग्रन्थपाठे प्रवृत्ता मदीया **वाक्सर्वदा मनसि प्रतिष्ठिता** । मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठति । **मनश्च मदीयवाचि प्रतिष्ठितम्** । यद्यद्विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यते । एवमन्योन्यानुगृहीते वाङ्मनसे विद्यार्थं ग्रन्थं साकल्येनावधारयितुं शक्नुतः । मनसः सावधानत्वाभावे वागिन्द्रियं सुप्तोन्मत्तप्रलापादिवद्यत्किंचिदसंगतं ब्रूयात्[1] । तथा च वाचः पाटवाभावे सति गद्गदरूपया वाचा[3] विवक्षितं सर्वं यथावन्नोच्चार्यते । अतस्तयोरन्योन्यानुकूल्यमास्त्वित्येवं प्रार्थ्यते । **आविः**शब्देन स्वप्रकाशं ब्रह्मचैतन्यमुच्यते । प्रज्ञानशब्देन व्यवहृतत्वात्तस्याऽऽविर्भूतरूपत्वम्[4] । तथाविध हे आत्मन्मे मदर्थ**मावीरेधि** । अविद्यावरणापनयनेन प्रकटी भव । हे वाङ्मनसे मे मदर्थं **वेदस्य** यथोक्ततत्त्वविद्याप्रतिपादकस्य ग्रन्थस्याऽऽ**णी स्थः** । विद्याया आनयनसमर्थे भवतम्[5] । **मे श्रुतं** मया श्रोत्रेणावगतं ग्रन्थार्थजातं[6] **मा प्रहासीर्मा** परित्यजतु, विस्मृतं मा भूदित्यर्थः । **अनेनाधीतेन** विस्मरणरहितेन ग्रन्थे**नाहोरात्रान्संदधामि** संयोजयामि । अहनि रात्रौ चाऽऽलस्यं परित्यज्य निरन्तरं पठामीत्यर्थः । तस्मिन्पठिते ग्रन्थ **ऋतं** परमात्मभूतं वस्तु **वदिष्यामि** । विपरीतार्थवदनं कदाचिदपि मा भूदित्यर्थः । **ऋतं** मानसं, **सत्यं** वाचिकं[7], मनसा वस्तुतत्त्वं विचार्य[8] वाचा वदिष्यामीत्यर्थः । **तन्मया** वक्ष्यमाणं ब्रह्मतत्त्वं **मां** शिष्य**मवतु** सम्यग्बोधेन पालयतु । तथा तद्ब्रह्मतत्त्वं **वक्तार**माचार्य**मवतु**, बोधकत्वसामर्थ्यप्रदानेन पालयतु । **पुनरप्यवतु मा**मित्याद्युक्तिः फलविषया[9] । पूर्वं साधनकाले शिष्याचार्ययोः पालनं प्रार्थितमिदानीं फलकालेऽपि प्रार्थ्यते[10] । तत्र शिष्य-

१ घ. ङ. °नसी वि° । २ ग. °त् । यथा वा° । ३ क. ख. ग. °चा सर्वं विवक्षितं य° । ४ घ. ङ. °विर्भावरू° । ५ घ. ङ. भवतः । ६ क. ख. घ. ङ. ग्रन्थं तदर्थं । ७ घ. ङ. °चिकं, अधिकं म° । ८ घ. ङ. °र्यकाले शिष्याचार्ययोः पालयामीत्यर्थः । वा° । ९ घ. ङ. °लत्ववि° । १० क. ख. ग. °ते । शि° ।

स्याविद्यातत्कार्यनिवृत्तिः फलम्। आर्यस्य तादृशशिष्यदर्शनेन विद्यासंप्रदायप्रवृत्तिप्रयुक्तः परितोषः फलम्। अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धका विघ्नाः परिह्रियन्ते। विद्योत्पत्तेरूर्ध्वमसंभावनाविपरीतभावनोत्पादका विघ्नाः परिह्रियन्ते। अवतु वक्तारमित्यभ्यासोऽध्यायसमाप्त्यर्थो द्वितीयारण्यकसमाप्त्यर्थश्च।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये द्वितीयारण्यके सप्तमाध्याये प्रथमः खण्डः॥ १ ॥ ( २६ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बृहदृचब्राह्मणारण्यककाण्डभाष्ये द्वितीयारण्यके सप्तमोऽध्यायः॥ ७ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरपरावतारस्य वैदिकमार्गप्रवर्तकस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणामात्येन
विरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यककाण्डे
द्वितीयारण्यकं समाप्तम्॥ २ ॥

( आदितः समष्ट्यङ्काः—आर० २ अध्या० १२ ख० ४८ )

---

१ घ. ङ. °रः। तुरंगवदनो दद्यात्तुरंगनयनार्चितः। उरगाधिपतल्पोमे गिरं गरुडवाहनः। इ°।

# अथ तृतीयारण्यकम् ।

## प्रथमोऽध्यायः ।

### तत्र प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्राणविद्या मध्यमस्य ब्रह्मविद्योत्तमस्य च ।
पूर्वत्रोक्ताऽधमस्याथ संहितोपास्तिरीर्यते[1] ॥ २ ॥

त्रिविधो विद्याधिकारी, उत्तमो मध्यमोऽधमश्च । सर्वस्मात्संसाराद्विरक्त एकाग्रचित्तः[2] सद्योमुक्तिकाम उत्तमस्तं प्रति "आत्मा वा इदमेक एवाग्र आसीत्" [ ऐ० आ० २ अ० ४ ख० १ ] इत्यादिना ब्रह्मविद्योक्ता । हिरण्यगर्भप्राप्तिद्वारा क्रममुक्तिकामो मध्यमस्तं प्रति "उक्थमुक्थम्" [ ऐ० आ० २ अ० १ ख० २ ] इत्यादिना प्राणविद्योक्ता । यस्तु द्विविधां मुक्तिमकामयमानः प्रजापश्वादिकमाशुकामोऽधमस्तं प्रति संहितोपासनं तृतीयारण्यकेऽभिधीयते । तत्रोपासनं प्रतिजानीते—

अथातः संहिताया उपनिषत्, इति ।

अथ प्राणविद्याब्रह्मविद्ययोः कथनानन्तरं यतः कारणात्प्रबलया पाठवासनया युक्तस्य पाठसंबन्धरहितयोः प्राणब्रह्मविद्ययोश्चित्तं न प्रविशत्यतः कारणात्संहितायाः पाठसंबन्धिन्या उपनिषद्विद्योच्यत[3] इति शेषः । उपनिषण्णमस्यां विद्यायां प्रजापश्वादिफलमुपनिषत् ।

तामेतां विद्यां विधत्ते—

पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेय आकाशः संहितेत्यस्य माक्षव्यो वेदयांचक्रे, इति ।

"अग्निमीळे" [ऋ० सं० म० १ सू० १ ऋ० १] इत्यत्राग्निमिति यो मकारः सोऽयं संहितायाः पूर्वरूपो वर्णः । ईळ इत्यत्र योऽयमीकारः सोऽयं संहिताया उत्तरो वर्णः । द्वयोर्वर्णयोर्नैरन्तर्येणोच्चारणं संहिता "पर संनिकर्षः संहिता" [ पा० सू० १ । १ ] इति सूत्रितत्वात् । एतासु पूर्वोत्तरवर्णतत्संहितासु[4] भूलोकद्युलोकवायूनां[5] दृष्टिः कर्तव्या । यद्यपि पृथिव्यादीनां प्रथमनिर्दिष्टत्वात्प्रतीकत्वं प्राप्तं तथाऽपि "एत-

---

[1] घ. ङ. °स्तिरिष्यते । [2] ख. ग. °चित्तोऽनघो मू° । [3] घ. ङ. °द्विचार्यत । [4] ग. °र्णसंहि° । [5] क. ख. °वायुद° ।

मेतां संहितां वेद" [ऐ० आ० ३ अ० १ ख० १] इति संहिताया उपास्यत्वश्रवणात्पूर्ववर्णादीनां पृथिव्यादिदृष्ट्योपासनं गम्यते। यथा विष्णुदृष्ट्या शालग्रामोपास्तिस्तद्वत्। मण्डूकनाम्नो महर्षेः पुत्रो माण्डूकेयस्तस्य च माण्डूकेयस्य संहितायां वायुदृष्टिरित्येतन्मतम्। मक्षुनाम्नः कस्यचिन्महर्षेः पुत्रो माक्षव्यः। स चास्योपासनस्य संबन्धिन्यां संहितायामाकाशदृष्टिः कर्तव्येति वेदयांचक्रे विज्ञातवान्।

माक्षव्यस्य महर्षेरभिप्रायं दर्शयति—

**स हाविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति, इति।**

स ह सोऽपि वायुरविपरिहृतो विशेषेण परिहृतो न भवति। वायोराकाशवर्तित्वेनाऽऽकाश एवान्तर्भावात्। आकाशस्तु न वायावन्तर्भवति। वायुकारणत्वादधिकव्याप्तित्वाच्च। अतोऽस्य मण्डूकस्य पुत्रेण सह मे मम न समगात्। दर्शनं न संगतं मदीयमतं नैकविधं भवति। मन्मते वायोरन्तर्भावेन वाय्वाकाशोभयदृष्टिः संहितायां सिध्यति। तन्मते त्वाकाशस्यानन्तर्भूतत्वाद्वायुमात्रदृष्टिरेवातो मन्मतमेव श्रेष्ठमिति मेने निश्चितवान्। ततो वाय्वाकाशयोर्विकल्पेन ध्यानं न भवति किंतु वायुध्यानं पूर्वपक्ष आकाशध्यानं सिद्धान्त इत्यर्थः।

इदानीं मतान्तरानुसारेण तयोस्तुल्यबलत्वमभिप्रेत्य विकल्पेन ध्यानं दर्शयति—

**समाने वै तत्परिहृतो मेन इत्यागस्त्यः**
**समानं ह्येतद्भवति वायुश्चाऽऽकाशश्चेति, इति।**

अगस्त्यस्य पुत्र आगस्त्यो महर्षिरित्थं मेने निश्चितवान्। कथमिति तदुच्यते—**समाने वै** यदेतद्वायुः संहितेति माण्डूकेयस्य मतं यच्चाऽऽकाशः संहितेति माक्षव्यस्य मतं ते उभे अपि तुल्यबले एव। वायोराकाशवर्तित्वमप्रयोजकम्। नहि वस्तूनां स्वभावानुसारेण किंचिदुपासनं प्रवर्तते, किंतु वचनानुसारेण। वचनं तु वायुः संहितेति पक्ष आकाशः संहितेति पक्षे च समानम्। तत्तस्मात्कारणात्परिहृत आकाशपक्षे वायोरनन्तर्भावाद्वायुः परित्यक्तश्च। तथा सति **वायुश्चाऽऽकाशश्चे**त्येतन्मतद्वयं **समानमेव भवति**। तस्माद्विकल्पेन संहितायां वाय्वाकाशयोर्दृष्टिः कर्तव्येति तत्र मुख्यः सिद्धान्तः।

पूर्वोत्तरवर्णतत्संहितासु पृथिव्यादिध्यानं यदुक्तं सोऽयमुपासनस्य पूर्वो भागः, वक्ष्यमाणस्तूत्तरो भागः। तदुभयं बुद्धिसौकर्याय विभजते—

**इत्यधिदैवतमथाध्यात्मम्, इति।**

---

१ क. ख. °कव्याप्ति°। २ ग. घ. ङ. °तं चैकविधं न भ°। ३ ग. °क्त एव। त°। ४ घ. ङ. °ति मु°। ५ क. ख. °त्र सि°।

इतिशब्दः पूर्वोक्तं "पृथिवी पूर्वरूपम्" इत्यादिकं परामृशति । तच्चाधिदैवतं पृथिव्यादिकं दैवतमधिकृत्य वर्तमानमुपासनम् । अथानन्तरमात्मानं वागादिसंघातरूपमधिकृत्य वर्तत इत्यध्यात्ममुपासनमुच्यत इति शेषः ।

तदेतदुपासनं विधत्ते—

**वाक्पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः,** इति ।

पूर्ववर्णे वाग्दृष्टिरुत्तरवर्णे मनोदृष्टिस्तदुभयसंश्लेषणे प्राणदृष्टिरित्येतन्माण्डूकेयस्य मतम् । स च माण्डूकेयः शूरवीरः । उपासनायां निरन्तरं प्रवर्तमानाः शूरास्तैः पुरुषैर्बहिः प्रवर्तमानानामिन्द्रियाणां जितत्वात् । तेषु शूरेषु वीरोऽत्यन्तपराक्रमयुक्तः । उपास्यवस्तुसाक्षात्कारवानित्यर्थः ।

अत्रैव मतान्तरमाह—

**अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति,** इति ।

अथ माण्डूकेयोक्त्यनन्तरमस्य माण्डूकेयस्य ज्येष्ठः पुत्रो मनसो वाचश्च पूर्वोक्तविपर्ययमाह । तत्रोपपत्तिं चावोचत् । लोके विवक्षुः सर्वः पुरुष इमं वक्ष्यामीत्येवं प्रथमं संकल्पयति पश्चादुच्चारयति तस्माद्वस्तुतत्त्वमनुसृत्य पूर्ववर्णे मनोदृष्टिरुत्तरवर्णे वाग्दृष्टिश्च कर्तव्या । या तु वर्णयोः संहिता तस्यां पूर्वोक्तः प्राण एव ध्यातव्यो न तु तत्र कश्चिन्मतभेदोऽस्तीत्येवं ज्येष्ठः पुत्र उक्तवान् ।

एवं सति सोपपत्तिकत्वादयमेव सिद्धान्त इति प्रतिभासते । तत्र श्रुतिर्मतद्वयस्य समानत्वमभिप्रेत्य विकल्पमेव सिद्धान्तयति—

**समानमेनयोरत्र पितुश्च पुत्रस्य च,** इति ।

न ह्युपासना वस्तुतत्त्वमपेक्षते[1] किं तर्हि यथावचनमनुष्ठेयेति[2] न्यायः[3] पूर्वमेवोक्तः । तस्माद्यः पिता माण्डूकेयो यश्च तदीयो ज्येष्ठः पुत्र एनयोरुभयोर्मतं समानम् । तस्मान्मनोदृष्टिवाग्दृष्ट्योः पूर्वोत्तरभावित्वं विकल्प्यते[4] ।

अधिदैवतमध्यात्मं च यदुपासनमुक्तं तत्प्रशंसति—

**स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः,** इति ।

यः पूर्वोक्तपृथिव्यादिध्यानरूपः[5] फलहेतुः स एषोऽश्वयुक्तरथसमानः । स च प्रष्टिवाहनः, प्रष्ट्योः पार्श्वयोर्युज्यमानौ द्वावश्वौ वाहनं यस्य रथस्य सोऽयं प्रष्टिवा-

१ क ख. °त्त्वमुपासनं किं । २ घ. ङ. °नुष्ठितेन्या° । ३ क. ख. °ष्ठेयमिति । ४ क. ख. घ. ङ. विकल्प्यते । ५ घ. ङ. °नफले हे° ।

हनः । ईषयोर्दीर्घकाष्ठयोर्मध्ये कंचित्प्रबलमश्वं संयोज्य तयोरीषयोर्बहिरुभयोः पार्श्वयोर्द्वावश्वौ मध्यमाश्वस्यादान्तस्य नियामकौ संयोज्येते सोऽयमश्वत्रयोपेतो देवानां रथः । तथा तैत्तिरीया वाजपेयप्रकरणे समामनन्ति—"प्रष्टिवाहिनं युनक्ति । प्रष्टिवाही वै देवरथः । देवरथमेवास्मै युनक्ति" इति । यथा देवरथोऽश्वत्रयेण युक्त एवमयमप्युपास्तिरथो मनोवाक्प्राणैस्त्रिभिर्ध्येयविशेषैः संयुक्तः, तस्मात्प्रष्टिवाहिरथव-त्सहसा फलप्रापणे समर्थ इत्यर्थः[2] ।

इदानीं फलं दर्शयति—

**स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्य-शसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति,** इति ।

**यः** पुमानेवमुक्तप्रकारेण विहितां "पृथिवी पूर्वरूपम्" इत्यादिकां देवतारूपां **संहितां वेदो**पास्ते । यद्यपि विदिधातुः[3] प्रमाणजन्यज्ञानवाची तथाऽप्युपास्तिक्रियामन्त-रेण फलासंभवान्मानसत्वसाम्येन तां क्रियामुपलक्षयति । **स** उपासकः प्रजादिभिः **संधीयते** संयोज्यते । **प्रजा** पुत्रपौत्रादिरूपा । **पशवो** गवोश्वादयः । **यशो** धनदानादिकीर्तिः । **ब्रह्मवर्चसं** श्रुताध्ययनसंपत्तिः । तदेतत्सर्वं चित्रान्यायेन प्रतिबन्धाभावे सत्यैहिकं फलम् । "चित्रया यजेत पशुकामः" इत्यत्र पशुसंपादकदृष्टप्रयत्नसद्भावे सति पशुप्रा-प्तिरैहिकी, अन्यथाऽऽमुष्मिकीति पूर्वमीमांसायां निर्णीतम् । तद्वदत्रापि प्रजादिफलमै-हिकमामुष्मिकं चेत्यनियतम् । स्वर्गस्त्वामुष्मिक एव । **सर्वमायुरेती**त्यनेनापमृत्युरा-हित्यं विवक्षितम् ।

उक्तोपासनायाः सांप्रदायिकत्वं दर्शयति—

**इति नु माण्डूकेयानाम्,** इति ॥

**इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥**

इत्येवमुक्ता—"पृथिवी पूर्वरूपम्" [ ऐ० आ० ३ अ० १ ख० १ ] इत्याद्यु-पासना मण्डूकाख्यस्य महर्षेः पुत्राणां संप्रदायाद्भूमावागता ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यक-भाष्ये तृतीयारण्यके प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥

---

१ घ. ङ. ॱजसनेयॱ । २ घ. ङ. ॱर्थः । तदिदाॱ । ३ क. ख. विदिर्धातुः । ४ घ. ङ. ॱवादॱ ।

अथ द्वितीयः खण्डः।

संप्रदायान्तरोक्तिपुरःसरमुपासनान्तरं प्रतिजानीते—

**अथ शाकल्यस्य,** इति।

माण्डूकेयाभिमतोपासनकथनानन्तरं शाकल्यस्याभिमतोपासनमुच्यत इति शेषः। तत्रोपासनीयं स्वरूपं दर्शयति—

**पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः संधिः पर्जन्यः संधाता,** इति।

पूर्वोत्तरवर्णयोर्भूलोकद्युलोकध्यानम्। संधिर्वर्णयोः संहिता तत्र वृष्टिध्यानम्। संहिताया हेतुः संधाता। तद्यथा—"इको यणचि" [पा० सू० अ० ६ पा० १ सू० ७७] इति सूत्र इकारस्य स्थाने यकारादेशविधावच्परत्वं निमित्तम्। तादृशे संधिनिमित्ते पर्जन्यध्यानं कर्तव्यम्।

वृष्टेः संधित्वं पर्जन्यस्य संधातृत्वं च लोकव्यवहारेण विशदयति—

**तदुतापि यत्रैतद्बलवदनूह्रुह्नन्त्संदधदहोरात्रे वर्षति,** इति।

उतापीति निपातसमुदायः समुच्चयवाची लोकप्रसिद्धिं समुच्चिनोति। तत्तस्मिन्वृष्टिः संधिः पर्जन्यः संधातेत्यस्मिन्नर्थे लोकप्रसिद्धिरपि विद्यत इत्यर्थः। काऽसौ प्रसिद्धिरिति साऽभिधीयते—यत्र यदैतत्पर्जन्यस्वरूपं बलवदत्यन्तप्रबलं भूत्वाऽनूह्रुह्नुह्रणं वृष्ट्युपसंहारमकुर्वन्न(द)होरात्रे संदधद्रात्रावहनि च विच्छेदाभावलक्षणं संधानं कुर्वद्वर्षति तदानीं वृष्टेर्द्युलोकभूलोकसंधित्वं पर्जन्यस्य संधातृत्वं च विस्पष्टं प्रतिभासत इति शेषः।

न केवलं प्रतिभासः किंतु लौकिकानामुक्तिरप्यस्तीति दर्शयति—

**द्यावापृथिव्यौ समधातामित्युताप्याहुः,** इति।

अनया पर्जन्यसंपादितया निरन्तरतीव्रवृष्ट्या द्यौश्च पृथिवी चेत्येते उभे संधानं परस्परैक्यं प्राप्तवत्यावित्येवं वाक्यमपि लौकिका आहुः। अतोऽनुभवाल्लौकिकोक्त्या च वृष्टेः संधित्वं पर्जन्यस्य संधातृत्वं च प्रसिद्धम्।

बुद्धिसौकर्यार्थमुक्तवक्ष्यमाणावर्थौ विभज्य दर्शयति—

**इती न्वधिदैवतमथाध्यात्मम्,** इति।

इति नूक्तप्रकारमेव पृथिव्यादिकमित्यर्थः।

पृथिव्यादिदेवतानामिव स्वशरीरावयवानामपि ध्यानं दर्शयति—

**पुरुषो ह वा अयं सर्व आन्दं द्वे विदले भवत इत्याहुस्तस्ये-**

१ ग. °र्मन्वर्ष°। २ क. ख. ङ. इति।

दमेव पृथिव्या रूपमिदं दिवस्तत्रायमन्तरेणाऽऽकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणाऽऽकाशस्तस्मिन्हस्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरायत्तो यथाऽमूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि, इति ।

लोके यः पुरुषो विद्यते स सर्वोऽप्यान्दमण्डसदृशम् । वर्णविकारश्छान्दसः । यथा ब्रह्माण्डस्याधः कपालमूर्ध्वं कपालं चेति द्वे बिदले द्वौ परस्परविपरीतभागौ, तथा पुरुषेऽपि पादावारभ्याधरोष्ठपर्यन्तमेकं विदलमुत्तरोष्ठमारभ्य मूर्धपर्यन्तमपरं विदलं यथा भिन्नस्य वेणोर्दलद्वयं तद्वत् । विदले इति बकारश्छान्दसः । इत्येवमण्डसादृश्यमभिज्ञाः पुरुषा आहुः । तस्य दलद्वयोपेतस्य शरीरस्येदमेवाधरोष्ठपर्यन्तं पृथिव्याः स्वरूपम् । इदं तूत्तरोष्ठादिकं दिवः स्वरूपम् । तत्र तयोरधरोत्तरदलयोरन्तरेण मध्येऽयमाकाशोऽस्माभिर्मुखे दृश्यमानं छिद्रं वर्तते, यथा द्यावापृथिव्योर्मध्य आकाशस्तद्वत् । तस्मिन्हस्मिन्पूर्वोक्त एव दृश्यमाने मुखच्छिद्रे प्राण आश्रितः । यथा बाह्ये प्रसिद्धाकाशे वायुराश्रितस्तद्वत् । यथा च बाह्ये ज्योतिस्त्रयमेवं शरीरेऽपि ज्योतित्रयमस्ति । अनेन प्रकारेण शरीरस्याधरोत्तरभागौ पृथिवीरूपेण द्युलोकरूपेण च ध्यातव्यौ । वायुश्च प्राणरूपेण ध्येयः । ज्योतिस्त्रयं च बहिर्वदन्तरपि ध्येयमित्यर्थः ।

तच्च त्रयं दर्शयति—

यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथाऽयमग्निः पृथिव्यामेवमिदमुपस्थे रेतः, इति ।

लोकत्रयगतादित्यविद्युदग्निवच्चक्षुर्हृदयरेतांसि द्रष्टव्यानि ।

आध्यात्मिकमुपासनं प्रतिपाद्योपसंहरति—

एवमु ह स्म सर्वलोकमात्मानमनुविधायाऽऽहेदमेव पृथिव्या रूपमिदं दिवः, इति ।

उक्तेनैव प्रकारेण लोकत्रयसदृशं पुरुषशरीरमनुक्रमेण संपाद्येदमेवाधरोष्ठपर्यन्तं पृथिव्याः स्वरूपमिदं तूत्तरोष्ठादिकं दिवः स्वरूपमित्येवं शाकल्य आह ।

उपासनस्य फलं दर्शयति—

स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

१ क. 'स्पराविं' । २ ग. 'रमध उपरितनभा' ।

पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीयः खण्डः ।

---

उपासनान्तरं प्रतिजानीते—

अथातो निर्भुजप्रवादाः, इति ।

अथ केवलसंहितोपासनोक्त्यनन्तरम्[1] । यतः पाठकानां संहितापाठादनन्तरं पदक्रमौ पठ्यमानौ तु संधिस्थावतः कारणान्निर्भुजप्रवादाः संहितोपासका महर्षयः संहितायाः पदस्य क्रमस्य च सहोपासनं प्राहुरिति शेषः । निर्भुजशब्दः संहितावाचीत्यभिधीयते । तन्निर्भुजं प्रकर्षेण वदन्ति[2] ध्येयदेवतासहितं कथयन्तीति निर्भुजप्रवादाः ।

उपास्यवस्तुनः स्वरूपं दर्शयति—

पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण, इति ।

यथा निर्भुजशब्दः संहितावाचीत्यभिधास्यते तथा प्रतृण्णशब्दः पदवाची, उभयमन्तरेणेत्यनेन क्रमो विवक्षित इत्यप्यभिधास्यते । तत्र यन्निर्भुजं संहितारूपं तत्पृथिव्यायतनं पृथिवीमाश्रित्य वर्तते पृथिवीरूपत्वेन ध्यायेदित्यर्थः । तथा पदस्य द्युलोकरूपत्वं क्रमस्यान्तरिक्षरूपत्वं च ध्यायेत्[3] ।

यथोक्तपृथिव्यादिरूपनिर्भुजादिध्यानं प्रशंसितुमुपासकस्य सामर्थ्यं दर्शयति—

अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदच्योष्टाऽवराभ्यां स्थानाभ्यामित्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेदच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयाद्यस्त्वेवोभयमन्तरेणाऽऽह तस्य नास्त्युपवादः, इति ।

अथोपासनानन्तरं निर्भुजं ब्रुवन्तं संहितामधीयानमेनमुपासकं यद्यन्यः कश्चिदुपवदेदुपासकेन पठ्यमानायां संहितायां स्वरवर्णादिवैकल्यदोषमुद्भावयेत् । तदानीमेनं दोषोद्भावकमयमुपासक एवं ब्रूयात्—हे उपवादिन्नवराभ्यामधोवर्तिभ्यां स्थानाभ्यां पृथिव्यन्तरिक्षलोकाभ्यामच्योष्टा त्वं प्रच्युतोऽसीति । युक्तं चैतदुपास-

---

१ घ. ङ. 'नौ बुद्धिस्था' । २ घ. ङ. 'न्ति पदक्रमयोः संहितां क' । ३ घ. ङ. 'येदितिपृ' ।

कस्य वचनम् । संहितायां[1] पृथिवीरूपत्वध्यानेन सर्वदोषपरिहारात् । अतो निर्दोषायां संहितायां दोषमुद्भावयितुः पृथिवीलोकात्तत्सहभाविनोऽन्तरिक्षलोकाच्च प्रच्युतिर्भवति । अथशब्दः पूर्वोक्तवैलक्षण्यार्थः । संहितायां दोषमनुक्त्वा प्रतृण्णं ब्रुवन्तं पदमधीयानमेनमुपासकं यदि कश्चिदुपवदेत् । अधीयमाने पदे दोषोद्भावनमुपवादः । तदानीमेनमुपवादिनं प्रत्युपासक उत्तराभ्यां स्थानाभ्यामन्तरिक्षद्युलोकाभ्यामच्योष्ठा प्रच्युतोऽसीत्येवं ब्रूयात् । यस्तूपासक उभयमन्तरेणाऽऽह क्रममधीते तस्योपासकस्योपवादः[2] परेणोद्भावयितव्यः क्रमविषये दोषो नास्त्येव । संहितायां पदे च भ्रान्तदृष्ट्या दोषः संभाव्यते । तथा हि—"अग्निमीळे" [ऋ० सं० म० १ सू० १ ऋ० १ ] इत्यस्यां संहितायामुत्तरपदगत ईकारः स्वरितः । एकारः प्रचयः । पदकाले तु तदुभयमनुदात्तम् । तथा सति पदवासनावासितस्य कस्यचिच्छ्रद्धाजडस्य संहितायां स्वरान्यथात्वभ्रान्तिरुदियात्[3] । तथा संहितावासनावासितस्य श्रद्धाजडस्य पदच्छेदकाले स्वरान्यथात्वभ्रान्तिः[4] । क्रमकाले तु नोक्तभ्रमद्वयमस्ति, द्विविधस्वरस्य पठ्यमानत्वात् । अग्निमित्यनेन पूर्वपदेन सह संहितायामीळ इति पदे स्वरितप्रचयौ पठ्येते । पुरोहितमित्यनेनोत्तरपदेन सह संहितायामनुदात्तद्वयं पठ्येते । तस्मात्क्रमे स्वरान्यथात्वभ्रमो नोदेति[5] । कथं चिदन्यथात्वेऽपि देवताध्यानेन दोषः समाधीयते । तस्मादुपासनं प्रशस्तमित्यर्थः ।

निर्भुजादिशब्दानां विवक्षितार्थे लोकप्रसिद्ध्यभावाच्छ्रुतिरेव तमर्थं दर्शयति—

**यद्धि संधिं विवर्तयति तन्निर्भुजस्य रूपमथ**
**यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्याग्र**
**उ एवोभयमन्तरेणोभयं व्याप्तं भवति, इति ।**

यदुच्चारणं संधिं पदयोरुभयोरत्यन्तं संनिकर्षं विवर्तयति विशेषेण संपादयति तदुच्चारणं निर्भुजशब्दार्थस्य स्वरूपम् । निर्दिष्टौ भुजसदृशौ पूर्वोत्तरशब्दौ यस्मिन्संहितारूप उच्चारणे तदुच्चारणं निर्भुजम् । अथशब्दः पूर्ववैलक्षण्यार्थः । शुद्धे विकाररहिते पूर्वोत्तरे उभे अक्षरे अभिव्याहरति स्पष्टमुच्चारयतीति यदस्ति तत्प्रतृण्णशब्दाभिधेयस्य पदच्छेदस्य स्वरूपम् । तद्यथा—"इषे त्वोर्जे त्वा" [ तै० सं० १ । १ । १ ] इत्यत्र योऽयमोकारः सोऽयं संहितास्वरूपः । यदा त्वाकारान्तं त्वेति पदमूकारादिकमूर्जे इत्यादिपदमुच्चारयति तदानीमाकार ऊकारश्चेत्युभे अक्षरे शुद्धे भवतः । तदानीं संनिकर्षरूपायाः संहिताया विच्छिन्नत्वात् । विच्छेदरूपहिंसावाचिना प्रतृण्णशब्देन विच्छिन्नं पदमभिधीयते । यदेतत्प्रतृण्णस्य स्वरूपं तदेतदग्र[6] उ प्रथम-

१ घ. ङ. °तायां पृ° । २ ग. °वादो न प° । ३ घ. ङ. °रुदीया° । ४ क. ख. ग. °त्वभ्रमः । क्र° । ५ क. ख. °ति । यथा क° । ६ घ. ङ. °ग्र एव प्र° ।

भाव्येव । सिद्धे पदस्य स्वरूपे पश्चात्संहिता प्रवर्तते, संहितायाः संधीयमानपदद्वयधर्मत्वेन पदपूर्वकत्वस्यावश्यंभावात् । येन क्रमेण संहिता पदं चेत्युभयं व्याप्तं भवति सोऽयं क्रम उभयमध्यवर्तित्वादुभयमन्तरेणेत्युच्यते ।

प्रकारान्तरेणोपासनप्रशंसार्थमुपासकस्य काम्यं संहिताद्यध्ययनं विधत्ते—

**अन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकामः**
**प्रतृण्णमुभयकाम उभयमन्तरेण,** इति ।

संहिताद्यध्ययनैरन्नाद्यादिसिद्धिरुपासकस्य भवतीत्युक्ते सत्युपासनमेव प्रशस्तं भवति ।

यथोक्तफलविघ्नकारिणं शत्रुं शापेन विनाशयितुं शापरूपं मन्त्रं दर्शयति—

**अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेद्दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात्,** इति ।

अयमुपासकोऽन्नाद्यकामः सन्यदा संहितामधीते तदानीं **परः** शत्रुरेतस्य फलविघ्नार्थमेनमुपवदेदधीयमानायां संहितायां विद्यमानमविद्यमानं वा दोषमुद्भावयेत्तदानीमुपासकः **पृथिवी**मित्यादिमन्त्रेण तं शत्रुं शपेत् । मन्त्रस्य चायमर्थः—हे शत्रो त्वं संहितारूपां **पृथिवीं देवतां** दूषयितुमा**रः** प्राप्तवानसि । अतः सा **पृथिवी देवता त्वां रिष्यति** हिनस्तीति । एवमुत्तरयोरपि पर्याययोर्योज्यम् ।

अस्योपासकस्य शप्तुं सामर्थ्यं दर्शयति—

**यथा तु कथा च ब्रुवन्वाऽब्रुवन्तं वा**
**ब्रूयादभ्याशमेव यत्तथा स्यात्,** इति ।

**ब्रुवन्नि**त्येतदपि द्वितीयान्तत्वेन परिणेतव्यम् । **ब्रुवन्तं** दोषाभिध्यायिनम**ब्रुवन्तं** दोषोक्तिरहितं **वा** वैरिणं प्रति **यथा तु कथा च** येन केनापि प्रकारेण **ब्रूया**दुपासकः शपेत् । तदानीं यदुपासकेनोक्तं त**दभ्याशमेव** क्षिप्रमेव **तथा स्यात्** । तेनैव प्रकारेण शत्रौ पर्यवस्येत् ।

यदा शत्रुर्ब्राह्मणस्तदा विशेषं दर्शयति—

**न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात्** , इति ।

---

१ ग. °ताध्य° । २ घ. ङ. °मुत्पादये° । ३ घ. ङ. °न्त्रस्याय° । ७ क. ख. °तास्वरू° । ५ क. ख. घ. ङ. °थिवींदे° । ६ घ. ङ. °वतारूपां दू° । ७ ग. °तः पृ° । ८ घ. ङ. त्वा ।

दोषोद्भावकः शत्रुर्यदि ब्राह्मणस्तं प्रति कुशलादन्यन्नैव ब्रूयात्, मदीयसंहितादौ दोषोद्भावनं तुभ्यं हितं न भवत्यतो दोषोक्तिं परित्यज्य त्वं सुखेन तिष्ठेत्येवं *कुशलं ब्रूयात्। देवता रिष्यतीत्येतादृशं शापं न ब्रूयात्।

कचिद्ब्राह्मणेऽपि शापमभ्यनुजानाति—

**अतिद्युम्न एव ब्राह्मणं ब्रूयात्, इति।**

अतिशयितं द्युम्नं धनमतिद्युम्नं तस्मिन्नेव विषये विघातकं शत्रुं ब्राह्मणं शपेन्न त्वल्पे विषये।

इदानीं माण्डूकेयस्य महर्षेर्मतं दर्शयति—

**नातिद्युम्ने चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽऽह शूरवीरो माण्डूकेयः, इति॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके प्रथमाध्याये तृतीयः खण्डः॥ ३॥**

चनशब्दोऽप्यर्थः। अतिद्युम्नेऽपि महाधनविषयेऽपि विरोधिनं ब्राह्मणं ब्रूयान्न शपेत्किं तु ब्राह्मणेभ्यो नमोऽस्त्वित्येतावदेव ब्रूयात्। तदेतन्महर्षेर्मतम्

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थः खण्डः।

---

पुनरप्यन्यदुपासनं प्रतिजानीते—

**अथातोऽनुव्याहाराः, इति।**

अथ निर्भुजादिध्यानकथनानन्तरं यतो दोषवादिनः शत्रोः शापमन्तरेण स्वफलसिद्धिर्नास्ति। अतः कारणादनुव्याहाराः परकीयदोषोक्तिमनु स्वस्य व्याहाराः शापरूपं वचनं येषां प्राणोपासकानां तेऽनुव्याहारा महर्षय उपासनं प्राहुरिति शेषः।

तदुपासनं विधत्ते—

**प्राणो वंश इति विद्यात्, इति।**

यथा लोके प्रौढो वंशो गृहस्य धारक एवमयं देहगृहस्य धारकत्वेन वंशसदृशः प्राणवायुः संहितास्वरूप इत्येवं ध्यायेत्। अत्र प्रकरणवशात्संहितेति लभ्यते।

---

* कुशलमित्यस्य स्थाने क. पुस्तके वचनमिति बहिर्लिखितः पाठः।

---

१ घ. ङ. 'त्रुर्यो ब्रा'। २ घ. ङ. दद्यात्। ३ क. ख. 'हस्याऽऽधा'। ४ घ. ङ. तत्र।

अस्मिन्प्राणोपासने दोषवादी शत्रुरुपासकेन शप्तव्य इत्येतद्दर्शयति—

**स य एनं प्राणवंशमुपवदेच्छक्नुवन्चेन्मन्येत प्राणं वंशं समधा३म्, प्राणं मा वंशं संदधतं न शक्नोषी-त्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्,** इति ।

**स यो** ब्राह्मणोऽन्यो वा यः कोऽपि शत्रुरेनमुपासकं प्राणवंशध्यानेन तदात्मक-**मुपवदे**त्प्राणं समाधातुं न शक्नोषीत्येवं दूषयेत् । तदानीमयमुपासको द्विविधः शक्तोऽ-शक्तश्च तयोर्मध्ये यद्ययं **शक्नुवन्ने**वास्मीति **मन्येत** तदानीं प्राणमित्यादिना मन्त्रेणैनं **शत्रुं** शपेत् । तस्य मन्त्रस्यायमर्थः । अहमुपासको **वंश**सदृशं **प्राणं समधां** सम्यक्-चित्ते धारितवानस्मि । तथा सति **प्राण**रूपो यो **वंश**स्तं **वंशं संदधतं** सम्यग्ध्यानेन धारयन्तं **मां** प्रति **न शक्नोषि** धारयितुं त्वमिति भवानाह । तस्मात्कारणाद्वंशस्था-नीयः **प्राणस्त्वां हास्यति** परित्यक्ष्यति ततो मरिष्यसीति ।

अशक्तस्योपासकस्य शापमन्त्रे पाठान्तरं दर्शयति—

**अथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः संधातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्,** इति ।

यद्ययमुपासको ध्याने शक्तिरहितमात्मानं **मन्येत** तदानीमनेन मन्त्रेण शपेत् । तस्य मन्त्रस्यायमर्थः । अहमुपासको वंशरूपं प्राणं सम्यग्ध्यानेन धारयितुमिच्छामि तादृश-मिच्छन्तं मां प्रति संधातुं सम्यग्ध्यानेन धारयितुं **नाशको** न शक्नोषी[1]त्येवं भवानाह तस्माद्वंशरूपः **प्राणस्त्वां** परित्यक्ष्यतीति ।

पूर्ववदत्रोपासकस्य सामर्थ्यं दर्शयति—

**यथा तु कथा च ब्रुवन्वाऽब्रुवन्तं वा ब्रूयादभ्या-शमेव यत्तथा स्यान्न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने च-न ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽऽह शूरवीरो माण्डूकेयः,** इति ॥

**इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥**

पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

१ क. ख. शक्तोऽसीत्ये° ।

अथ पञ्चमः खण्डः ।

---

उक्तासु वक्ष्यमाणासु च संहितोपासनासु सर्वासु श्रोतुर्बुद्धिसमाधानार्थमुपास्यविषयं[1] सम्यक्परिशोधयितुं प्रस्तौति—

**अथ खल्वाहुर्निर्भुजवक्त्राः, इति ।**

अथ कासां चित्संहितोपासननानां कथनानन्तरं निर्भुजशब्दाभिधेया संहिता वक्त्रे मुखे येषां संहितोपासकानां ते महर्षयो निर्भुजवक्त्रास्ते च विषयशोधनार्थं वक्ष्यमाणं वाक्यमाहुः ।

स खलु तदीयं वाक्यं दर्शयति—

**पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति, इति ।**

अस्याः[2] संहितोपनिषदः प्रारम्भे " पृथिवी पूर्वरूपं द्यौरुत्तररूपम् " [ ऐ० आ० ३ अ० १ ख० २ ] इत्यादौ पूर्वरूपमित्यनेन पूर्वमक्षरं विवक्षितम् । उत्तररूपमित्यनेनोत्तरमक्षरं विवक्षितम् । तयोरक्षरयोर्मध्ये योऽवकाशः स संहिताशब्देन विवक्षितः ।

एवमुपास्यनिश्चयार्थं पूर्वरूपादिशब्दान्व्याख्याय[3] प्ररोचनार्थं पूर्वमुक्तं [ ऐ० आ० ३ अ० १ ख० २ ] तदुपासनफलमनुस्मारयति[4]—

**स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति, इति ।**

तदेतत्तत्रैव व्याख्यातम् ।

योऽवकाश इति यदुक्तं तत्र कंचिद्विशेषं दर्शयति—

**अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माऽऽह ह्रस्वो माण्डूकेयः पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन संधिं विवर्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां विभजते सा संहितेति, इति ।**

ह्रस्वो वामनः स्वल्पदेहः । स च स्वाभिज्ञत्वप्रकटनार्थं वयमिति पूजारूपं बहुवचनं प्रयुङ्क्ते । स चैवमाह । पूर्वरूपोत्तररूपयोर्व्याख्यानं तत्तादृशमेव, अवकाशः संहितेति यदुक्तं तत्रास्ति कश्चिद्विशेषः । न केवलमवकाशमात्रं संहितेति किं तु येनाव-

---

१ ग. श्रोतृबुद्धिं । २ क. ख. तस्याः । ३ घ. ङ. °ब्दानाख्याय । ४ घ. ङ. °नुस्मरति ।

काशेन संधिं पूर्वोत्तरयोः संनिकर्षमध्येता विवर्तयति विशेषेण संपादयति येन चावकाशेन स्वरमस्वरं च विविच्य जानाति । "अग्निमीळे" [ ऋ० सं० म० १ सू० १ ऋ० १ ] इत्यत्रोत्तरपदे पदकालवदनुदात्तस्वरो न भवति किंतु स्वरितप्रचयौ स्वरावित्येतादृशो विवेकः । येन चावकाशेन मात्राममात्रां च विभजते । "तवेत्तत्सत्यमङ्गिरः" [ ऋ० सं० म० १ सू० २ ऋ० ६ ] इत्यत्र पदकाले वकारस्योपरि ह्रस्वोऽकारो दृश्यते, संहिताकाले सा मात्रा न भवति, किंत्वेकारो मात्रेत्ययं विभागः । एतैर्विशेषणैर्विशिष्टोऽवकाशः संहिता न त्ववकाशमात्रमिति ।

पूर्ववत्फलमनुस्मारयति—

स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति, इति ।

पूर्ववद्व्याख्येयम् ।

मतान्तरं दर्शयति—

अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन्यथावर्णमाह तद्याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण संधिविज्ञपनी साम तद्भवति सामैवाहं संहितां मन्य इति, इति ।

अस्य ह्रस्वमाण्डूकेयस्य मध्यमः पुत्रः कश्चिदस्ति, तस्य माता प्रातीबोधी । तत्पुत्रो महर्षिरिमे पूर्वोत्तरे अविकर्षन्परस्परमत्यन्तविशेषमकुर्वन्ननेकीकुर्वन्नत्यन्तमैक्यमप्यकुर्वन्यथावर्णमाह तं तं वर्णमनतिक्रम्योच्चारयति । तवेदित्यत्र पूर्वपदान्त्यमकारमुत्तरपदादिमिकारं च संहिताकाले यदि पृथगुच्चारयेत्तदानीमत्यन्तविश्लेषो भवेत् । यदि त्विकारमन्तर्भाव्य केवलमकारमुच्चारयेत्तदानीमत्यन्तमेकीकरणं भवति । तदुभयं परित्यज्य यथाशास्त्रमेकारमसावुच्चारयति । तत्तथा सति पूर्वरूपोत्तररूपयोर्मध्ये याऽसौ मात्रोच्चारणविशेषरूपा संधिविज्ञपनी शास्त्रीयं संधिं विज्ञापयति तत्साम समत्वं भवति । अतिद्रुतातिविलम्बयोरभावात्सामैव तत्समत्वमेव संहितामहं मन्य इति मध्यमपुत्रस्य मतम् ।

अस्मिन्नर्थे कंचिन्मन्त्रमुदाहरति—

तदप्येतदृषिणोक्तम्, इति ।

---

१ घ. ङ. °पदस्य प° । २ क. ख. ह्रस्वाका° । ३ क. ख. घ. ङ. °नुस्मरति । ४ ग. घ. ङ. प्रतिबोधी । ५ क. ख. °ह तत्र व° । ६ ग. तं व° । ७ क. ख. °रं सं° ।

स च[१] मन्त्रः संहितायामेवमाम्नातः—“मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः” [ ऋ० सं० म० २ सू० २४ ऋ० १६ ] इति । हे बृहस्पते नोऽस्मान्मन्त्ररूपान्स्तेनेभ्यो विद्याचौर्यपरेभ्यो मा दा इत्यध्याहारः । तादृशेभ्यो मन्त्रोपदेशं मा कुर्वित्यर्थः । कीदृशा विद्याचोरा[२] इत्याशङ्क्योच्यते— ये शिष्या अभिद्रुहस्पदे सर्वतो गुरुद्रोहस्य स्थाने वर्तमाना निरामिणो मायया गुरुमभिमुखीकृत्य व्यवहारे बाह्ये नितरां रमयन्तीति निरामिणः । एतेऽनुकूला इत्येवं गुरोर्भ्रान्तिं जनयन्तीत्यर्थः । ते च स्वहृदये रिपवः शत्रवः सन्तोऽन्नेषु[३] भोग्येषु दृष्टार्थेष्वेव जागृधुरभिकाङ्क्षां कुर्वन्ति । तादृशेभ्यः स्तेनेभ्यो मन्त्रात्मकानस्मान्मा देहि । इति मन्त्रद्रष्टृणां वचनमेतत् । तर्हि केभ्यो मन्त्रा[४] दातव्या इति चेदुच्यते[५] ये श्रद्धालवो विव्रयः संभजनकर्तारः सन्तो हृदि स्वचित्ते देवानामिन्द्रादीनां यागादिरूपं संबन्धमा समन्तादोहते वितर्कयन्ति सर्वदा यागं कर्तुं विचारयन्ति । तादृशेभ्यो मन्त्रान्देहीत्यर्थः । ते च साम्नः समत्वादार्जवात्परः श्रेयोहेतुर्नास्तीत्येवं विदुर्जानन्ति । अतस्ते मन्त्रोपदेशयोग्याः । अत्र[६] यथा[७] शिष्याणां व्यवहारे समत्वं प्रशस्तमेवं संहितायामपि समंमात्रोच्चारणं[८] प्रशस्तमित्यर्थः ।

एतस्य मन्त्रस्य प्रदर्शनार्थं चतुर्थं[९] पादं पठति—

**बृहस्पते न परः साम्नो विदुरिति, इति ।**

पूर्ववत्फलवाक्यमनुस्मारयति—

**स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति, इति ।**

**इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥**

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

बृहस्पते न परः०—ऋ० सं० म० २ सू० २४ ऋ० १६ ।

---

१ घ. ङ. च सं॰ । २ ग. ॰द्याचौरा । ३ घ. ङ. ॰षु दृ॰ । ४ क. ख. ग. मन्त्रो दातव्य इ॰ । ५ ग. चेत्तदु॰ । ६ क. ख. ननु । ग. एव । ७ घ. ङ. यदा । ८ घ. ङ. समं मा॰ । ९ क. ख. ङ. ॰तुर्थपा॰ ।

अथ षष्ठः खण्डः ।

---

पुनरप्युपासनान्तरं[1] वक्तुं प्रस्तौति[2]—

**बृहद्रथंतरयो रूपेण संहिता संधीयत इति तार्क्ष्यः[3], इति[4] ।**

तरुक्ष(तृक्ष)[5]नामकस्य पुत्रः कश्चिन्महर्षिरेवं मन्यते । बृहन्नामकं यत्साम "त्वामिद्धि हवामहे" [ऋ० सं० म० ६ सू० ४६ ऋ० १] इत्यस्यामृच्युत्पन्नमस्ति यच्च रथंतराख्यं साम "अभि त्वा शूर नोनुमः" [ऋ० सं० म० ७ सू० ३२ ऋ० २२] इत्यस्यामृच्युत्पन्नं तयोरुभयोः साम्नोः **स्वरूपेण संहिता संपद्यते** । सामद्वयसंबन्धित्वेन संहिताध्यानं कर्तव्यमित्यर्थः ।

तमेव विवक्षितं[6] ध्यानप्रकारं दर्शयति—

**वाग्वै रथंतरस्य रूपं प्राणो बृहत उभाभ्यामु**
**खलु संहिता संधीयते वाचा च प्राणेन च, इति ।**

अत्र बृहद्रथंतरशब्दाभ्यां सामगानरूपो वाक्यार्थो न विवक्षितः । किं तर्हि प्रशस्तत्वसाम्येन[7] ताभ्यां शब्दाभ्यां वाक्प्राणावुपलक्ष्येते । यथा बृहद्रथंतरसामनी[8] सोमयागप्रकृतिरूपेऽग्निष्टोमे पृष्ठस्तोत्रस्य[9] निष्पादके सती[10] प्रशस्तत्वाभिप्रायेण सर्वत्र श्रुतिभिरादृियेते तथा वाक्प्राणावपि देहव्यवहारनिष्पादकत्वेन प्रशस्तौ । तस्माद्वागेवात्र रथंतरस्य स्वरूपत्वेन विवक्षिता । प्राणो बृहतः स्वरूपत्वेन विवक्षितः । **वाचा च प्राणेन** चेत्येताभ्यामुभाभ्यामेव **संहिता** संपादनीया । वाक्प्राणरूपा संहितेत्येवं ध्यायेदित्यर्थः ।

उक्तसंहिताध्यानस्य गुरुशुश्रूषालभ्यत्वेन प्राशस्त्यं दर्शयति—

**एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्यः[11], इति ।**

येयमुपनिषद्वाक्प्राणरूपसंहिताविद्या तस्यामेव निमित्तभूतायां सत्यामाचार्यप्रसादार्थं लौकिकगोपालवत्तरु(तृ)क्षस्य पुत्रो निरन्तरं संवत्सरमाचार्यसंबन्धिनीर्गा रक्षितवान् ।

न चात्र प्रयोजनान्तरमुद्दिश्य गोरक्षायां क्रियमाणायां प्रसङ्गादियं विद्या लब्धेति शङ्कनीयमित्येतद्दर्शयति—

**एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तार्क्ष्यः[12], इति ।**

मात्राशब्देन प्रयोजनान्तरं निवार्यते । एतस्यां मात्रायां केवलायां वाक्प्राणविद्या-

---

१ ग. °सनां व २ क. ख. °रं प्र° । ३ क. ग. घ. ङ. तारुक्ष्यः । ४ घ. °ति । तारुक्षुना° । ५ ङ. तरुक्षुना° । ६ घ. ङ. °क्षितध्या° । ७ ग. °त्वपठनसा° । ८ क. ख. घ. ङ. °मानि सो° । ९ क. °स्तोमस्य । १० क. ख. ङ. सति । ११ ग. घ. ङ. तारुक्ष्यः । १२ ग. घ. ङ. छ. झ. तारुक्ष्यः ।

यामेव निमित्तभूतायां सत्यां गोरक्षा कृता । तस्मादेतावता प्रयासेन लभ्यत्वादतिप्रशस्तेयं विद्येत्यर्थः ।

वाक्प्राणयोर्बृहद्रथंतररूपत्वेन प्राशस्त्यमभिप्रेत्य बृहद्रथंतरप्रतिपादकं मन्त्रद्वयमुदाहरति—

तदप्येतदृषिणोक्तम् , इति ।

तदेतन्मन्त्रद्वयं संहितायामे[1]वमाम्नातम्—

"प्रथश्च यस्य सप्रथश्च नामाऽऽनुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथंतरमाजभारा वसिष्ठः ।
अविन्दन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत् ।
धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदाचक्रे अग्नेः" ।

[ ऋ० सं० म० १० सू० १८२ ऋ० १—२ ] इति ।

तदेतन्मन्त्रद्वयं प्रवर्ग्याभि[2]ष्टेते सूक्ते समाम्नातम् । आनुष्टुभस्यानुष्टुप्छन्दोयुक्तैर्मन्त्रैः सं[3]स्तुतै[4]स्य यस्य प्रवर्ग्यहविषो नाम घर्म इत्यादिकं प्रथादयो जानन्तीति शेषः । प्रथसप्रथनामकावुभावृषी । चकारावनुक्तमहर्षिसमुच्चयार्थौ । ते सर्वेऽपि यस्य हविषः प्रसिद्धस्य नाम जानान्ति । यच्च प्रवर्ग्यार्थं द्रव्यं हविषोऽपि हविर्भवति । उत्तमं हविरित्यर्थः । यथा राज्ञोऽपि राजेत्यत्रोत्तमत्वमुक्तं भवति तद्वत् । तादृशं हविः स्तोतुं वसिष्ठाख्यो महर्षी रथंतराख्यं सामाऽऽजभाराऽऽहृतवान् । तेन साम्ना तस्य हविषः स्तुतिरपि किंनिमित्तेत्याशङ्क्य धात्रादिदेवतानिमित्तेत्युच्यते । धात्रादिशब्देषु चतु[5]र्थ्यर्थे पञ्चमी । धात्रादीनां परितोषार्थं हविःस्तुतिरित्यर्थः । ते प्रथादयो महर्षयः प्रवर्ग्यरूपं हविरतिहितं धात्रादिदेवेभ्योऽतिशयेनोपयुक्तमित्यविन्दल्लँब्धवन्तो ज्ञातवन्त इत्यर्थः । यद्धवि[6]र्यज्ञस्य सोमयागस्य धाम स्थानमासीत् । सति हि प्रवर्ग्ये सोमयागस्तेजस्वीव भासते । तस्मादस्य हविषो धामत्वम् । तथा यद्धविः परमं गुहाऽत्यन्तं गोप्यं यज्ञस्य शिरोरूपत्वात् । तथा चान्यत्र श्रूयते—"शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः" [ तै० आ० प्र० ५ अ० १० ] इति । अग्निसहितानां धात्रादीनां परितोषं निमित्तीकृत्य तद्धविः स्तोतुं भरद्वाजाख्यो महर्षिर्बृहदाख्यं सामाऽऽचक्र आनीतवान् । सर्वेषु सोमयागेषु प्रशस्तं यत्प्रवर्ग्यहविस्तादृशं हविः स्तोतुं वसिष्ठभरद्वाजौ महता प्रयासेन रथंतरं बृहच्च संपादितवन्तौ । तदुभयसामरूपत्वेन प्रशस्तौ वाक्प्राणौ । तस्माद्वाक्प्राणरूपत्वेन संहिताध्यानमुत्तममिति मन्त्रद्वयोदाहरणस्य तात्पर्यार्थः ।

---

१ ग. °मेवाऽऽम्ना° । २ घ. ङ. °ष्टवसू° । ३ ग. संस्कृत° । ४ घ. ङ. °तस्यार्थस्य । ५ ग. घ. ङ. °तुर्ष्वपि निमित्तार्थे प° । ६ ग. घ. ङ. °य तद्धविः° । ७ क. ख. °र्थः । प्र° ।

तस्यैतस्य मन्त्रद्वयस्य प्रतीकत्वेन चतुर्थपादौ पठति—

**रथंतरमाजभारा वसिष्ठः । भरद्वाजो बृहदाचक्रे अग्नेरिति, इति ।**

उपासनस्य फलं दर्शयति—

**स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति, इति ।**

पुनरपि गुणान्तरविशिष्टत्वेन वाक्प्राणरूपायाः संहिताया उपासनान्तरं विधत्ते—

**वाक्प्राणेन संहितेति कौण्ठरव्यः प्राणः पवमानेन पवमानो विश्वैर्देवैर्विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषाऽवरपरा संहिता, इति ।**

कुण्ठरवस्य पुत्रो महर्षिः संहितोपासनामेवमुवाच । येयं **वागस्ति** सा **प्राणेन संहिता** संयुक्ता, वाचः प्राणेन प्रेर्यमाणत्वात् । स च **प्राणो** देहमध्यवर्ती **पवमानेन** बाह्यवायुना **संहितः**, बाह्यवायोः प्राणानुग्राहकत्वात् । स च **पवमानो** बाह्यवायु-**र्विश्वैर्देवैः संहितः**, सर्वेषां देवानां बाह्याधीनक्रियोपेतत्वात् । ते च **विश्वे देवाः स्वर्गेण लोकेन संहिताः**, तल्लोकनिवासित्वात् । स च **स्वर्गो लोको ब्रह्मणा** वेदेन **संहितः**, वेदोक्तकर्मानुष्ठानलभ्यत्वात् । **सैषा** वागादिका ब्रह्मान्ता संहितोपासकैरव-**रपरे**त्युच्यते । अवरैः पूर्वपूर्वमभिहितैः परैरुत्तरोत्तरमभिहितैश्च पदार्थैर्युक्तत्वात् । एवं-रूपा संहिता ध्यातव्येत्यर्थः ।

तस्य ध्यानस्य फलं विधत्ते—

**स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधीयते यथैषा संहिता, इति ।**

**एषा** ध्यातव्यत्वेनोक्ता संहिता बहुविधपदार्थपरम्परयोपेता । **एवमेव स** उपासकः प्रजादिपरम्परया संयुज्यते ।

यथोक्तपरम्परारहितेऽप्युपासने प्रजादिफलं समानमित्याशङ्क्यात्र विशेषं दर्शयति—

**स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेदभिव्याहार्षन्नेव त्रियादिवं संहिताऽगमद्विदुषां**

---

रथंतरमाजभारा व०—ऋ० सं० म० १० सू० १८२ ऋ० १ । भरद्वाजो बृह-दाचक्रे०—ऋ० सं० म० १० सू० १८२ ऋ० २ ।

---

१ ख. 'तुर्थौ पा' । २ ग. 'क्तमार्गानु' ।

देवानामेवं भविष्यतीति शश्वत्तथा स्यात्, इति ।

स उपासको यदि कदाचित्परकीयप्रयोजनेन वा स्वकीयप्रयोजनेन वोपस्तुतः प्रेरितः सन्नभिव्याहरेत्संहितां पठेत्तदानीमभिव्याहार्षन्नेव संहितां पठितुमिच्छन्नेव विद्यादेवं मनसा संकल्पयेत् । कथमिति तदुच्यते—इयं मयोपास्यमाना संहिता दिवमगमत् । द्युलोकपर्यन्तं[1] पदार्थजातं[2] प्राप्तवती “ विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा ” इत्येवमुक्तत्वात् । तस्मात्कारणाद्विदुषां संहितोपासकानामत एव देवानां देवतारूपाणामेतेषां पुरुषाणामेवं भविष्यत्यैहिकमामुष्मिकं वाऽपेक्षितं श्रेयः सर्वदा भविष्यतीत्येवं मनसा संकल्पिते सति शश्वत्तथा स्यादवश्यं तत्फलं सिध्येत् ।

एवं सत्यस्या उपासनायाः संकल्पाधीनमिदमेव फलं न तु पूर्वोक्तं प्रजादिकमित्याशङ्क्य तदुभयसमुच्चयमभिप्रेत्य पूर्वोक्तमेव पुनः पठति—

स य एवमेतां संहितां वेद संधीयते
प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन
स्वर्गेण लोकेन सर्वमायुरेति, इति ।

केवलवाग्रूपेण संहिताया उपासनान्तरं विधत्ते—

वाक्संहितेति पञ्चालचण्डः, इति ।

पञ्चालाख्ये देशे समुत्पन्नश्चण्डस्तेजस्वी तन्नामको वा कश्चिन्महर्षिर्वाग्रूपेण संहिता ध्यातव्येत्याह ।

तदेतत्संहिताया वाग्रूपत्वं स एव महर्षिरुपपादयति—

वाचा वै वेदाः संधीयन्ते वाचा छन्दांसि
वाचा मित्राणि संदधति वाचा सर्वाणि
भूतान्यथो वागेवेदं सर्वमिति, इति ।

वेदाः सर्वेऽपि वाचैव संधीयन्ते पठ्यन्ते । छन्दांसि गायत्र्यादीन्यपि वाचा प्रयुज्यन्ते । मित्राणि स्निग्धाः पुरुषा वाचा प्रियोक्त्या संदधति संयुक्ता भवन्ति । न केवलं मित्राणि किंतु सर्वेऽपि प्राणिनः प्रियोक्त्या स्निग्धा भवन्ति । अपि च वामेवेदं सर्वमैहिकमामुष्मिकं च फलजातं संपादयति । राजसेवादौ प्रियभाषणेन धनलाभात् । मन्त्रजपादिना स्वर्गादिसिद्धेश्च ।

ननु वाचः प्राणप्रेरितत्वात्[3]प्राणध्यानमेव[4] प्रशस्तमित्याशङ्क्य वस्तुतत्त्वविचारेण तथात्वेऽपि संहितायां वाचः प्रत्यासत्तिमन्वयव्यतिरेकाभ्यां दर्शयति—

तद्यत्रैतदधीते वा भाषते वा वाचि तदा

---

१ क. ख. °र्यन्तप° । २ क. ख. °र्थज्ञानं प्रा° । ३ घ. ङ. प्राणेन संस्कृत° । ४ घ. ङ. °ध्यानं प्र° ।

**प्राणो भवति वाक्तदा प्राणं रेह्ळ्यथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेह्ळि ताव-न्योन्यं रीह्ळो वाग्वै माता प्राणः पुत्रः,** इति ।

**तत्त्स्यां** वाक्संहितायामियमुपपत्तिरुच्यत इति शेषः । **यत्र** यदा पुमानेतद्वेद-वाक्यमधीते लौकिकीं **वा** भाषां कथयति **तदानीं प्राणो** वाच्यन्तर्भूतो **भवति** वाच एव व्यापार उच्चारणलक्षणो दृश्यते न तूच्छ्वासनिःश्वासरूपः प्राणव्यापारः, **अतस्तदानीमियं वाक्प्राणं रेह्ळि** रेढि ग्रसति । एतावता संहितापाठकाले वाग्व्यापा-ररूपोऽन्वयोऽभिहितः । **अथ**शब्देन वैलक्षण्यवाचिना व्यतिरेक उपक्रम्यते[1] । **यत्र** यदा **तूष्णीं वा भवति** वाग्व्यापारं परित्यज्य मौनी सन्नवतिष्ठते चक्षुरादिव्यापारमपि परित्यज्य स्वापं **वा** प्राप्नोति तदानीमियं **वाक्प्राणेऽन्तर्भवति,** वाग्व्यापारो न दृश्यते प्राणव्यापारस्तु दृश्यते । तस्मात्तदानीं **प्राणो वाचं रेह्ळि** ग्रसति । न च तूष्णींभावे स्वापे वा संहितापाठोऽनुगच्छति । तथा सति यत्र वाग्व्यापारो नास्ति तत्र संहिता नास्तीत्येवं व्यतिरेकः प्रदर्शितो भवति । **तावेतौ** वाक्प्राणा**वन्योन्यं रीह्ळः** कालभेदेन ग्रसतो यद्यपि तथाऽपि **वागेव माता प्राणः पुत्रः** । तस्माद्वाग्ध्यानं प्रशस्तमित्यर्थः ।

वाचो मातृत्वे प्राणस्य पुत्रत्वे च संवादकं मन्त्रमुदाहरति—

**तदप्येतदृषिणोक्तम्,** इति ।

तमेतं मन्त्रं पठति—

**एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।**
**तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेह्ळि स उ रेह्ळि मातरमिति,** इति ।

**योऽयमेकः** प्राणवायुः **सुपर्णः** पक्षिवन्निराधारसंचारी **स** प्राणवायुर्बाह्यवायुरूपेण **समुद्रं** समुद्रवद्विस्तृतमन्तरिक्ष**माविवेश** प्रविष्टवान् । **स** प्राणदेव[2] **इदं विश्वं भुवनं** सर्वमपि लोकं **विचष्टे** विशेषेण ख्यापयति[3] । सति हि प्राणे जीवन्तः पुरुषा लोकं विख्यातं[4] कुर्वन्ति[5] । न तु प्राणरहिता मृताः । **तं** तादृशं प्राणदेवमहमुपासकः[6] **पाकेन मनसा** परिपक्वेन(ण)[7] ज्ञानेना**न्तितो**ऽन्तिके स्वहृदयेऽ**पश्यं** दृष्टवानस्मि । केन प्रकारेण तद्दर्शनमिति तदुच्यते—**तं** प्राणं **माता रेह्ळि**। अध्ययनकाले लौकिकभाषा-

एकः सुपर्णः स०—ऋ० सं० म० १० सू० ११४ ऋ० ४ ।

१ घ. ङ. उपलक्ष्यते । २ ग. °वदम्बरा° । ३ घ. ङ. स्थापयति । ४ घ. ङ. लोकवि° ५ घ. ङ. °तं कर्म कु° । ६ क. ख. प्राणं दे° । ७ घ. ङ. °पक्वज्ञा° ।

काळे च वाक्प्राणं ग्रसति। स उ सोऽपि प्राणो मातरं रेह्ळि तूष्णींभावकाले स्वापकाले च वाचं ग्रसति। इतिशब्दो मन्त्रसमाप्त्यर्थः।

उपास्तिफलं दर्शयति—

स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति, इति।

उपासनान्तरं प्रतिजानीते—

अथातः प्रजापतिसंहिता, इति।

अथ पञ्चालचण्डकौण्ठरव्यादिमहर्षिप्रणीतसंहिताध्यानकथनानन्तरं यतः प्रजापतिप्रणीता संहिता कृत्स्नकुटुम्बविषयत्वात्प्रशस्ता, अतः कारणात्साऽभिधीयते।

तामे[1]तां संहितां दर्शयति—

जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः संधिः प्रजननं संधानं सैषाऽदितिः संहिता, इति।

संभोगकालेऽधो[2]वर्तित्वाज्जायायाः पूर्ववर्णरूपत्वम्। उत्तरदेशवर्तित्वात्पत्युरुत्तरवर्णरूपत्वम्। उभयमेलनजत्वात्पुत्रः संधिः। प्रजननं पुत्रोत्पादनं संधानं संहिताया निमित्तम्। "इको यणचि" [पा० सू० अ० ६ पा० १ सू० ७७] इत्यादावच्परत्वं यथा संधिकार्यनिमित्तं तद्वत्। येयं ध्यातव्या संहितोक्ता सैषाऽदितिरखण्डनीया, जायापतिपुत्रतदुपयुक्तव्यापारैः कृत्स्नस्य संसा[3]रधर्मस्य पूरितत्वात्।

तमेतमर्थं विस्पष्टं दर्शयति—

अदितिर्हीदं सर्वं यदिदं किंच पिता च माता च पुत्रश्च प्रजननं च, इति।

पित्रादिकमपेक्षितं लोके यत्किंचिदस्ति तदिदं सर्वमदिति[4]रखण्ड[5]मन्यूनमित्यर्थः।

यथेयं संहिता पित्रादिभिरपेक्षितैः पूर्णत्वाददितिरेवमदितिनामयुक्ता देवमाता सर्वदेवपूर्णत्वेन साम्येन, अदितिदेवताप्रतिपादकं मन्त्रं प्रकृतसंहिताप्रशंसार्थमुदाहरति—

तदप्येतदृषिणोक्तम्, इति।

स च मन्त्रः संहिताया[6]मेवमाम्नातः—

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम्"॥
[ऋ० सं० म० १ सू० ८९ ऋ० १०] इति॥

---

१ घ. ङ. °तां द°। २ क. ख. °धोभागव°। ३ ग. °रस्य। ४ क. ख. ग. °र्ख्डनम°। ५ क. ख. ग. °नत्वमि°। ६ घ. ङ. °मेवाऽऽम्ना°।

द्युलोकाद्यभिमानिदेवतानां सर्वासामदितिकार्यत्वे सति कारणव्यतिरेकेण कार्याभावाददितेः सर्वात्मकत्वं युक्तम् । गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येते पञ्च जनाः । यद्वा निषादपञ्चमा ब्राह्मणादिवर्णाः पञ्च जनाः । किंच यज्जातं पूर्वमुत्पन्नं यज्जनित्वमितः परं जनयितव्यं तत्सर्वमदितिरेव । तादृगदितिदेवतानामसाम्यादियं संहिताऽपि प्रशस्तेत्यर्थः ।

एतस्य मन्त्रस्य प्रतीकत्वेन द्वितीयं पादं पठति—

अदितिर्माता स पिता स पुत्र इति, इति ।

उपासनस्य फलं दर्शयति—

स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

इति बह्वृचब्राह्मणारण्यककाण्डे तृतीयारण्यके प्रथमोऽध्यायः ॥ १ ॥

अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बृह्वृचब्राह्मणारण्यककाण्डभाष्ये तृतीयारण्यके प्रथमोऽध्यायः ॥ १ ॥

---

अदितिर्माता स पिता०—ऋ० सं० म० १ सू० ८९ ऋ० १ ।

---

१ घ. ङ. °तन्मन्त्र° ।

## अथ तृतीयारण्यके द्वितीयोऽध्यायः ।

### तत्र प्रथमः खण्डः । ( सप्तमः )

---

प्रथमेऽध्याये[1] संहितापदक्रमाणां नानाविधं[2] ध्यानमुक्तम् । द्वितीयेऽक्षरादि[3]बहुविधध्यानान्युच्यन्ते । तत्राऽऽदौ तावत्सिंहावलोकन[4]न्यायेन "अथातोऽनुव्याहाराः प्राणो वंश इति विद्यात्" [ ऐ० आ० ३ अ० १ ख० ४ ] इत्युक्तं तदेतदनूद्योपपादयति—

प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः, इति ।

शकलस्य पुत्रः शाकल्यः स तु बालोऽपि कश्चिदस्तीति स्थविरशब्देन विशेष्यते । तेन प्रोक्तं प्राणस्य[5] वंशत्व[6]ध्यानं साम्यसद्भावादुपपद्यते । यथा लोके शालाया आधारभूतस्तम्भाग्रेषु दण्डायमानस्थापिते प्रौढे वंशे स्यूता अन्ये सर्वे वंशाः सम्यक्प्रतिष्ठिताः स्युरेवमस्मिन्प्राणवायौ चक्षुरादिकं शरीरान्तमवयवजातं तत्संघरूपः सर्व आत्मा च सम्यगाश्रितः ।

इत्थं बुद्धिस्थं वंशत्वमुपपादितम्, अथाक्षरध्यानं विधत्ते—

तस्यैतस्याऽऽत्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्जानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्था रूपमिति ह स्माऽऽह ह्रस्वो माण्डूकेयः, इति ।

यो[7]ऽयं "प्राणो वंशः" इति स्तुतिप्रसङ्गेन देहेन्द्रियादिसंघातरूपः सर्व[8] आत्मोक्तस्तस्यैतस्य संघरूपस्याऽऽत्मनो यः प्राणोऽस्ति तदेतदूष्मणां स्वरूपम् । शषसहाख्या अक्षरविशेषा ऊष्माणस्तेष्वक्षरविशेषेषु प्राणदृष्टिं कुर्यात् । मातृकापाठे ककारादयो मकारान्ता वर्णाः स्पर्शसंज्ञकास्तेष्वस्थिदृष्टिः । अकारादयः, अकारान्ता वर्णाः स्वरसंज्ञकास्तेषु मज्ज[9]दृष्टिः । यरलवाश्चत्वारो वर्णा अन्तस्थासंज्ञकास्तेषु मांसलो[10]हितरूपं पूर्वोक्तत्रयापेक्षया चतुर्थमङ्गमन्यद्ध्यातव्यम् ।

---

१ घ. ङ. °थमाध्या° । २ ग. घ. ङ. °विधध्या° । ३ घ. ङ. °दिध्या° । ४ क. ख. ग. °लोकितन्या° । ५ घ. ङ. °णवं° । ६ क. ख. घ. ङ. °शस्य ध्या° । ७ घ. ङ. सोऽयं । ८ क. ख. ग. °रूपं सर्वमात्मो° । ९ क. ख. मज्जाद° । १० घ. ङ. °हितं रू° ।

तदेतच्चतुर्थाङ्गध्यानं **माण्डूकेय उक्तवान्। शाकल्यस्य तु मते न चतुर्थ**ध्यानं किंतु पूर्वोक्ताङ्गत्रयध्यानमेवेत्येतद्दर्शयति—

**त्रयं त्वेव न एतत्प्रोक्तम्,** इति ।

**नोऽस्माञ्शि** ष्यान्प्रति **शाकल्येन** प्राण ऊष्मरूपमित्यादि **त्रयमेवोक्तं न तु** मांसमित्यादिकं चतुर्थम्। एवं सति शाकल्यमाण्डूकेयमतद्वयानुसारेण ध्याने विकल्पो द्रष्टव्यः ।

तत्र शाकल्यमाश्रित्य ध्यातव्यं गुणान्तरं विधत्ते—

**तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टि शतानि त्रीणीतस्तानि सप्तविंशतिशतानि भवन्ति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा,** इति ।

यान्यस्थीनि स्पर्शेषु ध्येयत्वेनोक्तानि, ये मज्जानः स्वरेषु ध्येयत्वेनोक्ताः, यानि च पर्वाण्यूष्मसु ध्येयत्वेनोक्तानि, यद्यप्यूष्मसु प्राण एव ध्येयत्वेनोक्तो न तु पर्वाणि तथाऽपि तस्य प्राणस्य तेषु पर्वसु संचाराद्भेदविवक्षा द्रष्टव्या। **अस्थ्नां मज्ज्ञां पर्वणामिति** यदुक्तं तदेव **तस्यैतस्य त्रयस्येति** संगृह्योच्यते। आस्थिमज्जपर्वरूपस्य त्रयस्य शकलविशेषाः पुरुषशरीरस्येतो दक्षिणपार्श्वे **त्रीणि शतानि षष्टिश्च** भवन्ति। पुनरपीतो वामपार्श्वे **त्रीणि शतानि षष्टिश्च** भवन्ति। तानि मिलित्वा **सप्त शतानि विंशतिश्च** संपद्यन्ते। संवत्सरस्याप्यहानि रात्रयश्च मिलित्वा **विंशत्यधिकसप्तशतसंख्यया**[3] गण्यन्ते। तथा सति **स एष** पुरुषोऽहः**संमानः** संख्यया संवत्सरगताहोरात्रपरिमितः। तथा चक्षुःश्रोत्रादिभिरुपेतत्वात्तत्तन्मय आत्मा। तमेतमहःसमानत्वादिगुणविशिष्टमात्मानं ध्यायेदित्यर्थः ।

उक्तोपासनस्य फलं दर्शयति—

**स य एवमेतमहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाह्नां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान्भवति सर्वमायुरेति,** इति[4] ।

**इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥ (७)**

---

१ घ. ङ. °तव्यगु°। २ क. ख. घ. ङ. °स्य सक°। ३ ग. घ. ङ. संख्यायाः। ४ क. ख °ति। सोऽह्ना°।

स ब्रह्माऽह्नामहरभिमानिदेवतानां सायुज्यं तादात्म्यं सरूपतां पृथक्त्वे सति समानरूपत्वं सलोकतां समानलोकवासित्वमश्नुते प्राप्नोति । भावनायामत्यन्तमुत्कर्षे सायुज्यं मध्यमत्वे सारूप्यं मन्दत्वे सालोक्यमिति व्यवस्था द्रष्टव्या । तदेतत्सर्वमामुष्मिकं फलं पुत्रित्वादिकं चैहिकं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥(७)

---

अथ द्वितीयः खण्डः । ( अष्टमः )

---

उपासनान्तरं प्रतिजानीते—

**अथ कौण्ठरव्यः, इति ।**

कौण्ठरव्यनामा महर्षिः कांचिदुपासनां वक्तीति शेषः ।

तामुपासनामाह—

**त्रीणि षष्टि शतान्यक्षराणां त्रीणि षष्टि शतान्यूष्मणां त्रीणि षष्टि शतानि संधीनाम्, इति ।**

अकारादयः स्वरा अक्षरशब्देन विवक्षिताः । ऊष्मशब्देन शकारादिवाचकेन सर्वाणि व्यञ्जनानि ककारादीन्युपलक्ष्यन्ते । संधिशब्देन स्वराणां व्यञ्जनानां च परस्परसंयोगोऽभिधीयते । *षष्टीत्येतदत्र पृथक्पदम् । तथा सति स्वराणां त्रीणि शतानि षष्टिश्चाधिकेत्युक्तं भवति । एकस्य संवत्सरस्य षष्ट्युत्तरं शतत्रयं दिवसाः, तेषु दिवसेषूच्चार्यमाणाः स्वरास्तत्संख्ययैव गण्यन्ते । एवं व्यञ्जनेषु स्वरव्यञ्जनसं-योगेष्वपि योजनीयम् । अयं न्यायः पूर्वस्यामुपासनायामप्येकैकपार्श्वगतास्थिमज्जपर्वसु द्रष्टव्यः । तथा सति त्रीणीतः षष्टि शतानि त्रीणीत इत्येषा संख्योपपद्यते ।

उपास्यत्वेनाभिहितेष्वक्षरोष्मसंधिष्वहरादिदृष्टिं विधत्ते—

**यान्यक्षराण्यवोचामाहानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान्त्संधीनवोचामाहोरात्राणां ते संधय इत्यधिदैवतम्, इति ।**

कालात्मानमहोरात्रतत्संधिरूपं दैवतमधिकृत्य वर्तत इत्यधिदैवतम् ।

---

* एतच्च पूर्वमपि "तस्यैतस्य" [ऐ० आ० ३ अ० २ ख. १] इत्यादिवाक्यव्याख्यानावसरे वक्तुमुचितम् । तत्रापि षष्टिशतानीति पदद्वयस्य कर्तुमत्रेवोचितत्वात् ।

---

१ घ. ङ. 'रूप्यमधमत्वे । २ घ. ङ. 'मज्जाप' । ३ ग. 'ज्जसु ।

देवतावयवानामहरादीनां दृष्टिर्यथाऽभिहिता तथा पुरुषशरीरावयवानामस्थ्यादीनां दृष्टिमपि विधत्ते—

**अथाध्यात्मं यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्मम्**, इति ।

अथ देवतावयवानामहरादीनां दृष्टिविधानानन्तरमध्यात्ममुपासकशरीरावयवदृष्टिरपि विधीयते । तत्र स्वरेष्वस्थिदृष्टिर्व्यञ्जनेषु मज्जदृष्टिश्च कर्तव्या ।

तामेतां मज्जदृष्टिं[2] प्रशंसति—

**एष ह वै संप्रति प्राणो यन्मज्जैतद्रेतो न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न संभवेत्**, इति ।

मज्जेति यदस्त्येष एव संप्रति प्राणः समीचीनो मुख्यः प्राणवायुः । तत्कथमित्याशङ्क्य तदेव स्पष्टी क्रियते—मज्जाकार्यभूतमेतद्रेत उत्पत्स्यमानजन्तुप्राणतादात्म्यं प्राप्य प्राणरूपेण वर्तते । अत उत्पादकेन पित्रर्तुकाले जनिष्यमाणजन्तोः प्राणादृते गर्भाशये रेतो न सिच्यते किंतु तदीयप्राणसहितमेव रेतः सिच्यते । यदि कदाचिदुत्पत्स्यमानजन्तोः[3] प्राणादृते केवलं रेतः सिच्येत तदानीं तद्रेतः पूयेन्नश्येन्न तु पुत्ररूपेण संभवेत् । अतः प्राणसहितरेतः[4]कारणभूत[5]मज्जध्यानं[6] प्रशस्तमित्यर्थः ।

स्वराणां व्यञ्जनानां च संधिषु शरीरावयवसंधिध्यानं विधत्ते—

**यान्त्संधीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम्**, इति ।

यथोक्तमस्थ्यादिध्यानं संख्याद्वारेण प्रशंसति—

**तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां[7] पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीतिसहस्रं भवत्यशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसंपादयन्ति**, इति ।

अस्थिमज्जपर्वणां यदेतत्त्रयमस्ति तस्यैतस्य त्रयस्य गणनायां[8] कृतायामशीत्यधिकं सहस्रं संपद्यते । तद्यथाऽस्थिमज्जपर्वणां प्रत्येक षष्ट्यधिकशतत्रये सति तानि त्रीणि शतत्रयाणि मिलित्वा नव शतानि संपद्यन्ते । षष्टीनां त्रयं मिलित्वाऽशीत्यधिकं शतं भवति । तदेवमशीत्युत्तरं सहस्रम् । एतच्च शरीरस्य पार्श्वद्वये विभज्य योजनीयम् । तथा योजनायामितो दक्षिणपार्श्वे पञ्च शतानि चत्वारिंशच्च भवन्ति । इत उत्तरपार्श्वेऽपि पञ्च शतानि चत्वारिंशच्च भवन्ति । एवमशीत्यधिकसहस्रसंपत्तौ सत्यां

---

१ क. ख. घ. ङ. मज्जादृ° । २ क. ख. घ. ङ. °मज्जादृ° । ३ क. ख. ग. °जन्तुप्रा° । ४ क. ख. °हितं रे° । ५ क. °भूतं म° । ६ क. ख. घ. ङ. मज्जाध्या° । ७ घ. ङ. °मज्ञाप° । ८ घ. ङ. °यां क्रियमाणायां° ।

तत्संख्योपेतास्थ्यादिमतः पुरुषस्याऽऽदित्यरूपत्वं संपद्यते। अर्के लीयन्त इत्यर्कोलिन आदित्यस्य रश्मयः, ते चाशीत्यधिकं सहस्रं भवन्ति। अतः पुरुषस्य संख्यासाम्यादादित्यरूपत्वम्। आदित्यस्य रश्मीनां सहस्रसंख्या चाऽऽथर्वणिकैराम्नायते—"सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः" इति। तेन च सहस्रेणाशीतिरप्युपलक्ष्यते। किंचैता अस्थ्यादिगताः संख्या बृहतीछन्दस्का ऋचः संपाद्य महाव्रताख्यमहः सर्वतः संपादयन्ति। तस्मिंश्चाहनि बार्हती तृचाशीतिर्विद्यते। ताश्च बृहतीछन्दस्काः। एवमत्र संपादनीयाः। षट्त्रिंशदक्षरा तावदेका बृहती। तथा सति षष्ट्युत्तरशतत्रयसंख्यया दश बृहत्यः संपद्यन्ते। तस्यां च संख्यायां त्रिगुणीकृता त्रिंशद्बृहत्यः संपद्यन्ते। तदेवं बृहतीद्वारेण महाव्रताख्यस्याह्नः संपादनाद्यथोक्तख्योपेतमस्थ्यादिध्यानं प्रशस्तमित्यर्थः।

अथाऽऽध्यात्मिकपुरुषध्याने गुणविशेषान्विधत्ते—

**स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा,** इति।

योऽयमक्षरोपासकः पुरुषः स एषोऽक्षरैः संमीयते समानपरिमाणः क्रियत इक्षरसंमानः। स्वरेषु व्यञ्जनेषु तत्संधिषु च येयमशीत्यधिकसहस्रसंख्या[1] सेयमर्मामज्जसु पर्वस्वप्यस्ति तस्मादयमक्षरैः संमानः समानपरिमाणश्चक्षुःश्रोत्रादिव्यवहारोत्वाच्चक्षुरादिमयश्छन्दसामध्ययनाच्छन्दोमयस्तादृश आत्माऽहमित्येवमुपासीत।

तदुपासनस्य फलं दर्शयति—

**स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान्भवति सर्वमायुरेति,** इति॥

इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके द्वितीयाध्याये द्वितीयः खण्डः॥ २॥ (८)

पूर्वोक्ताहःसंमानोपास्ति[2]फलवद्व्याख्येयम् [ऐ० आ० ३ अ० २ ख० १]।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके द्वितीयाध्याये द्वितीयः खण्डः॥ २॥ (८)

---

१ क. °धिकास°। २ घ. ङ. °पास्तेःफ°।

अथ तृतीयः खण्डः । ( नवमः )

---

उपासनान्तरं विधत्ते—

**चत्वारः पुरुषा इति बाध्वः, इति ।**

बध्वस्य पुत्रो महर्षिर्वक्ष्यमाणाश्चत्वारः पुरुषा उपासनीया इति मन्यते ।

तान्पुरुषान्निर्दिशति—

**शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति, इति ।**

तत्र प्रथमं पुरुषं विवृणोति—

**शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रसः, इति ।**

बाध्वनामका वयं महर्षयो यं ध्यातव्यं देवं शरीरपुरुषनाम्ना कथितवन्तस्तं स्पष्टी कुर्म इति शेषः । देह एव दैहिकः स चाहं मनुष्य इति प्रत्ययवेद्यत्वादात्मा । तादृशो योऽस्त्ययमेव स पूर्वोक्तः शरीरपुरुषः । तस्य च देहरूपस्य पुरुषस्य स्वामित्वेनान्तर्वर्तमानो योऽयमशरीरो [3] नाम शरीररहितः प्रज्ञात्मा चिद्रूपः पुरुषः सोऽयं रसः शरीरपुरुषस्य सारः । तदुभयं ध्यायेदिति तात्पर्यार्थः ।

द्वितीयं विवृणोति—

**छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसः, इति ।**

“अग्निमीळे पुरोहितम्” [ ऋ० सं० म० १ सू० १ ऋ० १ ] इत्यत्र श्रूयमाणानामकारगकारनकारादीनामक्षराणां समाम्नायः सम्यक्पाठो योऽस्ति स एव च्छन्दःपुरुषशब्देन विवक्षितः । तस्यैतस्य च्छन्दःपुरुषस्य मध्ये सारो[3]ऽयमकारो रस इति वेदितव्यः । तथा च पूर्वत्रा[4]ऽऽम्नातम्—“अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति” ।

तृतीयं विवृणोति—

**वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसः, इति ।**

लोके[5] कश्चित्पुमान्येन मनसा सावधानेन वेदान्ताञ्जानाति “अग्निमीळे” [ ऋ० सं० म० १ सू० १ ऋ० १ ] इत्यादिरयमृग्वेदस्तेन हौत्रं कर्तव्यम्—“इषे त्वा”

---

१ क. ख. एवायं दै° । २ ग. नाशराहि° । ३ क. ख. घ. ङ. °रो यो मकारो वे° । ४ ग. °वैमाम्ना° । ५ ग. °के वेदवित्पु° ।

[तै० सं० १ । १ । १] इत्यादिर्यजुर्वेदस्तेनाऽऽध्वर्यवं कर्तव्यम्—"अग्न आयाहि" इति सामवेदस्तेनौद्गात्रं कर्तव्यमित्येवमृग्वेदादिज्ञापकं मानसं यदवधानं सोऽयं **वेदपुरुषत्वे**नोच्यते । **तस्यैतस्य** वेदपुरुषस्य **ब्रह्मा रसो** हिरण्यगर्भोपास्त्या तद्रूपत्वमभिमन्यमानः पुरुषः सारभूतः ।

अत्र प्रसङ्गाद्धोत्रध्वर्यूद्गातृव्यतिरिक्तस्य ब्रह्माख्यस्य चतुर्थस्यर्त्विजः कंचिद्विशेषं विधत्ते—

**तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्**, इति ।

यस्माद्वेदत्रयाभिज्ञानरूपस्य वेदपुरुषस्य हिरण्यगर्भोपासको ब्रह्मा रसस्तस्माद्ब्रह्मनामसाम्याद्यागेऽपि **ब्रह्माणम्**ऋत्विजं **ब्रह्मिष्ठ**मतिशयेन वेदत्रयगतं[1] कुर्वीत । ब्रह्मा **यज्ञस्य** संबन्धिन**मुल्बणं** तीव्रगुणं दोषं[2] वा द्रष्टुं समर्थस्तादृशं कुर्वीत ।

चतुर्थं विवृणोति—

**महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्या भावयन्नन्यानि तस्यैतस्यासावादित्यो रसः**, इति ।

योऽयं **संवत्सरः** कालात्माऽ**न्यानि भूतानि** कानिचिद्गतायुष्काणि प्राणिशरीराण्**यैक्या प्रध्वंसयन्**स्वस्वकारणेन सहैक्यं यथा प्रतिपद्यन्ते तथा विनाशयन्**भावयन्**पुनर**न्यानि** कानिचिन्नूतनशरीराण्युत्पादयन्वर्तते । सोऽयं कालात्मा **महापुरुष**शब्देन विवक्षितः । **तस्यैतस्य** महापुरुषस्या**सौ** मण्डले दृश्यमान **आदित्यो रसः** सारः । यथा लोके वृक्षः स्वनिष्ठेन रसेन पूर्णः शोभत एवमेते शरीरपुरुषादयो यथोक्तै रसैः पूर्णाः शोभन्ते ।

चतुरः पुरुषांस्तद्रसांश्च ध्येयत्वेनाभिधायापरं कंचिन्मुख्यं गुणं ध्येयत्वेन विधत्ते—

**स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति**, इति ।

शरीरपुरुषसारत्वेनैवं प्रज्ञात्मा जीवोऽभिहितो महापुरुषसारत्वेन योऽयमादित्य ईश्वरोऽभिहित **एतदुभयमप्येकमेव** वस्त्विति **विद्या**त्साक्षात्कारपर्यन्तमुपासीत । यस्मादुभयोरेकत्वं वास्तवं **तस्मा**ल्लोकेऽपि **तं तं पुरुषं प्रति** संमुखः सन्नादित्योऽवतिष्ठते । तथा च **तैत्तिरीया** आमनन्ति—"असावादित्यः सर्वाः प्रजाः प्रत्यङ्ङुदेति । तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति" इति ।

आदित्यमण्डले स्वशरीरे वस्त्वैक्यसंपादकं मन्त्रमुदाहरति—

**तदप्येतदृषिणोक्तम्**, इति ।

---

१ ङ. °त्रयं कु° । २ ङ. °गुणदोषं प्रमार्ष्टुं स° ।

तमेतं मन्त्रं पठति—

**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**
**आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेति,** इति ।

अनीकशब्दो मुखवाची सैन्यवाची वा । यदेतदादित्यमण्डलं तदेतद्देवानां मुखम् । स हि व्यवहारहेतुत्वाद्देवानां मध्ये मुख्य[1] इत्यर्थः । सैन्यपक्षे बहुविधरश्मिसमूहरूपमिति व्याख्येयम् । तच्च मण्डलं चित्रं चायनीयं पूजनीयम् । यद्वा सर्वदिक्षु रश्मिप्रसारणेन चित्रं[2] देवानां मुखमित्यर्थः । तदेव चक्षुरित्यादिना प्रपञ्च्यते—मित्रवरुणादीनां चक्षुःस्थानीयमिदं मण्डलम् । एतदीयेन हि प्रकाशेन सर्वे देवाः पश्यन्ति । तच्च मण्डलं लोकत्रयमाप्राः सर्वतः पूर्णं सद्वर्तते । तन्मण्डलस्थः सूर्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्यापि प्राणजातस्याऽऽत्मा प्रत्यक्षस्वरूपमिति मन्त्रस्यार्थः ।

यथोक्तपुरुषचतुष्टयोपासकस्य बाध्वस्य वचनमुपसंहरति—

**एतामनुविधं संहितां संधीयमानां**
**मन्य इति ह स्माऽऽह बाध्वः,** इति ।

शरीरपुरुष इत्याद्यनुक्रमेणोक्तां विधां प्रकारमनुसृत्येत्यनुविधं तथा सम्यक्चित्ते धार्यमाणां संहितां मन्ये चिन्तयामीत्येवं बाध्वो महर्षिरुक्तवान् ।

अध्यात्ममधिदैवं च योऽयमेकः परमात्मा ध्येयत्वेनोक्तस्तस्य प्रशंसार्थं सर्वत्र ध्येयतां दर्शयति—

**एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतम-**
**ग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं**
**दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधी-**
**ष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं**
**सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते ,** इति ।

बह्व्य ऋचो यागप्रयोगार्थं येषां होतॄणां ते होतारो बह्वृचाः । ते च यथोक्तमध्यात्ममधिदैवतमेकमेव[3][4][5] सन्तं परमात्मानं महत्युक्थे प्रौढे शस्त्रे मीमांसन्ते विचारयन्ति ध्यायन्तीत्यर्थः । अध्वर्यवस्त्वेतं परमात्मानमिष्टकाचयनेन निष्पादितेऽग्नावुपासते । छन्दोगास्तु महाव्रताख्ये कर्मण्येतमुपासते । एवं तत्तद्वेदगतकर्माङ्गेषु

चित्रं देवानामुदगात्०—ऋ० सं० म० १ सू० ११५ ऋ० १ ।

१ ग. मुख्यमि° । घ. ङ. मुखमि° । २ क. ख. विचित्रं । ३ क. ख. ग. °ध्यात्माधि° । ४ घ. ङ. °दैवं धीरेतमे° । ५ ग. °तयोरेक° ।

तैस्तैः[1] परमात्मन उपास्यत्वमुक्तम् । तथा यागाद्बहिर्भूतेषु पृथिव्यादिषु सर्वभूतान्तेषु प्रतीकेष्वेतं परमात्मानं तत्तत्फलकामा उपासते । वेदान्ताभिज्ञास्त्वेतमेव चिदात्मानं जगत्कारणं ब्रह्मेत्याचक्षते । तस्मादादित्यमण्डले शरीरे च वर्तमानस्यैकस्य परमात्मन उपासनं प्रशस्तमित्यर्थः ।

तस्य ध्यातव्यान्कांश्चि[2]दन्यान्गुणान्विधत्ते—

**स एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छ-न्दोमयो मनोमयो वाङ्मय आत्मा, इति ।**

संवत्सरनिष्पादकेनाऽऽदित्येन सहैकत्वेन चिन्त्यमान[3]त्वात्स एष ध्येयः पुरुषः संवत्सररूपकालात्मसदृशः । चक्षुर्मयत्वादिकं पूर्ववत्, फलमप्यहःसंमानाक्षरसंमानयो-रिव संवत्सरसंमानेऽप्युन्नेतव्यम् ।

अत्र प्रसङ्गादुपासकस्य परकीये यागे शंसनमपवदितुं वदति—

**स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्-मयमात्मानं परस्मै शंसति[4], इति ॥**

इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( ९ )

ईदृशमात्मानं विदित्वोपास्य यः कोऽपि परार्थं शंसतीत्येषोऽनुवाद उत्तरार्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ १ ॥ ( ९ )

---

अथ चतुर्थः खण्डः । ( दशमः )

---

इदानीमनूदितेऽर्थे प्रत्यवायं दर्शयति—

**दुग्धदोहा अस्य वेदा भवन्ति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमिति, इति ।**

यः परार्थं शंसत्यस्य वेदा गुरुमुखादधीता दुग्धदोहा भवन्ति । दोहः क्षीरं तच्च पूर्वमेव दुग्धं निःसारितमितः परं दोहनीयं किमपि नास्ति । अधीता वेदा निष्फला भवन्तीत्यर्थः । तदेव स्पष्टी क्रियते—तस्य परार्थं शंसनं कृतवतः पुरुषस्यानूक्ते गुरू-पदेशमनु पठिते वेदे भागः सौभाग्यं नास्ति । अध्ययननिमित्तं सुकृतं न निष्प-

---

१ ग. तैस्तैरेवमा॰ । २ ग. ॰श्चिद्गुणा॰ । ३ घ. ङ. ॰नत्वेन स ए॰ । ४ ग. शंसेदित्ये॰ ।

द्यत इत्यर्थः। तथा सुकृतस्य पन्थानं पुण्यमार्गं न वेद, अर्थज्ञानमपि न संपद्यत इत्यर्थः।

उक्तेऽर्थे संवादकं[2] मन्त्रमुदाहरति—

**तदप्येतदृषिणोक्तम्**, इति।

तमेतं मन्त्रं पठति—

**यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।**
**यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थामिति**, इति।

यो यं वेदः सोऽयं यथाशास्त्रमध्येतॄणां पुरुषाणां **सखा** स्वार्थबोधेनोपकारित्वात्[3] न केवलं सखा किं तु **सचिविदपि**[4]। सचिशब्दः सखिवाची। अत एव **शाखान्तरे**— "सखिविदम्" [तै० आ० प्र० २ अ० १९] इति पठन्ति। यो माणवकोऽध्येता सोऽपि वेदस्य सखा संप्रदायोच्छेदनिवारकत्वेन वेदं प्रत्युपकारित्वात्, तादृशमुपकारिणमध्येतारं वेत्तीति **सचिवित्**। तमेतमभिज्ञं **सखायं** यः पुमांस्तित्याज परार्थे[5] विनियोगेन परित्यजति तस्य पुरुषस्य **वाच्यपि भागो नास्ति** अध्ययननिमित्तमपि सुकृतं न विद्यते। **यदीं शृणोति** यदपि वेदार्थश्रवणं तदप्यलकं **शृणोति** अलीकश्रवणमेव। तत्र हेतुरुच्यते—**हि** यस्मात्सुकृतस्य **पन्थानं न वेद** श्रद्धाराहित्यादनुष्ठानमार्गं न जानाति, तस्मात्तदीयं श्रवणमपि निष्फलमित्यर्थः।

तृतीयचतुर्थपादयोरभिप्रायं दर्शयति—

**न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य**
**पन्थानमित्येतत्तदुक्तं भवति**, इति।

इत्थं परार्थशंसने दोषमभिधाय तत्प्रसङ्गाच्चयनादीनि त्रीणि निषेधति[6]—

**तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै**
**महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्**, इति।

यस्मात्परार्थानुष्ठाने[7] महान्प्रत्यवायोऽस्ति **तस्मादेवं विद्वान**ध्वर्युः परार्थं महाव्रताङ्गमग्निचयनं **न** कुर्यात्। उद्गाता च महाव्रताङ्गेन साम्ना परार्थं **न स्तुवीत**। होताऽप्येतदहर्महाव्रताख्येनाह्नोपलक्षितं शस्त्रं परार्थं **न शंसेत्**[8]।

---

यस्तित्याज सचिविदम्०—ऋ० सं० म० १० सू० ७१ ऋ० ६।

---

१ ग. मार्गं। २ घ. ङ. संपादकं। ३ घ. ङ. °बोधनेनो°। ४ ग. °दम्। स°। ५ क. ख. °रार्थेवि°। ६ घ. ङ. निन्दति। ७ घ. ङ. °ने प्रत्यवायो भूयानस्ति। ८ घ. ङ. °त्। एवं विद्वच्छं°।

क्वचिच्छंसनस्य प्रतिप्रसवं दर्शयति—

**कामं पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति, इति ।**

इत्थं प्रसङ्गाच्छंसनस्य विधिनिषेधावुदाहृतौ । अथाल्पायुषः परमपुरुषार्थसाधनोपायमुपदेष्टुमायुषोऽल्पत्वज्ञापकानि कानिचिदरिष्टान्युदाहरति—

**स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम तौ यत्र विहीयेते चन्द्रमा इवाऽऽदित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति संपरेतोऽस्याऽऽत्मा न चिरमिव जीविष्यतीति विद्यात्, इति ।**

आदित्यमण्डले स्वशरीरे च तत्त्वमेकमेवेति वयं यदवोचाम तदेकत्वं तिरोधाय तावादित्यस्वशरीरपुरुषौ यत्र विहीयेते यदा विमुक्तौ भवतः । वियोगस्य लिङ्गमुच्यते—चन्द्रवदादित्यः शीतरश्मिर्भासते न तु दृष्टिप्रतिघातकरा उष्णरश्मयः प्रादुर्भवन्ति तदिदमेकमरिष्टम् । तथा मञ्जिष्ठासाम्येन द्यौर्लोहिता दृश्यते । तदिदं द्वितीयम् । पायुद्वारं चात्यन्तविवृतं[२] भवति न तु संकोचयितुं शक्यते, तदिदं तृतीयम् । काकस्य कुलायो नीडं तत्र यादृशो गन्धस्तादृशदुर्गन्धोपेतमस्य शिरो भवति । तच्च[३] शिरः स्वकीयं दुर्गन्धं वायति दूरदेशे प्रसारयति, एतच्चतुर्थम् । एतेषामन्यतमस्मिन्नु(म उ)त्पन्ने सत्यस्य पुरुषस्याऽऽत्मा जीवः संपरेतो मृतो न त्वितः परं दीर्घकालं जीविष्यतीति निश्चिनुयात् ।

अस्त्वेवं निश्चयः किं तत इत्याशङ्क्याऽऽह—

**स यत्करणीयं मन्येत तत्कुर्वीत यदन्ति यच्च दूरक इति सप्त जपेदादित्प्रत्नस्य रेतस इत्येका यत्र ब्रह्मा पवमानेति षळुद्वयं तमसस्परीत्येका, इति ।**

अरिष्टदर्शनेन प्रत्यासन्नं मरणं निश्चित्यावस्थितः स पुमाँल्लौकिकं वैदिकं वा कर्तव्यशेषं यन्मनसि धारयति तदानीं तत्सर्वं सहसा कुर्वीत । तावद्विलम्बसिध्यर्थं यदन्तीत्यादिका विहिता ऋचस्तत्तत्संख्याकाः सर्वा जपेत् ।

---

यदन्ति यच्च०—ऋ० सं० म० ९ सू० ६७ ऋ० २१ । आदित्प्रत्नस्य रेतसः०—ऋ० सं० म० ८ सू० ६ ऋ० ३० । यत्र ब्रह्मा पवमान०—ऋ० सं० म० ९ सू० ११३ ऋ० ६ । उद्वयं तमसस्परि०—ऋ० सं० म० १ सू० ५० ऋ० १० ।

---

१ ग. °नप्र° । २ घ. ङ. °विस्तृतं । ३ क. ख. तस्य । घ. ङ. तच्चैतस्य । ४ ग. घ. ङ. °तरस्मि° । ५ क. ख. ग. यदि मन° ।

अरिष्टान्तरं दर्शयति—

**अथापि यत्र च्छिद्र इवाऽऽदित्यो दृश्यते रथनाभिरिवाभि-**
**ख्यायेत च्छिद्रां वा छायां पश्येत्तदप्येवमेव विद्यात्**, इति ।

**अथापि** पुनरप्यन्यदरिष्टमुदाह्रियत इति शेषः । **यत्र** यदाऽऽदित्यश्छिद्रोपेत **इव दृश्यते** यथा रथचक्रस्य **नाभिः** सच्छिद्रो भवति तद्वदादित्यस्य मण्डलं सच्छिद्रं प्रतीयेत । यद्वा स्वदेहच्छायां सच्छिद्रां पश्येत् । **तदपि** तदानीमप्येवमेव " संपरेतोऽस्याऽऽत्मा " इत्यारभ्य " उद्वयं तमसस्परीत्येका " इत्यन्तेन ग्रन्थेनोक्तप्रकारमेव विद्यात् ।

अरिष्टान्तरं दर्शयति—

**अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं**
**वाऽऽत्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन**
**वा दृश्येयातां तदप्येवमेव विद्यात्** , इति ।

**आदर्शो** दर्पणस्तेनो**दकेन** च प्रतिबिम्बयोग्यानि स्वच्छानि खड्गादिद्रव्याण्युपलक्ष्यन्ते । तेषु द्रव्येषु स्वकीयं देहप्रतिबिम्बं **जिह्मशिरसं** कुटिलशिरस्कं **पश्येत्** । यद्वा शिरोरहितं पश्येत् । अथवा **कन्याके** कनीनिके प्रतिबिम्बस्य चक्षुर्गते शुक्लकृष्णमण्डले **विपर्यस्ते** विद्यमानसंनिवेशाद्विपरीते । शुक्लमण्डलमध्ये कृष्णमण्डलमित्यसौ विद्यमानसंनिवेशस्तद्विपर्ययः कृष्णमण्डलमध्ये शुक्लमण्डलम् । यद्वा यथावस्थितमार्जवं परित्यज्य **जिह्मेन** वक्रत्वेन कनीनिके **दृश्येयाताम्** । तान्येतानि चत्वार्यरिष्टानि ।

पुनरप्यरिष्टान्तरं दर्शयति—

**अथापिधायाक्षिणी उपेक्षेत तद्यथा बटरकाणि संपतन्तीव**
**दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव विद्यात्**, इति ।

लोके सर्वोऽपि पुरुषश्चक्षुषी निमील्य नेत्रस्यापाङ्गमवष्टभ्योपेक्षेत नेत्रसमीपं पश्येत्तदानीमनुभवतो यथा भवति तथोदाह्रियते—**बटरकाणि** वर्तुलानि सूक्ष्माणि शुक्लवर्णानि केशोण्डूकशब्दाभिधेयानि **संपतन्तीव** सम्यङ्नेत्रान्निर्गच्छन्तीव सर्वैर्दृश्यन्ते । **तानि बटरकाणि यदा न पश्येत्**तदानीमप्यरिष्टं[1] विज्ञेयम्[2] ।

अरिष्टान्तरं दर्शयति—

**अथाप्यपिधाय कर्णा उपशृणुयात्स एषोऽ-**
**ग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा**
**न शृणुयात्तदप्येवमेव विद्यात्**, इति ।

---

१ ग. 'रिष्टनिश्चयः । अ' । २ घ. ङ. निश्चेयम् ।

सर्वोऽपि जनः स्वकर्णावुभावप्यङ्गुलिभ्यां दृढमपिधाय देहमध्ये किंचिच्छब्दं शृणुयात्तस्य दृष्टान्तद्वयमुच्यते । प्रकर्षेण ज्वलतो वह्नेः प्रौढस्य शब्दो यादृशो भवति, रथस्य त्वरया गच्छत उपब्दिर्घोषो यादृशो भवति स[२] एष देहमध्ये श्रूयमाणः शब्दस्तादृशः । तं यदा न शृणुयात्तदानीमरिष्टं विद्यात् ।

अरिष्टान्तरं दर्शयति—

**अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा मेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यात्,** इति ।

**यथा मयूरस्य ग्रीवा** लोकेऽतिशयेन नीलवर्णा तद्वत्प्रौढो वह्निर्ज्वलन्यदा **नील इव दृश्यते**, तथा मेघरहिते निर्मल आकाशे केनाप्यन्येनादृश्यमानां महतीं **विद्युतं पश्येत्**, **मेघे वा** प्रौढे सर्वैर्दृश्यमानां **विद्युतं** स्वयं **न पश्येत्**, यद्वा वर्षर्तुमध्ये भूमौ सर्वत्रान्धकारमापादयन्प्रौढो मेघो मध्याह्नादिकाले कदाचिद्भवति तस्मिन्मेघे भासुरा **मरीचीरिव पश्यति**, तान्येतानि चत्वार्यरिष्टानि ।

अरिष्टान्तरं दर्शयति—

**अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यात्,** इति ।

शुष्कतृणकाष्ठादिरहिता केवला मृत्तिकैव प्रौढज्वालायुक्ता यदा दृश्यते तदानीमरिष्टं विद्यात् ।

उदाहृतान्यरिष्टान्युपसंहरति—

**इति प्रत्यक्षदर्शनानि,** इति ।

इत्येवं पूर्वमुक्तानि " तौ यत्र विहीयेते चन्द्रमा इवाऽऽदित्यो दृश्यते " इत्यारभ्य " भूमिं ज्वलन्तीमिव पश्येत " इत्यन्तानि जागरणावस्थायां **प्रत्यक्षेण** दृश्यमानान्यरिष्टानि विज्ञेयानि ।

वक्ष्यमाणं प्रतिजानीते—

**अथ स्वप्नाः,** इति ।

जागरणप्रत्यक्षारिष्टकथनानन्तरं स्वप्नगता अरिष्टविशेषाः कथ्यन्त इति शेषः ।

दशसंख्याकानि स्वप्नारिष्टानि दर्शयति—

**पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह**

१ क. ॰भाभ्यामप्य॰ । २ ग. स य ए॰ । ३ घ. ङ. ॰घे सूर्यम॰ ।

**एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति बिसानि भक्षयत्येकपुण्डरीकं धारयति खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति, इति।**

स्वप्ने साकल्येनात्यन्तं कृष्णवर्णं पुरुषदेहं कृष्णवर्णैर्दन्तैर्युक्तं[1] पश्यति। **स च** पुरुष आगत्यैनं स्वप्नद्रष्टारं हन्ति स्वप्नमध्ये मारयति। तदिदमेकमरिष्टम्। तथाऽरण्यमध्ये प्रौढो **वराह** आगत्य मारयति। तदिदं द्वितीयम्। **मर्कटः** कश्चिदागत्यैनं **स्वप्नद्रष्टारमास्कन्दयति** समन्तान्मूर्धपर्यन्तमारोहति। तदिदं तृतीयम्। अतिशीघ्रगामी प्रौढो **वायुरेनं** गृहीत्वा निम्नदेशे[2] जलवत्**प्रवहति**। एतच्चतुर्थम्। **सुवर्ण**निर्मितमाभरणं लड्डुकादिवद्भक्षयित्वा पुनरपि वमति। एतत्पञ्चमम्। माक्षिकं यन्मधु तदाकण्ठ[3]**मश्नाति**। एतत्षष्ठम्। **बिसानि** पद्मादीनां नालानि **भक्षयति**। एतत्सप्तमम्। **एकपुण्डरीकम्**[4]। रक्तवर्णमिति संप्रदायः। तच्छिरसि **धारयति**। एतदष्टमम्। **युक्तै**रश्ववत्सज्जीकृतैर्गर्दभैर्**वराहैर्वा** ग्रामान्तरं[5] गच्छति। एतन्नवमम्। **नलदमाली** रक्तकुसुमग्रथितस्रग्वी **दक्षिण**[6]**दिगभिमुखो** भूत्वा कांचित्कृष्णवत्सोपेतां कृष्णां धेनुं **व्राजयति** देशान्तरं[7] प्रेरयति। एतद्दशमम्।

एतैर्जागरणस्वप्नगतैररिष्टैः प्रत्यासन्नं मरणं निश्चित्यानन्तरं यत्कर्तव्यं तद्दर्शयति—

**स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयात्, इति।**

**स** पुमानेतेषामरिष्टानां मध्ये यत्किमप्यरिष्टं यदा **पश्ये**त्तस्मिन्दिने स्वयमु**पवासं** कृत्वा स्थालीपाकविधानोपेतं **पायसं** [ श्रपयित्वा ] "रात्री व्यख्यदायती" [ ऋ० सं० म० १० सू० १२७ ऋ० १ ] इत्यस्मिन्सूक्ते प्रतिमन्त्रं **पायसं हुत्वा** स्वगृहे निष्पादितेना**न्नेन** यथाशक्ति **ब्राह्मणान्भोजयित्वा** पश्चाद्धोमशेषं **चरुं स्वयं प्राश्नीयात्**। एतावता संपादनीयस्य पुरुषार्थस्योपस्थितो विघ्नः परिहृतो भवति।

विघ्नं परिहृत्य पश्चात्संपादनीयं पुरुषार्थं दर्शयति—

**स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां**

---

१ क. कृष्णैर्द°। २ क. °पि बहिर्वम°। ३ क. °ण्ठपर्यन्तम°। ४ घ. ङ. एकं पु°। ५ क. घ. ङ. °न्तरे ग°। ६ क. ख. °क्षिणाभि°। ७ क. ख. घ छ. °न्तरे प्रे°।

भूतानामन्तरपुरुषः स म आत्मेति विद्यात्, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके द्वितीयाध्याये
चतुर्थः खण्डः ॥ ४ ॥ ( १० )

कृतविघ्नपरिहारः स पुमानिति विद्यादित्यन्वयः । कथं विद्यादित्युच्यते[1] । यः सर्वेषां भूतानामन्तरपुरुषो ब्रह्मादिस्तम्बान्तानां सर्वप्राणिनां देहमध्ये तत्तद्देहसाक्षित्वेन भासमानः परिपूर्णः परमात्माऽस्ति सोऽयं परमात्मा मे मम मुमुक्षोः पुरुषस्याऽऽत्मा स्वरूपमित्येवं विद्यात् । प्रमाणेन साक्षात्कुर्यात् । तदशक्तावुपासीतेत्यपि द्रष्टव्यम् । अत इत्यादिभिः पदैः सर्वभूतान्तरं पुरुषं विशिनष्टि—अतोऽस्माद्देहेन्द्रियादिसंघाताद्विलक्षण इति शेषः । अश्रुत इत्यादिभिः सप्तभिर्विशेषणैरिन्द्रियजन्यक्रियो[2]कर्मत्वं निवारयति । अकारादयो वर्णाः पैरुच्चार्यमाणा उदात्तादिस्वरा वा यथा श्रोत्रेन्द्रियेण श्रूयन्ते नैवमात्मा श्रोत्रेण श्रुतः । यथा पादेन्द्रियजन्यया गमनक्रियया ग्रामान्तरं गम्यते नैवमसौ गतः । यथा चतुर्भुजाद्युपेता विष्ण्वादिमूर्तिर्जडत्वान्मनसा ध्यानकाले प्रकाश्यते नैवमसौ मतः, स्वप्रकाशत्वान्मनसो[3]ऽमतो न विस्फारितः । यथा पुत्रभृत्यादि तत्स्वामिना नम्यते वशी क्रियते नैवमसौ नतः, स्वतन्त्रत्वात्केनापि न वशीकृतः । यथा नीलपीतादिकं रूपं चक्षुषा दृश्यते नैवमसौ दृष्टः । यथा मनसा संदिह्यमानं वस्तु स्थाणुचोरादिकं विज्ञानशब्दवाच्यया बुद्ध्या निश्चीयते नैवमसौ विज्ञातः, संदेहरहितत्वाद्बुद्ध्या न निश्चेतव्यः । यथा जातिगुणादियुक्ता गवाश्वादिपदार्थास्तद्वाचकैः शब्दैरादिश्यन्ते नैवमसावादिष्टः, वाच्यार्थस्य जात्यादेस्तस्मिन्नभावात् । एतैर्विशेषणैरैन्द्रियकव्यापारविषयत्वं निवारितम् । कथं तर्ह्यात्मा बोद्धुं शक्यत इत्याशङ्क्याऽऽत्मनः कर्मका[4]रकत्वाभावेऽपि तत्तद्व्यापारकर्तृत्वेनोपलक्षयितुं शक्यत इत्यभिप्रेत्य श्रोता मन्तेत्यादिसप्त विशेषणान्युच्यन्ते । आत्मा विषयो न भवति विषयी तु भवत्येवातो विषयित्वेनावगन्तव्याः । अत एवान्तर्यामिब्राह्मणे विषयत्वनिषेधपुरःसरं विषयित्वमाम्नायते—“ अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता ” [ बृह० ३ । ७ । १२ ] इति । अक्षरब्राह्मणेऽपि तथैवाऽऽम्नातम्—“ तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ ” [ बृह० ३ । ८ । ११ ] इति । कौषितकिनोऽप्यामनन्ति—“ न वाचं विजिज्ञासीत वक्तारं विद्यात् ” [ कौषी० १ । ८ ] इत्यादिना । प्रश्नोपनिषद्यपि दर्शनादिक्रियाकर्तृत्वमाम्नातम्—“ एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता

---

१ ग. घ. ङ. °दिति तदुच्य° । २ घ. ङ. °याकारित्वं । ३ क. ख. °नसा मतो विस्फारितो न । य° । ४ ग. घ. ङ. °रत्वा° ।

रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" [प्रश्नो० ४।६] इति। तत्तदिन्द्रियावभासकत्वेन तत्तत्कर्तृत्वव्यवहारो न तु क्रियाश्रयत्वं कर्तृत्वमित्यभिप्रेत्योत्तरतापनीये पठ्यते—"चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा मनसो द्रष्टा सर्वस्य द्रष्टा" [नृ० उ० २] इति। चक्षुर्भासकत्वमपि भासनक्रियाश्रयत्वं न भवति किं तु स्वप्रकाशचैतन्यरूपस्य तत्तद्भानानुकूल्येनावस्थानं साक्षित्वमेवेति तत्रैवाऽऽम्नातम्—"चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी मनसः साक्षी सर्वस्य साक्षी" [नृ० उ० २] इति। एवम् "असङ्गो ह्ययं पुरुषः" [बृह० ४।३।६] इत्यादीन्यप्युदाहरणीयानि। यद्यप्यादेष्टा घोष्टेति पदद्वयेन वाग्व्यापा[1]रकर्तृत्वमेवाभिधीयते तथाऽपि राजादिवदाज्ञापयितृत्वमादेष्टृत्वं सैन्यस्याऽऽह्वयितृयाष्टिकवदुच्चध्वनिकर्तृत्वं घोष्टृत्वमिति विवेकः। विज्ञातृत्वप्रज्ञातृत्वे अप्यवान्तरभेदेन विवेचनीये। देहेन्द्रियादिभ्यः प्रत्यगात्मानं विविच्य विज्ञातृत्वं तस्य च विविक्तस्य प्रकृष्टब्रह्मरूपत्वेन ज्ञातृत्वं प्रज्ञातृत्वम्। **सर्वेषां भूतानामन्तरपुरुष** इत्यनेन हिरण्यगर्भाद्युपाधिप्रयुक्तमात्मनो नानात्वं निराकृतम्। तादृशस्य परमात्मनः स म आत्मेति विद्यादिति वाक्येन स्वकीयसंसारित्वनिवारणाय तादात्म्यमुपन्यस्तम्। ईदृग्वस्तुसाक्षात्कारे सति देहपातकाल एव वि[2]मुच्यते। तथाविधवस्तूपासने तु ब्रह्मलोकप्राप्तिद्वारा क्रमेण विमुच्यते। इत्येवमादित्यमण्डलस्थस्वशरीरान्तर्गतपुरुषैक्यध्यानप्रसङ्गागतान्यरिष्टदर्शनानि तद्युक्तस्य परमपुरुषार्थहेतुभूता ब्रह्मविद्या च परिसमापिता॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके द्वितीयाध्याये चतुर्थः खण्डः॥ ४॥ (१०)

---

अथ पञ्चमः खण्डः। (एकादशः)

---

प्रासङ्गिकं परिसमाप्य प्रकृतामेवोपासनां प्रकारान्तरेण वक्तुं प्रतिजानीते—

**अथ खल्वियं सर्वस्यै वाच उपनिषत्सर्वा ह्येवेमाः**
**सर्वस्यै वाच उपनिषद इमां त्वेवाऽऽचक्षते,** इति।

प्रासङ्गिकब्रह्मविद्याकथनानन्तर्यार्थेऽथशब्दः। वक्ष्यमाणोपासनायाः प्रसिद्ध्यर्थः खलुशब्दः। इयमनन्तरमेव वक्ष्यमाणोपनिषदुपासना **सर्वस्यै वाचः** संबन्धिनी। अकारादिक्षकारान्तानां मातृकामन्त्रगतानां सर्वेषां वर्णानामत्रोपा[3]सनीयत्वात्। यद्य-

---

१ ग. °पारे क°। २ क. ख. मुच्यते। ३ क. ख. °सनत्वा°। ग. °सनसत्वात्।

प्यस्मिन्नारण्यके प्रोक्ताः सर्वा अपि संहितोपासनाः कृत्स्नवाग्विषया एव तथाऽपि तद्-भिज्ञाः पुरुषा इमामेवोपनिषदं वक्ष्यमाणामुपासनामेव सर्वोत्कृष्टामाचक्षते ।

प्रतिज्ञातामुपासनां दर्शयति—

पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्मणो दिवः
स्वरा अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य
स्वरा ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः
सामवेदस्य स्वराश्चक्षुषो रूपं स्पर्शाः श्रोत्रस्यो-
ष्माणो मनसः स्वराः प्राणस्य रूपं स्पर्शा
अपानस्योष्माणो व्यानस्य स्वराः, इति ।

ककारादयो मकारावसाना वर्गपञ्चकनिष्ठा वर्णाः स्पर्शसंज्ञकाः । शषसहाश्चत्वार ऊष्मसंज्ञकाः । अकारादय औकारान्ताश्चतुर्दश स्वरसंज्ञकाः । एतेषु स्पर्शोष्मस्वरेषु पृथिव्यादिलोकदृष्टिरग्न्यादिदेवतादृष्टिर्ऋगादिवेददृष्टिश्चक्षुरादीन्द्रियदृष्टिः प्राणादिवायु-दृष्टिश्च कर्तव्या ।

अस्या उपासनाया अङ्गत्वेन स्वतन्त्रत्वेन वा वीणाध्यानं विधत्ते—

अथ खल्वियं दैवी वीणा भवति तदनु-
कृतिरसौ मानुषी वीणा भवति, इति ।

अथ पृथिव्यादिध्यानकथनानन्तरम् । खलुशब्दो वीणाप्रसिद्ध्यर्थः । इयमस्मा-भिर्दृश्यमाना शरीररूपा दैवी देवनिर्मिता काचिद्वीणा विद्यते । न हि देवव्यतिरे-केण कश्चिदपीमं देहं निर्मातुं क्षमते । या तु गायकैर्धार्यमाणा काष्ठमयी वीणा सा तु मनुष्यैर्निर्मितत्वान्मानुषी । असौ च तदनुकृतिर्भवति । तां दैवीं वीणामनुसृत्य कृतिर्निष्पादनं यस्याः सा तदनुकृतिः, तत्सदृशीत्यर्थः ।

शरीररूपायां[2] देववीणायाः काष्ठनिर्मिताया मानु[3]षवीणायाश्च सादृश्यं ध्यानाय दर्शयति—

यथाऽस्याः शिर एवममुष्याः शिरो यथाऽस्या
उदरमेवममुष्या अम्भणं यथाऽस्यै जिह्वैवममुष्यै
वादनं यथाऽस्यास्तन्त्रय एवममुष्या अङ्गुलयो
यथाऽस्याः स्वरा एवममुष्याः स्वरा यथाऽस्याः
स्पर्शा एवममुष्याः स्पर्शा यथा ह्येवेयं शब्दवती
तर्मवत्येवमसौ शब्दवती तर्मवती यथा ह्येवेयं

---

१ ग. °नुकृत्य । २ क. ख. ग. °या दैवीवीणा° । ३ क. ख. °नुषीवी° । ग. °नुष्याश्च ।

**लोमशेन चर्मणाऽपिहिता भवत्येवमसौ**
**लोमशेन चर्मणाऽपिहिता, इति ।**

अस्या अस्माभिर्दृश्यमानायाः शरीररूपाया दैव्या वीणाया ऊर्ध्वभागे[1] प्रसिद्धं शिरो यथा भवति एवममुष्या उपासकशरीराद्व्यतिरिक्तायाः[3] काष्ठनिर्मिताया मानुष्या वीणाया ऊर्ध्वभागे शिरो द्रष्टव्यम् । यो भागो गायकस्य वामांसमाश्रित्यावस्थित-स्तत्रालाबुखण्डोपेतत्वेन शिरसि आकारो दृश्यते । तदिदमेकं सादृश्यम् । उत्तराण्यपि सादृश्यान्येवं द्रष्टव्यानि । **अस्याः** शरीरवीणायाः प्रसिद्धोदरवदमुष्याः काष्ठवी-णाया **अम्भणं** वीणादण्डमध्यवर्ति च्छिद्रम् । शरीरवीणायामवस्थिता **जिह्वा** यथा स्वरोत्पत्तिहेतुस्तथैवामुष्यै[5] काष्ठवीणाया हस्तेन **वादनं** स्वरोत्पत्तिहेतुः । तन्त्रयोऽङ्गु-लय इति पदद्वयं व्यत्यासेन योजनीयम् । **अस्याः** शरीरवीणाया **अङ्गुलयो** यथा बहुविधा दीर्घा वर्तन्ते तथैवामुष्याः काष्ठवीणायास्तन्त्रयो दीर्घतन्तवः । **यथाऽस्याः** शरीरवीणायाः **स्वराः** कोष्ठाग्निप्रेरितवायोः संबन्धिविशेषेणोत्पन्नाः षड्जर्षभगान्धारा-दयो यथा वर्तन्ते तथैवामुष्याः काष्ठवीणायास्तत्तत्स्थानेष्वङ्गुलिधारणेन षड्जादिस्वरा आविर्भवन्ति । स्वराभिव्यक्त्यर्थं यथा शरीरमध्ये वायोः **स्पर्शविशेषाः** प्रयत्नात्संप-द्यन्ते तथा काष्ठवीणाया अङ्गुलिस्पर्शविशेषाः प्रयत्नसंपाद्याः । यथा चेयं शरीरवीणा **शब्दवती** स्वराभिव्यक्तिहेतुभूतध्वनियुक्ता **तर्द्मवती** तर्दनवती । धमनीभिः शरीरावय-वानां दृढबन्धनं तर्दनम् । तथैव[6] काष्ठवीणाऽपि **शब्दवती** स्वरविशेषाभिव्यक्तिहेतुभू-तध्वनियुक्ता । तथा **तर्द्मवती** तर्दनेन तन्त्रीणां दृढबन्धनेन युक्ता । यथा चेयं शरी रवीणा **लोमशेन** प्रभूतरोमाधारेण **चर्मणाऽपिहिता**ऽऽच्छादिता भवति **एवमसौ** काष्ठवीणाऽपि **लोमशेन** व्याघ्रादिचर्मणाऽऽच्छादिता भवति ।

नन्विदानींतनाः काष्ठवीणाश्चर्मणा न बध्यन्त इत्याशङ्क्याऽऽह—

**लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति, इति ।**

इदानीमत्र चर्मापिधानाभावेऽपि[7] पूर्वकाले देवलोकादौ तद्विद्यत इति द्रष्टव्यम् ।

वीणाध्यानस्य फलं दर्शयति—

**स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति**
**भूमिप्राऽस्य कीर्तिर्भवति यत्र क्वाऽऽर्या**
**वाचो भाषन्ते विदुरेनं तत्र, इति ।**

यः पुमान्मानुषवीणासादृश्यानुसंधानपुरःसरमेतां शरीररूपां दैवीं वीणामुपास्ते

१ क. °गे शि° । २ घ. ङ. °रीरव्यति° । ३ क. ख. °या मनुष्यवी° । ४ ङ. °रआ° ।
५ ग. घ. ङ. °मुष्याः का° । ६ घ. ङ. तद्वत्काष्ठ° । ७ घ. ङ. चर्मणाऽपि° ।

**सोऽयं श्रुतवदनः** सर्वजनश्रोत्रप्रियं वदनमुक्तिर्यस्यासौ श्रुतवदनो विद्वत्सभायां राजसभायां च सर्वेषां प्रियतमैर्वचनैरत्यन्तं रञ्जको भवति। तथाऽस्य **कीर्तिर्भूमिप्रा भूमेः पूरयित्री भवति।** सर्वस्यां भूमाववि[1]वादेन सर्वेऽपि[2] जना एनं विद्याधिकं मन्यन्त इत्यर्थः। किंच **यत्र क्व च** यस्मिन्कस्मिन्नपि देशे यस्मिन्कस्मिन्नपि ग्रामविशेषे **केचिदार्या** वेदशास्त्रपारं गतास्तदनुष्ठानपरा बहवः सभायामुपविश्य **भाषन्ते** विद्याप्रसङ्गं कुर्वन्ति तत्र तस्यां सभायामेनं **विदुः** सर्वज्ञोऽयमत्यन्तपण्डित इत्येनमुपासकं[3] स्मरन्ति।

वीणाध्यानफलोक्तिप्रसङ्गेन विद्वत्सभारञ्जनहेतुं मन्त्रविशेषं[4] विधत्ते—

**अथातो वाग्रसो यस्यां संसद्यधी-**
**यानो वा भाषमाणो वा न विरु-**
**रुचुषेत तत्रैतामृचं जपेत्,** इति।

**अथ** वीणोपास्ति[5]कथनानन्तरं **यतः** कारणात्फलोक्तिप्रसङ्गेन सभारञ्जनहेतुर्मन्त्रो बुद्धिस्थोऽतः कारणा**द्वाग्रसो** वाचः सारभूतो मन्त्रोऽभिधीयत इति शेषः। **यस्यां संसदि** विद्वत्सभाया**मधीयानो** वेदशास्त्रगोष्ठीं कुर्वाणः पुरुषो[6] राजसभायां **वा**[7] लौकिकान्युचितवाक्यानि **भाषमाणो**[8] **वा न विरुरुचुषेत** विशेषेण रुचिकरः सर्वजनानां रञ्जको यदि न भवेत्तत्र तस्यां सभायां रञ्जकत्वसिद्ध्यर्थ**मेतां** वक्ष्यमाणा**मृचं जपेत्त**न्मन्त्रपुरश्चरणादिकं कुर्यात्।

तामेतामृचं दर्शयति—

**ओष्ठापिधाना न कुलीदन्तैः परिवृता पविः।**
**सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः,** इति।

इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके द्वितीयाध्याये
पञ्चमः खण्डः॥ ५॥ (११)

**सर्वस्यै वाचो** वेदशास्त्रलौकिकोक्तिरूपस्य सर्वस्यापि वचनजातस्ये**शाना** स्वामिरूपा वाग्देवता **मां** सभारञ्जकोक्तिकाम**मिहास्यां** विद्वत्सभायां राजसभायां वा **चारु** शोभनं सर्वरञ्जकं यथा भवति तथा **वादयेत्।** संभाषं[9]कोक्ति[10] प्रेरयतु। कीदृशी वाग्देवता, **ओष्ठापिधाना न।** उपमार्थो नकारः[11]। ओष्ठद्वयमपिधानं वस्त्रवदाच्छादनं यस्या जिह्वादिस्थानगताया वाग्देवतायाः **सेयमोष्ठापिधाना।** ओष्ठयोराच्छादकवस्त्र-

---

१ क. ख. भूमौ वेदवि°। २ घ. ङ. देशेऽपि य°। ३ क. ख. °कं वदान्ति स्म°। ४ घ. ङ. °शेषमभिध°। ५ क. ख. °स्तिफलक°। ६ घ. ङ. °षो वा रा°। ७ घ. ङ. °वा स्तावका°। ८ घ. ङ. °णो न। ९ घ. ङ. °भात्र(ष)कोक्त्या प्रे°। १० ग. °षणोक्ति। ११ घ. ङ. °रः पठितः।

सादृश्यमेव न तु मुख्यमाच्छादकत्वमित्यभिप्रेत्योपमार्थो नकारः पठितः । **कुलीदन्तै**र्वज्रवद्धनीभूतैरन्तरालच्छिद्ररहितैर्दन्तैः **परिवृता** परितो वेष्टिता वाग्देवता । दन्तानां विरलत्वे सत्युच्चार्यमाणा वर्णा आभासा भवन्ति । पविर्वज्रवत्तीक्षणशब्दोच्चारणेऽत्यन्तं पट्वी देवतेत्यर्थः । अथवौष्ठेत्यादिविशेषणैर्देवता न प्रशस्यते, किं तु स्वकीयवाचि दोष उद्भाव्यते । अस्मिन्पक्षे नकारो निषेधार्थः । येयं मदीया वाक्संयमोष्ठाभ्यां बहिराच्छादिताऽतः कुलीदन्तैः परिवृता वेष्टिताऽतो बहिर्निर्गता सभां रञ्जयितुं न पविर्नात्यन्तं पटुरतः कारणाद्वाग्देवते **सर्वस्या** इत्यादिना त्वामहं प्रार्थये । इत्येवमुक्तो यो मन्त्रः सोऽयं **वाग्रसः** सर्वस्या वाचः सारभूतोऽवगन्तव्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( ११ )

---

अथ षष्ठः खण्डः । ( द्वादशः )

---

उपासनान्तरं विधातुं प्रजापतिवृत्तान्तमवतारयति—

**अथ हास्मा एतत्कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति,** इति ।

**अथ** यथोक्तसर्वसंहितोपास्तिकथनानन्तरं न्यूनातिरिक्तदोषसमीकरणार्थं किंचित्संहिताविषयमुपासनमुच्यत इति शेषः । यथा प्रधानयागेष्वनुष्ठितेषु पश्चात्स्विष्टकृदनुष्ठीयते तद्वदिदं द्रष्टव्यम् । हरितस्य पुत्रो हारीतः स च कृष्णवर्णस्तादृशः कश्चिन्महर्षि**रस्मै** स्वपुत्राय शिष्यार्थं **वैत**द्वक्ष्यमाणं **वाग्ब्राह्मणं** वाग्रूपसंहितोपास्तिविशेषविधायकं ब्राह्मणवाक्य**मुपोदाहरति** । रहस्यत्वेन समीपमागत्य कर्णे कथयति । इवशब्दोऽवधारणार्थोऽनर्थको वा । संहिताविषयमेव ब्राह्मणं न त्वन्यदित्यर्थः ।

प्रतिज्ञातं प्रजापतिवृत्तान्तप्रतिपा[illegible] ब्राह्मणं दर्शयति—

**प्रजापतिः प्रजाः सृ[illegible] [illegible]त संवत्सरः स च्छन्दोभिरात्मानं समदधाद्य[illegible] [illegible]ाभिरात्मानं समदधात्तस्मात्संहिता,** इति ।

**संवत्सरः प्रजापतिः** कालात्मकः परमेश्वरो देवतिर्यङ्मनुष्यरूपाः **प्रजाः सृष्ट्वा व्यस्रंसत** श्रमेण विस्रस्तावयवोऽभूत् । **स** पुनश्छन्दोभिर्वेदैरात्मानं सर्वावयवसंघातरूपं स्वशरीरं **समदधा**त्सम्यग्धारितवान्वेदोक्तमन्त्रपाठसामर्थ्येन स्वावयवपाटवं संपादितवानित्यर्थः । यस्मादयं छन्दोभिः स्वशरीरं समाहितवांस्तस्मात्समाधानहेतुत्वाच्छन्दःपाठः **संहिते**त्युच्यते ।

---

१ घ. ङ. °वद्विरलैर° । २ क. ख. पविः पविव° । ३ क. ख. °तुं नात्यन्तं प° । ४ घ. ङ. °गेऽनु° । ५ घ. ङ. °ते प° । ६ क. ख. °य चैत° । ७ क. ख. घ. ङ. °ज्ञातप्र° ।

इत्थं निर्वचनेन संहितां प्रशस्य तत्रोपासनविशेषं विधत्ते—

**तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा, इति।**

येयं वैदिकशब्दानामविच्छिन्नपाठरूपा संहिता तस्याः संहिताया णकारष्टवर्गपञ्चमो बलमिति ध्यायेत्। कादयो मावसानाः स्पर्शनामकाः पञ्च वर्गा ये सन्ति तेषु मध्यमवर्गस्थत्वाद्बलत्वं युक्तम्। "स्पृष्टं करणं स्पर्शानाम्" इति लक्षणानुसारेण दृढप्रयत्ननिष्पाद्याः स्पर्शवर्णाः। तथैवोष्मस्वन्तर्भूतस्य षकारस्य प्राणत्वध्यानं युक्तम्। "य ऊष्माणः स प्राणः" [ऐ० आ० ३ अ० २ ख० १] इत्येवमुपासनान्तरे पूर्वमभिहितत्वात्। प्राणत्वादेव जीवात्मत्वमपि संभवति। प्राणधारी हि जीवात्मा।

यथोक्तणकारषकारध्यानं प्रशंसति—

**स यो हैतौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदाऽऽयुष्यमिति विद्यात्, इति।**

यः कश्चित्संहितोपासक एतौ णकारषकारौ बलप्राणत्वेन ध्यातव्यावनुसंहितं या या संहिता तां सर्वामनुगताविति ध्यायन्नृचो वेद, ऋग्रूपान्मन्त्रान्पठेत्। स पुमान्स्वेनोपास्यां संहितां *बलसंहितां प्राणसंहितां चोपास्ते। अन्यथोपास्यमाना संहिता दुर्बला प्राणरहिता च प्रसज्येत। तस्मात्संहिताया आयुष्यस्थान[त्व]मिति निश्चिनुयात्।

इदानीं गुरुशिष्ययोः प्रश्नोत्तरमुखेन[ण] णकारषकारध्यानं द्रढयति—

**स यदि विचिकित्सेत्सणकारं ब्रवाणी३ अणकारा३ इति सणकारमेव ब्रूयात्सषकारं ब्रवाणी३ अषकारा३ इति सषकारमेव ब्रूयात्, इति।**

पूर्वग्रन्थे णकारषकारध्यानरहितानि संहितोपासनान्युक्तानि। अत्र तु तद्युक्तध्यानमुच्यते। अतः किं प्रशस्तमिति संदिहानः शिष्यो गुरुं प्रति पृच्छति। हे गुरो योऽहमुपासकः सोऽहं णकारध्यानसहितं यथा भवति तथा किं संहितामुच्चारयामि ध्यायामि किं वा तद्राहित्येन। सणकारं ब्रवाणी३। अणकारा३ इत्येतत्सानुनासिकं प्लुतिद्वयं विचारार्थम्। णकारध्यानसहितायाः संहितायाः प्रशस्तत्वात्तत्सहितं यथा भवति तथा संहितां ब्रूहीत्येवं गुरुः प्रत्युत्तरं ब्रूयात्। एवं षकारेऽपि योजनीयम्।

उक्तार्थस्य सांप्रदायिकत्वं दर्शयितुं माण्डूकेयस्य वचनमुदाहरति—

**यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयी-**

---

* बलसहितां प्राणसहितामिति पाठो युक्ततरः।

---

१ ग. कारणं। २ क. ख. ग. °ध्यानमुक्त°। ३ घ. ङ. °ष्मा स। ४ ग. °मि किं। ५ ग. प्लुतद्व°। ६ ग. °कारोऽपि। ७ घ. योजनीयः।

**यमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ता-**
**विति ह स्माऽऽह ह्रस्वो माण्डूकेयः, इति ।**

तां तां संहितां ध्यातव्यामनुप्राप्य वर्तत[1] इति णकारषकारध्यानमनुसंहितमित्युच्यते। तच्चानुसंहितमनुसंदधानास्ते प्रसिद्धा वयं ह्रस्वदेहा माण्डूकेयनामका उपासका **ऋचोऽधीमहे** संहितां पठाम इति यदस्ति । **किंच माण्डूकेयीयं** शूरवीरेण माण्डूकेयेन प्रोक्तं निर्भुजादिध्यानस्य प्राणवंशध्यानस्य च प्रतिपादकं पूर्वोक्त**मध्यायं** ग्रन्थविशेषं **प्रब्रूमः** प्रकृष्टध्यानसहितं यथा भवति तथा पठाम इति च यदस्ति **तेनो**भयेन सर्वसंहिताध्यानेन विशेषतो निर्भुजप्राणवंशध्यानेन च **नो**ऽस्माकं ह्रस्वानां **माण्डूकेयानां णकारषकारौ** बलप्राणरूपौ[2]वायुषो[3] वा हेतू **उपाप्तौ** सामीप्येन **प्राप्तावित्येवं माण्डूकेयस्य** वचनम् ।

तद्वच्छाकल्यवचनमप्युदाहरति—

**अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयी-**
**यमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ता-**
**विति ह स्माऽऽह स्थविरः शाकल्यः, इति ।**

ह्रस्वमाण्डूकेयवाक्यवद्व्याख्येयम् । तदिदं णकारषकारध्यानं सर्वेषु यागेषु स्विष्टकृद्धोम इव सर्वासु संहितोपासनास्वनुसंधेयमिति तात्पर्यार्थः ।

ननु साक्षात्कारपर्यन्तासु सर्वासूपासनासु नैरन्तर्येणोपासनीयत्वान्नित्य[4]नैमित्तिककर्मानुष्ठानलोपे प्रत्यवायः स्यादित्याशङ्क्योपासकव्यतिरिक्तविषयं तत्प्रत्यवायशास्त्रमुपासकस्य तूपासनमेव सर्वकर्मफलप्रापकमित्येतद्दर्शयति—

**एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः काव-**
**षेयाः किमर्था वयमध्येष्यामहे किमर्था**
**वयं यक्ष्यामहे वाचि हि प्राणं जुहुमः प्राणे**
**वा वाचं यो ह्येव प्रभवः स एवाप्ययः, इति ।**

**कवषस्य पुत्राः कावयेषा** बहवस्तेषां मध्ये केचित्त**देतद्विद्वांसः** पूर्वोक्तसंहितास्वरूपमुपासीना अन्ये केचिच्छास्त्रान्तरप्रसिद्धं तदेतत्सगुणं ब्रह्मोपासीना अपरे तु तदेतत्सर्ववेदान्तप्रसिद्धं ब्रह्मतत्त्वं साक्षात्कृतवन्तस्ते च सर्वे मिलित्वा परस्पर[5]मिदमाहुः । **वयं**[6] सर्वे यथोक्तोपासनेन ब्रह्मज्ञानेन च कृतकृत्याः सन्त इतः परं **किं** प्रयोजनमुद्दिश्य ब्रह्मयज्ञाध्ययनादिकं वा ज्योतिष्टोमादियागान्वा करिष्यामः । सर्वस्यापि पुरुषार्थस्य

---

१ ग. वर्तन्त । २ न. °रूपौ बलप्राणहेतुत्वादुपा° । ३ घ. ङ. °पायु° । ४ ग. °सनायां नित्य° । घ. ङ. °सनस्य नियतत्वा° । ५ क. ख. °रमा° । ६ क. ख. °यं च स° ।

संपन्नत्वान्नास्त्यस्माकमध्ययनयागाभ्यां प्रयोजनमित्यर्थः। अथापि श्रद्धाजडानां परितोषाय यद्यनुष्ठानमपेक्ष्येत तथाऽपि सायंप्रातःकालीनाग्निहोत्रद्वयवदस्माकं [1]स्वतःसिद्धं होमद्वयं सर्वदा प्रवर्तते। तद्यथा [2]का[3]लनिस्तारार्थं यदा वेदमधीमहे लौकिकं वा वृत्तान्तं भाषामहे तदानीमस्मदीयायां वाचि वह्निस्थानीयायां प्राणरूपं होमद्रव्यं जुहुमः। अथवा यदा तूष्णीं भवामो नि[4]द्रां कुर्महे तदानीं प्राणाख्ये वह्नौ च वाग्रूपं होमद्रव्यं जुहुमः। तदेतद्धोमत्वमु[5]पपद्यते। वाक्प्राणयोरन्यतरो यः पदार्थ इतरस्योद्भव उत्पत्तिहेतुः स एव कालान्तरे तस्याप्ययो लयहेतुर्भवति। वाच उपरमेण हि प्राणवृत्तिरुद्भवति तस्या एव वाचः प्रवृत्तौ प्राणवृत्तिर्लीयते। एवं प्राणस्योपरमेण वाग्वृत्तिरुद्भवति तथा प्राणस्य प्रवृत्तौ वाग्वृत्तिर्विलीयते। सोऽयं निरन्तरं पर्यायेणान्योन्यस्मिन्विलयो हुत[6]द्रव्यवददर्शनहेतुत्वाद्धोम इत्युच्यते। अतः श्रद्धाजडान्प्रति नित्यसिद्धो होमोऽस्तीति प्रतिपादनीयम्। विवेकिनं प्रति तु नास्त्येव कर्तव्यान्तरमिति बोधनीयमित्यर्थः। कौषीतकिनः—"तथा तस्य सायंतनं प्रातस्तनम्" [कौ० ] इत्यादिना यथोक्तपरस्परहोमस्य ध्येयत्वमामनन्ति। तद्वदत्रापि होमध्यानं वा द्रष्टव्यम्।

इदानीं संहिताविद्यायाः संप्रदानविधिरुच्यते—

**ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे तृतीयारण्यके द्वितीयाध्याये षष्ठः खण्डः ॥ ६ ॥ (१२)**

## इति बह्वृचब्राह्मणारण्यककाण्डे तृतीयारण्यके द्वितीयोऽध्यायः ॥ २ ॥

# इति बह्वृचब्राह्मणारण्यककाण्डे तृतीयारण्यकं समाप्तम् ॥ ३ ॥

ताः "अथातः संहिताया उपनिषत्" [ऐ० आ० ३ अ० १ ख० १] इत्यारभ्य प्रोक्ता एता णकारषकारध्यानपर्यन्ताः संहितोपासना अनन्तेवासिने शास्त्रोक्तशिष्यलक्षणरहिताय नोपदिशेत्। सत्स्वपि शिष्यलक्षणेषु गुरुसमीपे संवत्सरनिवासात्पूर्वं न ब्रूयात्। उक्तगुणद्वयसंपत्तावपि यः पुमान्प्रवक्ता न भवति शिष्यान्बोधयितुं सामर्थ्याभावादालस्याद्वा प्रवचनं शिष्योपदेशं न करोति तादृशाय च न ब्रूयात्। किंतु

---

१ क. ख. स्ववेदसि°। २ ग. °काले विस्ता°। ३ क. ख. °लविस्ता°। ४ घ. ङ. °द्रां वा कु°। ५ घ. ङ. °पपाद्य°। ६ घ. ङ. °द्रव्यादिदर्श°।

शिष्यलक्षणसंपन्नाय संवत्सरं गुरुसेविने शिष्योपदेशक्षमाय पुरुषाय ब्रूयादित्येवमाचार्यलक्षणसंपन्ना महान्त आचक्षते ।

आचार्यलक्षणं त्वेवं स्मर्यते—

"आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्तेन कीर्त्यते" इति ॥

निरुक्तकारोऽप्याह—"आचार्यः कस्मादाचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा " इति । अभ्यासोऽध्यायसमाप्त्यर्थस्तृतीयारण्यकसमाप्त्यर्थश्च ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये तृतीयारण्यके द्वितीयाध्याये षष्ठः खण्डः ॥ ६ ॥ ( १२ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

**इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यककाण्डभाष्ये तृतीयारण्यके द्वितीयोऽध्यायः ॥ २ ॥**

**इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य वैदिकमार्गप्रवर्तकस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणामात्येन विरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यककाण्डे तृतीयारण्यकं समाप्तम् ॥ ३ ॥**

---

( आदितः समष्ट्यङ्काः—आर० ३ अध्या० १४ ख० ६० )

# अथ चतुर्थमारण्यकम् ।

## प्रथमोऽध्यायः ।

### तत्र प्रथमः खण्डः ।

* यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
कथितोपनिषत्सर्वा महानाम्न्याख्यमन्त्रकाः ।
अरण्याध्ययनार्था[1] वै प्रोच्यन्तेऽथ चतुर्थके ॥ २ ॥

तेषां च मन्त्राणां विनियोग आश्वलायनसूत्रे द्रष्टव्यः । स चाऽऽश्वलायनः सप्तमाध्याये पृष्ठचषडहस्य[2] पञ्चमेऽहनि माध्यंदिने सवने मरुत्वतीयशस्त्रस्य कॢप्तेरूर्ध्वं[3] निष्केवल्यस्य शस्त्रस्य कॢप्तिं कुर्वन्नेवमाह[4]—“शाक्वरं चेत्पृष्ठं महानाम्न्यः स्तोत्रियस्ता अध्यर्धकारं नव प्रकृत्या[5] तिस्रो भवन्ति ताभिः पुरीषपदान्युपसंतनुयात्पञ्चाक्षरशः पूर्वाणि पञ्च सर्वाणि वा यथानिशान्तम्” इति । अस्य सूत्रवाक्यस्यायमर्थः—शाक्वरनामकं सामवेदप्रसिद्धं किंचित्सामास्ति तद्यद्युद्गातारः[8] पृष्ठस्तोत्ररूपेण गायेयुस्तदानीं महानाम्नीसंज्ञया व्यवह्रियमाणा “विदा मघवन्” [ऐ० आ० ४ अ० १ ख० १ इत्याद्या नवसंख्याका ऋचो याः सन्ति ताः सर्वा मिलित्वा स्तोत्रसंबन्धितया स्तोत्रि] यस्तृचा इत्यभिधीयन्ते । तिसृभिस्तिसृभिर्ऋग्भिर्मिलिताभिरेकैकस्यामृचि निष्पादितायां सत्यां प्रकृत्या स्वभावतो नवसंख्याका अपि संपादनेन तिस्र ऋचो भवन्ति । तादृशीस्ता[9] ऋचोऽध्यर्धकारं शंसेत् । अधिकमर्धं यस्या ऋचः सेयंमृगध्यर्धा[10] तामध्यर्धां कृत्वा शंसेत् । समाम्नातक्रमेणार्धत्रयं[11] पठित्वा तत्रावसाय पुनरर्धत्रयं पठित्वा तदन्ते प्रणवं कुर्यात् । अनेन प्रकारेण नवसंख्याकाः समाम्नाता ऋचः शस्त्वा ताभिर्नवभिर्ऋग्भिः सह पुरीषपदानि संयोजयेत् । अन्तिमेन प्रणवेन सह पठेत् । “एवा ह्येव” इत्यादयो नव मन्त्राः फलपूर्तिहेतुत्वात्पुरीषपदानीत्युच्यन्ते[12] । तेषु नवस्वाद्यानि पञ्चसंख्याकानि पुरीषपदानि पञ्चाक्षरशः शंसेत् । तद्यथा—“एवा

---

* एतस्मात्प्राक् ङ. पुस्तकेऽधिकं किंचित्तद्यथा—“तुरगाननमाश्रयाम्यहं सुरगन्धर्ववशिवेन्द्रकीर्त्यमानम् । उरगाधिपवाग्विलासलक्ष्मीं तरसैकेन मुखेन लज्जयन्तम्” इति ।

---

१ क. ख. °नार्थे ते प्रो° । २ क. ख. ग. °षळह° । ३ ग. क्लृप्तनि° । ४ ग. °न्नेवाऽऽह । ५ घ. ङ. प्रकृत्यां । ६ ग. °त्यास्तिस्रो । ७ ग. °त्रस्या° । ८ क. ख. °द्यदुद्गा° । ९ क. ख. °दृशस्ता । घ. ङ. °दृशस्तृचोऽ° । १० क. ख. ग. °यमध्य° । ११ घ. ङ. °म्नायक्र° । १२ ग. °त्युच्यते । ते° ।

ह्येव " इति पञ्चाक्षराणि पठित्वा सकृदवसाय पश्चात् "एवा ह्यग्ने" इत्येतानि पञ्चाक्षराणि पठेत्। यद्यप्यत्रोभयत्र चत्वार्येवाक्षराणि दृश्यन्ते तथाऽपि हिशब्दमेवशब्दं च विश्लिष्टं कुर्यात्। तथोत्तरत्रापि हिशब्दमग्निशब्दं च संधिरहितं कृत्वा पञ्चाक्षरत्वं द्रष्टव्यम्। अनेन प्रकारेण पञ्च मन्त्रान्पठित्वा पश्चात् " एवा हि शक्र " इत्यादींश्चतुरो मन्त्रान्मध्ये विच्छेदमकृत्वा पठेत्। यद्वा सर्वानपि नव मन्त्रानेतान्यथानिशान्तं यथासमाम्नायमध्ययनपाठक्रमेणैव पठेत्। न तु मन्त्रस्य मध्येऽवसानं कर्तव्यमिति। सोऽयं सूत्रोक्तो मन्त्राणां विनियोगः।

तत्र नवस्वृक्षु प्रथमामृचमाह—

**विदा मघवन्विदा गातुमनु शंसिषो दिशः।**
**शिक्षा शचीनां पते पूर्वीणां पुरूवसो, इति।**

हे **मघवन्**निन्द्र *[2]**विद** वेत्सि। अत्र वेदनस्य कर्मकारकस्य कस्यचिद्विशेषस्यानुपपादनात्सामान्याकारेण सर्वं जानासीत्ययमर्थो लभ्यते। यस्मात्सर्वज्ञस्त्वं तस्माद्गातु यजमानेन गन्तव्यमार्गं [3]**विद** वेत्सि जानासि। ततो यजमानस्य समीचीनेन मार्गेण स्वर्गं गन्तुं **दिशो** मार्गोपयुक्तान्दिग्विशेषान**नुशंसिषो**ऽनुक्रमेण शंसोपदिश। किंच **पूर्वीणां** पूर्वसिद्धानां **शचीनां**[4] शक्तीनां **पते** हे पालक पुरु प्रभूतं वसु धनं यस्यासौ **पुरूवसु**स्तत्संबोधनं हे **पुरूवसो** [5]**शिक्ष**[6] यजमानस्य हितोपदेशं कुरु। सर्वशक्तिमत्त्वेन प्रभूतधनत्वेन च हे इन्द्र त्वं यजमानं समीचीने कर्मणि प्रवर्तयितुं तत्फलं दातुं च प्रभवसीत्यर्थः।

द्वितीयामृचमाह—

**आभिष्टमभिष्टिभिः प्रचेतन प्रचेतय।**
**इन्द्र द्युम्नाय न इष एवा हि शक्रः, इति।**

प्रकृष्टा चेतना बुद्धिर्यस्यासौ प्रचेतनः। हे **प्रचेतना**ऽऽ**भि**र्यजमानेन क्रियमाणाभिर**भिष्टिभि**स्तवाभीष्टाभिः स्तुतिभिः **प्रचेतय** प्रकर्षेण यजमानसेवां जानीहि। **हे इन्द्र** त्वं **नो**ऽस्माकं द्युम्नाय धनलाभाये**षे**ऽन्नलाभाय च **शक्रः** शक्तिमानेव **हि**। तस्मात्प्रचेतयानुगृहाणेत्यर्थः।

तृतीयामृचमाह—

**राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे।**

* छान्दसो दीर्घो मूले। एवमग्रेऽपि।

१ घ. ङ. °थाम्रा°। २ क. ख. विदा। ग. विदा त्वं वे°। ३ क. ख. ग. विदा। ४ घ. ङ. °नां प°। ५ क. ख. हे इन्द्र पा°। ६ क. शिक्षा।

मंहिष्ठ वज्रिन्नृञ्जस आयाहि पिब मत्स्व, इति ।

हे वज्रिवो वज्रयुक्तेन्द्र राये धनलाभाय वाजायान्नलाभाय च प्रसन्नो भवेति शेषः । हे शविष्ठातिशयेन बलवन्वज्रिन्वज्रयुक्तेन्द्र, ऋञ्जसे वर्जयस्यनिष्टं परिहरसीत्यर्थः । हे मंहिष्ठातिशयेन पूज्य वज्रिन्वज्रयुक्तेन्द्र ऋञ्जसे सर्वथा त्वमनिष्टं परिहरसि । तस्मात्कारणादायाह्यस्मिन्कर्मण्यागच्छ । आगत्य च सोमं पिब । पीत्वा च मत्स्व हृष्टो भव ।

चतुर्थीमृचमाह—

विदा रायः सुवीर्यं भुवो वाजानां पतिर्वशाँ अनु ।
मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् , इति ॥

हे इन्द्र रायो धनस्य सुवीर्यं शोभनसामर्थ्यं विद वेत्सि जानासि, अतो धनसाराभिज्ञत्वाद्भुवो भूलोकस्य वाजानां तत्रत्यानामन्नानां च पतिः पालकस्त्वं वशाँ अनु वश्यांस्त्वदधीनान्यजमानाननुगृहाण । हे मंहिष्ठातिशयेन पूज्य वज्रिन्वज्रयुक्तेन्द्र यस्त्वं शूराणां मध्ये शविष्ठोऽतिशयेन बलवांस्तादृशस्त्वमृञ्जसेऽनिष्टं वर्जयसि । यद्वाऽभीष्टं साधयसि । "ऋञ्जतिः प्रसाधनकर्मा" इति निरुक्तेऽभिधानात् ।

पञ्चमीमृचमाह—

यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय ।
इन्द्रो विदे तमु स्तुषे वशी हि शक्रः , इति ।

हे चिकित्वोऽस्मत्सेवाभिज्ञेन्द्र यस्त्वं मघोनां धनवतां मध्ये मंहिष्ठोऽतिशयेन पूज्यस्तादृशस्त्वं नोऽस्मानभिनय सर्वतो धनं प्रापय । इन्द्रः परमैश्वर्ययुक्तस्त्वं विदे वेत्सि जानासि । अतस्तमु तमपि यजमानं स्तुषे स्तौषि सम्यग्घविर्दत्तवानिति प्रशंससि । त्वं तु वशी सर्ववस्तुविषयवशीकारवान् । अत एव शक्रः शक्तिमान्हि । तस्मात्त्वैतद्यजमानानुग्रहणं युक्तमित्यर्थः ।

षष्ठीमृचमाह—

तमूतये हवामहे जेतारमपराजितम् ।
स नः पर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् , इति ।

तमिन्द्रमूतयेऽस्मद्रक्षार्थं हवामह आह्वयामः । कीदृशं सर्वत्र युद्धेषु जेतारं काप्यपराजितम् । स तादृश इन्द्रो नोऽस्माकं द्विषः शत्रूनतिपर्षदतिशयेन विनाशयतु । योऽयं क्रतुरस्माभिरनुष्ठीयमानो यदपि च्छन्दो गायत्र्यादिकमस्माभिः प्रयुज्यमानं यदप्यृतं कर्मफलं तत्सर्वं बृहत्समृद्धमिति शेषः ।

---

१ क. घ. ङ. °सि महाध° । २ क. ख. ग. °न्यायेक° ।

सप्तमीमृचमाह—

इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ।
स नः पर्षदति द्विषः स नः पर्षदति स्रिधः, इति ।

धनस्य सातये लाभाय जयोपेतं पराजयरहितमिन्द्रं हवामह आह्वयामः । स चेन्द्रोऽस्माकं शत्रुनतिशयेन विनाशयतु । ये त्वन्ये स्वयं द्वेषं न कुर्वन्ति तथाऽपि स्रिधोऽस्माभिर्द्वेष्यास्तानप्यतिशयेन विनाशयतु । सर्वत्र हि वेदेषु "योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः" [ कौषी० २ । ८ ] इत्यादौ द्वेष्याणां द्वेष्टॄणां च विनाशः प्रार्थ्यते ।

अष्टमीमृचमाह—

पूर्वस्य यत्ते अद्रिवः सुम्न आधेहि नो वसो ।
पूर्तिः शविष्ठ शस्यत ईशे हि शक्रः, इति ।

हेऽद्रिवोऽद्रयः पर्वता अस्य सन्तीत्यद्रिवान् । इन्द्रो हि पर्वतान्भिनत्ति, अतः पर्वतेन्द्रयोर्भेद्यभेदकत्वलक्षणः संबन्धः । यद्वाऽद्रिरादरणं तद्युक्त हे इन्द्र पूर्वस्यास्मदुत्पत्तेः पूर्वसिद्धस्य ते तव यद्धनमस्ति हे वसो निवासहेतो, इन्द्र तस्मिन्सुम्ने धने नोऽस्मानाधेहि स्थापय । हे शविष्ठातिशयेन बलयुक्त पूर्तिस्त्वदीयधनपूरणं शस्यते सर्वैर्यजमानैः प्रशस्यते । प्रशंसाप्रकार एव प्रशस्यते—शक्रः शक्तिमानिन्द्र ईशे हि सर्वस्यास्मद्रक्षणस्येष्टे खलु । सेयं प्रशंसा ।

नवमीमृचमाह—

नूनं तं नव्यं संन्यसे प्रभो जनस्य वृत्रहन् ।
समन्येषु ब्रवावहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः, इति ।

हे वृत्रहन्[२]वृत्रघातिञ्जनस्य प्रभो सर्वस्य जन्तोः स्वामिन्नव्यं नूतनं वलीपलितादिलक्षणेन पुराणत्वेन वर्जितमिन्द्रं तं त्वां नूनमवश्यं संन्यसे सम्यङ्नितरां प्रक्षिपामि । अस्मिन्कर्मणि हविषो भोक्तृत्वेन स्थापयामि । त्वं चाहं चेत्यावामुभावन्येषु परस्परं सम्यक्प्रब्रवावहै । इतरेषु यजमानेष्वहं गत्वा प्रभूतफलप्रदोऽयमिन्द्र इत्येवं प्रब्रवीमि । इतरेषु देवेषु त्वं गत्वा सम्यगनुष्ठाताऽयं यजमान इति प्रब्रूहि । यो यजमानोऽस्ति सोऽयं दक्षिणारूपेण दातव्यासु गोषु शूरो गच्छति । उदारः सन्प्रवर्तते । इत्येवं मदीयं गुणं त्वं प्रब्रूहि । इन्द्रोऽयं सखा सखिवदत्यन्तं स्निग्धः । सुशेवः सुष्ठु सेवितुं शक्यः । अद्वया एतत्सदृशो द्वितीयो देवो नास्तीत्येवमहं ब्रवीमि ।

---

१ क. ख. °द्रिर्विधार° । घ. ङ. °द्रिता धर° । २ घ. ङ. °हञ्शत्रुघा° ।

तदेवमृचो नव व्याख्याताः। अथ नव पुरीषपदानि व्याख्येयानि । तत्र प्रथमं पदमाह—

एवा ह्येवैवा ह्यग्ना३इ, इति ।

"इण् गतौ" [अदा० ग० प०] इत्यस्माद्धातोराङ्पूर्वान्निष्पन्न एवशब्द आगमनवाची। हेऽग्न एवा ह्येवं सर्वथा समागच्छ। द्विरुक्तिः प्लुतिश्चाऽऽदरार्थौ। एकारस्य स्थाने प्लुतिरिकारोत्तरा व्याकरणे विहिता[2]।

अनन्तराणि चत्वारि पदान्याह—

एवा ह्येवैवा हीऽइन्द्रम्। एवा ह्येवैवा हि विष्णा३उ।
एवा ह्येवैवा हि पूष३न्। एवा ह्येवैवा हि देवा३ः, इति।

प्रथमपदवद्व्याख्येयम्।

षष्ठं पदमाह—

एवा हि शक्रो वशी हि शक्रो वशाँ अनु, इति।

शक्रः शक्तिमानिन्द्र एवा हि, आगतः खलु। स च शक्रो वशी हि सर्ववस्तुवशीकारवान्खलु। तादृशो देवो वशाँ अनु स्वस्य वश्यान्यजमानाननुगृह्णातु।

सप्तमं पदमाह—

आ यो मन्याय मन्यव उपो मन्याय मन्यवे, इति।

य इन्द्रो मन्याय मन्यवे मन्तव्यमस्मद्धितं मन्तुमा यज्ञे समागच्छति स इन्द्रो मन्याय मन्तव्यमस्मद्धितं मन्यवे मन्तुमुपो अस्मत्समीप एव तिष्ठतु।

अष्टमं पदमाह—

उपेहि विश्वध, इति।

हे विश्वध विश्वस्य धारकेन्द्रोपेह्यस्मत्समीपे प्राप्नुहि।

नवमं पदमाह—

विदा मघवन्विदो३म्, इति॥

इत्यैतरेयब्राह्मणारण्यककाण्डे चतुर्थारण्यके प्रथमाध्याये प्रथमः खण्डः॥ १॥

## इति बह्वृचब्राह्मणारण्यककाण्डे चतुर्थारण्यके प्रथमोऽध्यायः॥ १॥

## इति बह्वृचब्राह्मणारण्यककाण्डे चतुर्थमारण्यकं समाप्तम्॥ ४॥

---

१ क. ख. घ. ङ. 'व हि स'। २ ग. 'रो व्या'।

हे मघवन्[1]धनवन्निन्द्र विद्[2] वेत्थ सर्वं जानासि । अतोऽस्मद्धितं विद[3] विद्धि जानीहि चित्तेऽवधारय । ॐ, अस्तु श्रेयोऽस्माकमिति शेषः । तदिदं नवसंख्याकानामृचां पुरीषपदानां च प्रतिपादकं ग्रन्थजातं यद्यपि कर्मकाण्डे पठितुं युक्तं तथाऽप्यरण्य एवाध्येतव्यमित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये चतुर्थारण्यके प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यककाण्डभाष्ये चतुर्थारण्यके प्रथमोऽध्यायः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य वैदिकमार्गप्रवर्तकस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणामात्येन विरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यककाण्डे चतुर्थमारण्यकं समाप्तम् ॥ ४ ॥

---

आदितः समष्ट्यङ्काः—( आर० ४ अध्या० १५ ख० ६१ )

---

१ ङ. 'वन्बलव' । २ कं. ख. ग. विदा । ३ क ख. ग. विदा ।

# अथ पञ्चममारण्यकम् ।

## प्रथमोऽध्यायः ।

### तत्र प्रथमः खण्डः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
ऐतरेयब्राह्मणेऽस्ति काण्डमारण्यकाभिधम् ।
महाव्रतप्रयोगोऽस्मिन्पञ्चमा*रण्यकोदितः ॥ ३ ॥

त्रिविधं महाव्रताख्यं कर्म, एकाहरूपं महानाम्न्यवयवरूपं स[1]त्रावयवरूपं चेति । तस्य त्रिविधस्यापि हौत्रप्रयोगं वक्तुमुपक्रमते—

**महाव्रतस्य पञ्चविंशतिं सामिधेन्यः, इति ।**

ननु प्रथमारण्यकेऽपि—"अथ महाव्रतमिन्द्रो वै वृत्रं हत्वा" [ऐ० आ० १ अ० १ ख० १ ] इत्यादिना महाव्रतप्रयोगोऽभिहितः, पञ्चमेऽपि तस्यैवाभिधाने पुनरुक्तिः स्यात् । नायं दोषः । सूत्रब्राह्मणरूपेण तयोर्विभेदात् । पञ्चमारण्यकमृषिप्रोक्तं सूत्रम् । प्रथमारण्यकं त्वपौरुषेयं ब्राह्मणम् । अत एव तत्रार्थवादप्रपञ्चेन सहिता विधयः श्रूयन्ते । पञ्चमे तु न कोऽप्यर्थवादोऽस्ति । शाखान्तरगताश्च मन्त्रा बहव उपलभ्यन्ते । तस्मात् " अथैतस्य समाम्नायस्य " [ श्रौ० सू० अ० १ ख० १ ] इत्यादिद्वादशाध्यायीवत् " महाव्रतस्य पञ्चविंशतिम् " इत्यादि पञ्चमारण्यकं सूत्रमेव । अरण्य एवैतदध्येयमित्यभिप्रेत्याध्येतारोऽरण्यकाण्डेऽन्तर्भाव्याधीयते । एतस्मिन्पञ्चमारण्यके सूत्रकारेण विधीयमानं महाव्रताख्यं कर्म गवामयने सत्रे समुत्पन्नम् । अत एवाध्वर्युशाखायाम्—"गावो वा एतत्सत्रमासत" इत्यादिके गवामयनप्रकरणे—" देवानां वा अन्तं जग्मुषाम् " इत्यादिकेनानुवाकत्रयेण महाव्रतं समाम्नातम् । ननु तस्यामेव शाखायां ग्रन्थान्तरे—"प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत्" इत्यनुवाकेन तदाम्नातमिति चेदाम्नायतां नाम तस्याप्यनुवाकस्य गवामयनप्रकरणगतत्वात् । "[3]नैवैतान्यहानि

---

* अत्राऽऽरण्यकपदार्थ एकदेशभूतेऽस्मिन्नित्यस्यान्वयः । अयं च नातीव समञ्जसः । तथाऽपि भाष्य एतादृशप्रयोगस्यापि सत्त्वात्कथंचिदत्रापि साधुत्वम् ।

---

१ घ. ङ. सत्त्व° । २ घ. ङ. °णयो° । ३ ग. ङ. न चैता° ।

भवन्ति ” इत्यादिके गवामयनप्रतिपादकेऽनुवाकपञ्चके—“ प्रजापतिः प्रजाः सृष्ट्वा ” इत्याद्यनुवाकः पञ्चमत्वेनाऽऽम्नातः । उद्गातृवेदेऽपि “ गावो वै ” इत्यारभ्य समाम्नाते गवामयनप्रकरणे—“ प्रजापतिः प्रजा असृजत ” इत्यादिना महाव्रताख्यमेकमहराम्नातम् । तच्च[1] सत्रस्योपान्त्यमहः, उदयनीयाख्यादन्तिमादह्नः समनन्तरपूर्वभावित्वात् । तथा चाऽऽपस्तम्बः—“ संतिष्ठते महाव्रतम् ” इत्येतदहः समाप्यानन्तरं व्याख्यात उदयनीय इत्युदयनीयाख्यं चरममहः प्रोवाच । तस्मात्सत्रे समुत्पन्नस्य महाव्रतस्य वचनबलात्सत्राद्बहिरप्येकाहरूपेणाहीनगतत्वेन च पृथक्प्रयोगो भवति । यथा राजसूयोत्पन्नाया अवेष्टेर्वचनात्पृथगपि प्रयोगः, यथा वा राजसूयोत्पन्नानां चातुर्मास्यानाम् “ अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ” इतिवचनेन पृथक्प्रयोगस्तद्वत् । एकाहत्वपक्षे स्वातन्त्र्यम् । अहीनत्वपक्षे तु पौण्डरीकनाम्न एकादशरात्रस्येदं दशममहर्भवति । तथा चाऽऽपस्तम्बः[2]—“अथैकेषामभ्यासाय[3] पञ्चाहश्चत्वारश्छन्दोगा महाव्रतं विश्वजित्सर्वपृष्ठोऽतिरात्रः ” इति पौण्डरीकाहःक्लृप्तिमुक्तवान् । अथ सत्रे समुत्पन्नं महाव्रतं प्रकृतिः । एकाहरूपमहीनरूपं च विकृतिः । अतः सत्रगतस्य[4] महाव्रतस्य प्राधान्येन प्रयोग इहोपदिश्यते । ननु तस्यापि महाव्रतस्य परम्परयाऽग्निष्टोमविकृतित्वेन सोमयागरूपत्वम्, सोमयागे च स्तोत्रशस्त्रादिवत्सामिधेनीनामङ्गत्वाभावात् “ पञ्चविंशतिं सामिधेन्यः ” इति विधानमयुक्तमिति चेत् । नायं दोषः । सोमस्य सामिधेन्यपेक्षाराहित्येऽपि तदङ्गभूतस्य सवनीयपशोस्तदपेक्षत्वात्[5] “ आनर्थक्यात्तदङ्गेषु ” [ मी० सू० अ० ३ पा० १ सू० १८ अधि० ९ ] इति न्यायेन प्रधानेनान्वयरहितत्वेऽपि[6] तदङ्गान्वयोपपत्तेः । अतोऽङ्गद्वारा सामिधेनीनां महाव्रतसंबन्धान्महाव्रतस्येति संबन्धवाचिनी[7] षष्ठी युज्यते । पञ्चविंशतिमिति द्वितीया प्रथमात्वेन परिणेतव्या । सामिधेन्यभिधा ऋचः पञ्चविंशतिसंख्याका इत्यर्थः । सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः । तथाचोक्तम्—“ ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ” [अम० को० ब्र० व० श्लो० २२] इति । सवनीयस्य पशोः प्रोक्षणादूर्ध्वमध्वर्युणा प्रेषितो होता सामिधेनीरनुब्रूयात् । तथाचाऽऽपस्तम्ब आह—“ उपरिष्टादधस्तात्सर्वतश्च प्रोक्ष्य[8] वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते[9] ” इति ।

तासु सामिधेनीषु पञ्चविंशतिसंख्यापूरणप्रकारं दर्शयति—

**एकविंशतौ प्रागुपोत्तमायाः समिधाऽग्निमिति चतस्रः, इति ।**

---

समिधाऽग्निम्०—ऋ० सं० म० ८ सू० ४४ ऋ० १ ।

---

१ ग. °च्च सूत्र° । २ ख. ग. घ. ङ. °स्तम्बो यैके° । ३ क. ख. ङ. °भ्यासां यः प° । ४ ग. घ. सत्राग° । ५ ख. ग. ङ. °यस्तोत्रस्य तद° । ६ ग. ङ. °तत° । ७ ग. ङ. °बन्धिवा° । ८ ग प्रेक्ष्य । ९ ङ. °तिपाद्य° ।

मूलप्रकृतौ दर्शपूर्णमासेष्टौ " प्र वो वाजाः " [ ऋ० सं० म० ३ सू० २७ ऋ० १ ] इत्याद्या ऋच एकादशसंख्याकाः सामिधेनीरूपाः शाखान्तर एकस्मिन्नश्चिदनुवाके समाम्नाताः । बह्वृचानां तु तत्र तत्राऽऽम्नाताः । तासामेकादशानां मध्ये " त्रिः प्रथमामन्वाह त्रिरुत्तमाम् " इति वचनानुसारेणाऽऽवृत्तौ सत्यां पञ्चदश संपद्यन्ते । ताश्चातिदेशपरम्परया गवामयनगते विषुवन्नामके मध्यमेऽह्नि सवनीयपशौ प्राप्ताः । तासां पञ्चदशानां मध्ये " समिध्यमानो अध्वरे " [ ऋ० सं० म० ३ सू० २७ ऋ० ४ ] " समिद्धो अग्न आहुत " [ ऋ० सं० म० ९ सू० २८ ऋ० ९ ] इत्यनयोर्ऋचोरन्तराले " पृथुपाजा अमर्त्यः " [ ऋ० सं० म० ३ सू० २७ ऋ० ९ ] इत्यादिकाः षडृचः प्रक्षेपणीयाः । तथा चाऽऽश्वलायन आह—पृथुपाजा अमर्त्य इति षड्धाय्याः सामिधेनीनाम्" इति । सेयमेकविंशतिर्विषुवदहर्गता महाव्रते चोदकेन प्राप्ता । तस्यामेकविंशतौ येयमुपोत्तमा—"समिद्धो अग्न आहुत" इत्येवंरूपा तस्याः पूर्वम् "समिधाऽग्निं दुवस्यत" [ऋ० सं० म० ८ सू० ४४ ऋ० १] इत्याद्याश्चतस्र ऋचः प्रक्षेपणीयाः । तथा च सति पञ्चविंशतिसंख्या पूर्यते ।

ता एताः सामिधेन्यो यस्य पशोरङ्गं तमिमं दर्शयति—

**वैश्वकर्मण ऋषभ उपालम्भनीय उपांशु, इति ।**

विश्वकर्मा देवता यस्यासौ वैश्वकर्मण[2] ऋषभः समर्थ उप समीप आलम्भनीयः । ऐतरेयिणामयं पशुः समुच्चीयते । इतरशाखिनां तु विकल्पः । तदैताः सामिधेन्यो न भवन्ति । सप्तदशोष्टिपश्वाधानमिति सप्तदशैव सामिधेन्यो भवन्ति । तस्मिन्पशौ याज्यादिमन्त्रा उपांशु यथा भवन्ति[3] तथा प्रयोक्तव्याः । उपांशुरूपस्योच्चारणस्य लक्षणं प्रातिशाख्येऽभिहितम्—" करणवदशब्दं मनःप्रयोगमुपांशु " इति । करणवदोष्ठव्यापारयुक्तं न तु मनःप्रयोगमात्रम् । तच्च परैरश्रवणादशब्दम् ।

अतः प्रातःसवने होतुः शस्त्रं दर्शयति—

**आज्यप्रउगे विश्वजितः, इति ।**

यदेतदाज्यनामकं प्रातःसवने होतुः शस्त्रं यच्च प्रउगनामकं तदुभयं विश्वजिन्नाम्न एकाहादस्मिन्महाव्रतेऽतिदिशेत् । स च विश्वजिदाख्य एकाहोऽग्निष्टोमस्य विकृतिः । अग्निष्टोमे हुतग्रहभक्षणादूर्ध्वं होता निवित्पदान्युच्चार्य "प्र वो देवाय" [ ऋ० सं० म० ३ सू० १३ ऋ० १ ] इत्यादिकमाज्यनामकं शस्त्रं शंसेत् ।

---

१ ग. °षुवाह° । २ क. ख. घ. ङ. °र्मणः । तस्मि° । ३ क. ख. भवति । ४ क. °शब्दममनः° । ५ ग. °काहादग्नि° ।

तथा चाऽऽश्वलायन आह—"उत्तमेन पदेन प्र वो देवायेत्याज्यमुपसंतनुयात्" इति । वैश्वदेवग्रहणादूर्ध्वम्—"वायुरग्रेगाः" इत्यादिकं प्रउगनामकं शस्त्रं शंसेत् । तदप्याश्वलायनेनोक्तम्—"वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात्तृचं तृचं शंसेद्वायवायाहि दर्शतेति सप्त तृचा द्वितीयां प्रउगे त्रिः" इति । तदिदं[1] शस्त्रद्वयं विश्वजिति चोदकेन प्राप्तम् । तत्र तदाज्यमपोद्यान्यदाज्यं सूत्रेण[2] विहितम्—"विश्वजितोऽग्निं नर इत्याज्यम्" इति । प्रउगं तु प्राकृतमेव । तदिदं विश्वजिद्गतमुभयं महाव्रते शंसनीयम् ।

मैत्रावरुणादीनां शस्त्रविशेषान्दर्शयति—

**होत्राश्चतुर्विंशात्**, इति ।

मैत्रावरुणो ब्राह्मणाच्छंस्यच्छावाकश्चेति त्रयो होत्रकास्तैः शंसनीयाः शस्त्रविशेषा होत्रास्त(स्तेः?)त्र चतुर्विंशन्ना(ना)मकादेकाहादतिदेष्टव्याः । मूलप्रकृतौ त्वग्निष्टोमे मैत्रावरुणस्य "आ नो मित्रावरुणा" [ ऋ० सं० म० ३ सू० ६२ ऋ० १६ ] इत्यादिकं शस्त्रम् । ब्राह्मणाच्छंसिनस्तु "आयाहि सुषुमा हि ते" [ ऋ० सं० म० ८ सू० १७ ऋ० १ ] इत्यादिकं शस्त्रम्, अच्छावाकस्य "इन्द्राग्नी आगतम्" [ ऋ० सं० म० ३ सू० १२ ऋ० १ ] इत्यादिकम् । चतुर्विंशे तु तानि त्रीण्यपोद्यान्यानि विहितानि—"ता नः शक्तं पार्थिवस्य" [ऋ० सं० म० ९ सू० ६८ ऋ० ३ ] इत्यादिकं मैत्रावरुणस्य । "सुरूपकृत्नुमूतये" [ ऋ० सं म० १ सू० ४ ऋ० १ ] इत्यादिकं ब्राह्मणाच्छंसिनः, "आ सु ते सिञ्चत श्रियम्" [ ऋ० सं० म० ८ सू० ७२ ऋ० १३ ] इत्यच्छावाकस्य । त एते शस्त्रविशेषा होत्रशब्दाभिधेया महाव्रते पठनीयाः ।

अथ चतुर्विंशाख्यादेकाहादप्यधिकं विशेषं महाव्रते दर्शयति—

**ईङ्खयन्तीरपस्युव इति च ब्राह्मणाच्छंस्यावपेत प्रातःसवने तीव्रस्याभिवयसो अस्य पाहीति माध्यंदिनः**, इति ।

अत्र प्रातःसवने स एव ब्राह्मणाच्छंसी पूर्वोक्तम् "सुरूपकृत्नुम्" इत्यादिकं पठित्वा पश्चात् "ईङ्खयन्तीः" [ ऋ० सं० म० १० सू० १५३ ऋ० १ ] इत्यादिकमपि पञ्चर्चमावपेत । तथा माध्यंदिने सवने स एव ब्राह्मणाच्छंसी चतुर्विंशादतिदेशेन प्राप्तम् "आ नो विश्वा सुहव्यः" [ ऋ० सं० म० ८ सू० ९० ऋ० १ ] इत्यादिकं पठित्वा पश्चात् "तीव्रस्याभिवयसः" [ ऋ० सं० म० १० सू०

---

ईङ्खयन्तीरपस्युवः०—ऋ० सं० म० १० सू० १५३ ऋ० १ । तीव्रस्याभिवयसः०—ऋ० सं० म० १० सू० १६ ऋ० १ ]

---

१ क. ख. ङ. सूत्रे । २ ङ. पठितम् ।

१६० ऋ० १ ] इत्यादिकं पञ्चर्चं पठेत् । अत्रोभयत्र सूक्तप्रतीकाभिप्रायेण पञ्चर्चमिति कैश्चिद्व्याख्यातम् । अन्ये[1] तु "ऋचं पादग्रहणे" इतिपरिभाषानुसारेणैकैकामृचं पठेदिति व्याचक्षते ।

अस्मिन्नेव शस्त्रे ब्राह्मणान्तरानुसारेण कंचिद्विशेषं दर्शयति—

त्रिकद्रुकेषु महिषो यवाशिरमिति स्तोत्रिय एन्द्र याह्युप नः परावत इन्द्राय हि द्यौरसुरो अनम्नत प्रोष्वस्मै पुरोरथमित्यतोऽनुरूपः, इति ।

स्तोत्रसंबन्धी[2] स्तोत्रियस्तृचः । "एकं साम तृचे क्रियते स्तोत्रियम् " इति सामगैराम्नानात्तृचस्य स्तोत्रियत्वम् । "त्रिकद्रुकेषु" [ऋ० सं० म० २ सू० २२ ऋ० १] इत्यादिकस्तृचः शस्त्रस्याऽऽदौ प्रयोक्तव्यः । अनु पश्चाद्रूप्यते पठ्यत इति द्वितीयोऽनुरूपस्तृचः । तस्मिन् " एन्द्र याहि " [ ऋ० सं० म० १ सू० १३० ऋ० १ ] इत्यृक्प्रथमा । "इन्द्राय हि द्यौः" [ ऋ० सं० म० १० सू० १२७ ऋ० १ ] इति द्वितीया । " प्रोष्वस्मै " [ ऋ० सं० म० १० सू० १३३ ऋ० १ ] इति तृतीया । तावेतौ द्वौ तृचौ शस्त्रस्याऽऽदौ पठेदित्यर्थः ।

अथ माध्यंदिने[3] सवने होतुः शस्त्रे मरुत्वतीये विशेषं दर्शयति—

चतुर्विंशान्मरुत्वतीयस्याऽऽतानोऽसत्सु मे जरितः साभिवेगः पिबा सोममभि यमुग्र तर्दः कया शुभा सवयसः सनीळा मरुत्वाँ इन्द्र वृषभो रणाय, इति ।

त्रिषु मरुत्वतीयग्रहेषु मध्ये तृतीयस्य होमात्पूर्वं पठनीयं मरुत्वतीयं शस्त्रं तद्यन्मूलप्रकृतौ "आ त्वा रथम्" [ऋ० सं० म० ८ सू० ६८ ऋ० १] इत्यादिकं तस्य विश्वजित्यतिदिष्टस्य सन्त्यन्ये विशेषास्तैर्विशेषैः सह तन्मरुत्वतीयं महाव्रतेऽतिदेष्ट-

---

त्रिकद्रुकेषु०—ऋ० सं० म० २ सू० २२ ऋ० १ । एन्द्र याहि०—ऋ० सं० म० १ सू० १३० ऋ० १ । इन्द्राय हि द्यौः०—ऋ० सं० म० १ सू० १३१ ऋ० १ । प्रोष्वस्मै पुरो०—ऋ० सं० म० १० सू० १३३ ऋ० १ । असत्सु मे जरितः०—ऋ० सं० म० १० सू० २७ ऋ० १ । पिबा सोममभि०—ऋ० सं० म० ६ सू० १७ ऋ० १ । कया शुभा सवयसः—ऋ० सं० म० १ सू० १६५ ऋ० १ । मरुत्वाँ इन्द्र वृषभः०—ऋ० सं० म० ३ सू० ४७ ऋ० १ ।

---

१ क. ख. न्ये त्वचं । ग. °न्येव तृचं । घ. °न्ये तृचं । २ क. ख. °न्धी तृचः स्तोत्रियः । ए° । ३ घ. ङ. °दिनस° ।

व्यम् । तस्य चातिदिष्टस्य **मरुत्वतीयस्य** चतुर्विंशत्यत्राऽऽ(?)स्थितान्मरुत्वतीयादातानः पुनरपि विस्तारो भवति । तस्मिन्विस्तारे प्रथमम् "असत्सु मे जरितः" [ ऋ०सं०म० १० सू० २७ ऋ० १ ] इत्येकं सूक्तम् । "पिबा सोममभि यम्" [ ऋ० सं० म० ६ सू० १८ ऋ० १ ] इति द्वितीयम् । " कया शुभा " [ ऋ० सं० म० १ सू० १६५ ऋ० १ ] इति तृतीयम् । "मरुत्वाँ इन्द्र" [ ऋ०सं०म०३सू०४७ऋ०१ ] इति चतुर्थम् । सोऽयमधिको विस्तारः ।

तत ऊर्ध्वं प्राकृतेनैव सूक्तेन शस्त्रस्य समाप्तिं दर्शयति—

**जनिष्ठा उग्रः सहसे तुरायेति मरुत्वतीयम्,** इति ।

यथा प्रकृतौ "**जनिष्ठाः**" [ ऋ० सं० म० १० सू० ७३ ऋ० १ ] इत्यनेन सूक्तेन शस्त्रं समापितं तथाऽत्रापि तेनैव **मरुत्वतीयं** शस्त्रं समापनीयम् ।

तत्समाप्तेरूर्ध्वं होतृकर्तृकं होमं विधत्ते—

**संस्थिते मरुत्वतीये होता विसंस्थितसंचरेण निष्क्रम्याऽऽग्नीध्रीये तिस्र आज्याहुतीर्जुहोत्यौदुम्बरेण स्रुवेण,** इति ।

**संस्थिते** समाप्ते । सम्यक्चरन्त्यनेनेति संचरो मार्गः । स च द्विविधः, संस्थितसंचरो विसंस्थितसंचरश्चेति । सवने समाप्ते सदसः पश्चिमद्वारेण निर्गच्छति सोऽयं **संस्थितसंचरः** । असमाप्ते तु प्राग्द्वारेण [ निर्गच्छति ] सोऽयं विसंस्थितसंचरः । तेन **निष्क्रम्योदङ्मुखो** गत्वाऽऽग्नीध्रीये धिष्ण्ये जुहुयात् ।

तत्र प्रथमाहुतेर्मन्त्रमाह—

**अनु मामिन्द्रो अनु मां बृहस्पतिरनु सोमो अनु वाग्देव्यावीत् ।**
**अनु मां मित्रावरुणाविहावतामनु द्यावापृथिवी पूर्वहूतौ,** इति ।

**इन्द्रो** देव इह कर्मणि **मामनुगम्याऽऽवीत्,** अवतु । एवं **बृहस्पतिसोमसरस्वतीमित्रावरुणद्यावापृथिव्यो मामवन्तु** । **पूर्वहूतौ** *तदेतस्मिन्मित्रावरुणयोर्विशेषणम् । यद्वा लिङ्गव्यत्ययेन द्यावापृथिव्योर्विशेषणम् ।

द्वितीयाहुतेर्मन्त्रमाह—

**आदित्या मा विश्वे अवन्तु देवाः सप्त राजानो**
**य उदाभिषिक्ताः । वायुः पूषा वरुणः सोमो**
**अग्निः सूर्यो नक्षत्रैरवत्विह माऽनु ,** इति ॥

---

जनिष्ठा उग्रः०—ऋ० सं० म० १० सू० ७३ ऋ० १ ।

---

* एतस्मिन्मन्त्रोक्तदेवतासमूहे ।

अदितेः पुत्रा आदित्यास्ते चाष्टसंख्याकाः। "अष्टौ पुत्रासो अदितेः" [ऋ०सं० म० १० सू० ७२ ऋ० ८] [तै० आ० प्र० १ अ० १३] इति श्रुत्यन्तरात्। तदनुक्रमणं च तत्रैवाऽऽम्नायते—"ताननुक्रमिष्यामः। मित्रश्च वरुणश्च। धाता चार्यमा च। अꣳशश्च भगश्च। इन्द्रश्च विवस्वाꣳश्चेत्येते" [तै०आ०प्र०१अ०१३] इति। त एवं विश्वे[1] सर्वेऽपि देवा मामवन्तु[2]। य उदये चान्ये द्युलोकप्रकाशनार्थमभिषिक्ताः सप्तसंख्याका आरोगादिनामका राजानः सन्ति तेऽपि मामवन्तु। आरोगादयोऽपि श्रुत्यन्तरे समाम्नाताः—"आरोगो भ्राजः पटरः पतङ्गः। स्वर्णरो ज्योतिषीमान्विभासः। ते अस्मै सर्वे दिवमातपन्ति" [तै० आ० प्र० १ अ० ७] इति। तथा वायुरिह कर्मणि मामनुगम्यावतु। एवं पूषादिष्वपि योजनीयम्।

तृतीयाहुतेर्मन्त्रमाह—

पितरो मा विश्वमिदं च भूतं पृश्निमातरो मरुतः स्वर्काः।
ये अग्निजिह्वा उत वा यजत्रास्ते नो देवाः सुहवाः शर्म यच्छतेति, इति।

ये पितरोऽग्निष्वात्तादयस्ते मामवन्त्विति शेषः। न केवलं मामेव, किं त्विदं विश्वं प्राणिजातं चावन्तु। पृश्निर्माता येषां मरुतां ते पृश्निमातरः। तथा च मारुतसूक्ते समाम्नातम्—"पृश्नेः पुत्रा उपमासो रभिष्ठाः" [ऋ० सं० म० ९ सू० ९८ ऋ० ९] इति। तथा ब्राह्मणान्तरम्—"पृश्नि[3]र्ये वै[4]षे यशो मरुतो[6] हुताः" (?) इति। पृश्निर्गोमूर्तिर्देवता। तदप्यन्यत्राऽऽम्नातम्—"अङ्गिरसो वै सत्रमासत। तेषां पृश्निर्घर्मधुगासीत्" इति। ते च मरुतः स्वर्काः सुष्ठ्वर्चनीयाः। ते हि प्रियंगुचर्वादिभिरर्च्यन्ते। पृश्नये दुग्धे प्रैयंगवं चरुं निर्वपेन्मरुद्भ्यः" इति श्रुतेः। तादृशा मरुतो मामवन्तु। अग्निरेव जिह्वा येषां तेऽग्निजिह्वाः। अग्नौ हुतं हविर्भक्षयन्तीत्यर्थः। तादृशा देवा ये सन्ति। उत वाऽपि चेत्यर्थः। यजत्रा यजनीयाः पीठादौ गन्धपुष्पादिभिरभ्यर्चनीयाः। समर्पितं नैवेद्यं भक्षयन्ति, तादृशाश्च ये स[7]न्ति। उभयविधा अपि देवा अन्यत्र स्पष्टमाम्नायन्ते—"हुतादो वा अन्ये देवा अहुतादोऽन्ये" इति। तादृशा देवा यूयं सुहवाः सुखेनाऽऽह्वातुं शक्याः सन्तो नोऽस्मभ्यं शर्म सुखं यच्छत। इतिशब्दो मन्त्रत्रयसमाप्त्यर्थः।

होमान्तरं विधत्ते—

दक्षिणे मार्जालीये दश स्रुच्युत्तमां चतुर्गृहीतं पूर्वमवदायोत्तरतोऽग्नेरुपनिधाय विहरणप्रभृति मध्यं-

---

१ क. ख. घ. ङ. एव ते वि°। २ क. ख °न्तु। उ°। ३ घ. °श्नियेवेष। ४ ङ. °र्यैवेष। ५ क. ख. °ष पशो। ६ ग. °तोद्गातेति। ७ ग. °न्ति। त उ°।

**दिने मार्जालीयो जागरितो भवति तस्मिन्परिवृते**
**जुहोति प्राग्द्वारे वोदग्द्वारे वा प्रागुदग्द्वारे वा, इति।**

सदोहविर्धानयोर्मध्ये योऽयं दक्षिणोत्तरायतः संचरस्तस्योत्तरभागे यथाऽऽग्नीध्रीयो धिष्ण्यस्तथा[1] दक्षिणभागे मार्जालीयनामको[2] धिष्ण्यः[3]। तस्मिन्दशसंख्याका आज्याहुती[4]र्जुहोतीत्यनुवर्तते[5]। तत्रायं प्रयोगप्रकारः। उत्तमां दशमामाहुतिमुद्दिश्य स्रुचि जुह्वां चतुर्गृहीतमाज्यं प्रथममवदाय तदाज्यविशिष्टां तां स्रुचं मार्जालीयस्याग्नेरुत्तरभागे स्थापयित्वा दशमाहुतेः पूर्वभाविनीर्नवाऽऽहुतीः स्रुवेण तस्मिन्मार्जालीये जुहुयात्। स च मार्जालीयः परिवृतः परितः कटादिभिराच्छादितो भवति। तत्र होमार्थं प्रवेशद्वारं प्राच्यामुदीच्यामैशान्यां[6] वेति त्रेधा विकल्पितम्। यद्यप्येतद्धोमकालात्पूर्वं मार्जालीये विहृतस्याग्नेश्चिरकालं व्यवधानमस्ति तथाऽपि माध्यंदिने सवने विहरणकालमारभ्य मार्जालीयधिष्ण्यगतो[7]ऽग्निर्यथा न शाम्यति तथा जागरितः काष्ठप्रक्षेपेण पुनः पुनः प्रज्वालितो भवति।

तस्मिन्होमे प्रथममन्त्रमाह—

**अग्निरिवानाधृष्यः पृथिवीव सुषदा भूयासम्, इति।**

यथाऽग्निस्तीव्रत्वान्न केनापि तिरस्कर्तुं शक्य एवमहमप्यतिरस्कार्यो[8] भूयासम्। यथा च पृथिवी सुष्ठु स्थैर्येणावतिष्ठत एवमहमपि भूयासम्। शोभनं सदोऽवस्थानं यस्य मम सोऽहं सुषदाः।

द्वितीयं मन्त्रमाह—

**अन्तरिक्षमिवानाप्यं द्यौरिवानाधृष्यो भूयासम्, इति।**

यथाऽन्तरिक्षं पादचारिणा विरोधिना शत्रुणा प्राप्तुं न शक्यं यथा च द्युलोको मानुषेण शत्रुणा तिरस्कर्तुमशक्य एवमहमपि शत्रुभिरप्राप्तोऽनाधृष्यश्च भूयासम्।

तृतीयं मन्त्रमाह—

**सूर्य इवाप्रतिधृष्यश्चन्द्रमा इव पुनर्भूर्भूयासम्, इति।**

यथा सूर्यः स्वस्मादप्यधिकस्य तेजस्विनः प्रतिकूलस्याभावादतिरस्कार्यो यथा वा चन्द्रमाः कृष्णपक्षे क्षीणोऽपि शुक्लपक्षे पुनः प्रादुर्भवति एवमहमपि तैरतिरस्कार्य एव भूयासम्। केनापि निमित्तेन कदाचित्सत्यपि तिरस्कारे तत्परिहारेण पुनरप्यूर्जितो भूयासम्।

---

१ ग. घ. ङ. धिष्णियस्त॰। २ क. ख. घ. ङ. ॰लीयो धि॰। ३ ग. घ. ङ. धिष्णियः। ४ ग. आहु॰। ५ ग. घ. ङ. ॰तीर्होतेत्य॰। ६ घ. ङ. ॰च्यामीशा॰। ७ ग. घ. ङ. ॰लीये धिष्ण्ये ग॰। ८ क. ख. ॰स्कारो य॰।

चतुर्थं मन्त्रमाह—

**मन इवापूर्वं वायुरिव श्लोकभूर्भूयासम् ,** इति ।

यथा मन उत्तरोत्तरमभिवृद्धिकाङ्क्षया प्रयतमानं सत्तत्तत्फलप्राप्त्या नूतनं रूपं प्रतिपद्यते, एवमहमप्युत्तरोत्तराभिवृद्ध्या नूतनो भूयासम् । श्लोकः संघः । यथा वायुराषाढादिमासे समुद्रतीरादिदेशे वा स्वयमुत्तरोत्तराभिवृद्ध्या संघरूपो भवति, एवमहमपि पुत्रपौत्रादिसंघरूपेणोत्पन्नो भूयासम् ।

पञ्चमं मन्त्रमाह—

**अहरिव स्वं रात्रिरिव प्रियो भूयासम् ,** इति ।

अहर्यथा प्रकाशेनान्धकारं निवर्त्य वाणिज्यसेवादिना स्वं धनं संपादयति, एवमहमपि धनसंपादको भूयासम् । यथा च रात्रिर्विश्रामादिसुखहेतुतया प्रिया, एवमहमपि सर्वेषां प्रियो भूयासम् ।

षष्ठं मन्त्रमाह—

**गाव इव पुनर्भुवो मिथुनमिव मरीचयो भूयासम् ,** इति ।

यथा गावः संवत्सरे संवत्सरे वत्सरूपेण पुनरुत्पत्तिमत्य एवमहमपि पुत्रादिरूपेण पुनः पुनर्भूयासम् । यथा चोमामहेश्वरलक्ष्मीनारायणादिमिथुनं तेजस्वित्वेन प्रसिद्धमेवमहमपि मरीचयो मरीचिमांस्तेजस्वी भूयासम् ।

सप्तमं मन्त्रमाह—

**आप इव रस ओषधय इव रूपं भूयासम्,** इति ।

आपो यथा रसवत्य एवमहं रसो मधुराम्लादिरससंपन्नो भूयासम् । ओषधयो यथा पक्वाः सत्यो रमणीयरूपयुक्ता दृश्यन्ते, एवमहमपि रूपं पुष्टिकान्त्यादिरमणीयरूपयुक्तो भूयासम् ।

अष्टमं मन्त्रमाह—

**अन्नमिव विभु यज्ञ इव प्रभूर्भूयासम् ,** इति ।

अन्नं यथा भक्ष्यभोज्यलेह्यचोष्यरूपेण विविधं भवति, एवमहमपि विभुर्धनविद्यासंपत्त्या विविधो भूयासम् । यथा यज्ञो ज्योतिष्टोमादिः स्वर्गादिफलप्रदाने समर्थ एवमहमपि प्रभूः पुत्रपौत्रभृत्यादिपोषणे समर्थो भूयासम् ।

नवमं मन्त्रमाह—

**ब्रह्मेव लोके क्षत्रमिव श्रियां भूयासम् ,** इति ।

यथा ब्रह्म ब्राह्मणो लोके श्रेष्ठ एवमहमपि श्रेष्ठो भूयासम् । यथा क्षत्रं राज्यं गजाश्वादिश्रियामधिपतिः, एवमहमपि सर्वसंपदामधिपतिर्भूयासम् ।

अथ स्रुचि चतुर्गृहीतेनाऽऽज्येन होतुर्मन्त्रस्य प्रतीकं दर्शयति—

**यदग्न एषा समितिर्भवातीति, इति ।**

सोऽयं मन्त्रः संहिताग्रन्थे द्रष्टव्यः । इतिशब्दो दशाहुतिमन्त्रसमाप्त्यर्थः ।

अस्मिन्दशमे मन्त्रे शाखान्तरगतस्य पाठस्यानुपादेयतां दर्शयति—

**अत्र विभजाथ वीथेति त्रीण्यनन्वृचम् , इति ।**

"यदग्न एषा" [ ऋ० सं० म० १० सू० ११ ऋ० ८ ] इत्यस्यामृचि त्रीणि पदानि शाखान्तरेऽन्यथा पठितानि । तान्यनन्वृचमृगननुसारीणि न भवन्ति । कानि तानि पदानीत्याशङ्क्य प्रदर्श्यन्ते—अत्रेत्येकं विभजाथेति द्वितीयं वीथेति तृतीयम् । तस्यामृचि "रत्ना च यद्विभजासि स्वधावः" इति तृतीयः पादः, तस्य चायमर्थः—हे स्वधावोऽन्नवन्नग्ने रत्ना च यद्रत्नान्यपि यानि विभजासि पृथक्करोषीति । तस्मिन्पादे रत्नानामनुवादद्योतनाय यच्छब्दोऽपेक्षितः । अग्नेरेकस्य संबोध्यमानत्वाद्विभजासीत्येकवचनमपेक्षितम्, अतस्तदुभयमृगनुसारि । शाखान्तरे तु तदुभयं परित्यज्यात्र विभजाथेति पदद्वयं पठितम् । तद्द्वयमृगनुसारि न भवति, यथोक्तानुवादाभावात्, बहुवचनान्वितत्वाच्च । तथा चतुर्थपाद एवमाम्नायते—"भागं नो अत्र वसुमन्तं वीतात्" इति । तस्यायमर्थः—हेऽग्नेऽत्रास्मिन्कर्मणि नोऽस्माकं वसुमन्तं भागं बहुधनोपेतं भागं वीताद्विशेषेण प्राप्नुहि संपादयेति । तस्मिन्नपि पादे शाखान्तरीया[1] वीथेति पठन्ति, तदपि पूर्ववदयुक्तम् । सन्ति हि भे(वे)दे तत्र तत्र शाखान्तरपाठदूषणानि बहूनि । तथाहि—"बृहस्पतिर्नो हविषा वृधातु" इत्यस्मिन्मन्त्रे हविषा विधेरिति शाखान्तरपाठः । स च यज्ञे नैष्फल्येन दुष्ट इत्यभिप्रेत्य ब्राह्मणे समाम्नायते—"यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणुमेव परिवृणक्ति" इति । एवं "यद्ब्रूयात्[2]सूपावसाने[3]" इत्यादिकमुदाहार्यम् ।

मार्जालीयहोमादूर्ध्वमुपस्थानं विधत्ते—

**अत्र तिष्ठन्नादित्यमुपतिष्ठते पर्यावृत्ते प्रदक्षिणमावृत्यै-**
**तैश्चैवास्वाहाकारैरेह्येवा३ इदं मधू३ इदं मधु । इमं**
**तीव्रसुतं पिबा३ इदं मधू३ इदं मध्विति च, इति ।**

अत्र मार्जालीय[4]स्य समीपे तिष्ठन्प्राङ्मुख आदित्यमुपतिष्ठेत । यदा त्वादित्यः पश्चिमायां दिशि पर्यावृत्तस्तदा स्वयमपि प्रदक्षिणं यथा भवति तथा पर्यावृत्य पश्चि-

---

यदग्न एषा०—ऋ० सं० म० १० सू० ११ ऋ० ८ ।

---

१ क. ख. °न्तरे वी° । २ ग. °यातसुखाव° । ३ ङ. °त्सूयाव° । ४ क. ख. घ. ङ. °नेत्या° । ५ ग. घ. ङ. °यस° ।

माभिमुख एतैः पूर्वोक्तैः " अग्निरिवानाधृष्यः " इत्यादिभिर्दशभिर्मन्त्रैर्होमार्थापादितस्वाहाकाररहितैरुपतिष्ठेत । प्राङ्मुखोपस्थानेऽप्येत एव मन्त्राः । वक्ष्यमाणमन्त्रान्तरेण सह समुच्चयार्थश्चकारः । तच्च मन्त्रान्तरम्—" एह्येव " इत्यादिकम् । हे आदित्यैह्येवास्मान्प्रति सर्वथैवाऽऽगच्छ । दूरादाह्वानार्था प्लुतिः । आगमनप्रयोजनमुच्यते—इदमस्माभिर्दीयमानं हविर्मधु मधुरम् । प्लुतिर्द्विरुक्तिश्चेत्युभयमादरार्थम् । तदेव हविः पुनर्विशेषाकारेण निर्दिश्यते—इमं पुरतो वर्तमानं तीव्रसुतं तीव्रेण बहुमन्त्रसूक्तप्रयोगेणाभिषुतं सोमरसं पिब । प्लुतिः पूर्ववाक्यावृत्तिश्चेत्येतदत्यन्तमादरार्थम् । इतिशब्दो मन्त्रसमाप्त्यर्थः । चशब्दः पूर्वमन्त्रैः सह समुच्चयार्थः ।

आदित्योपस्थानादूर्ध्वं दासीविषयं प्रैषं विधत्ते—

**प्रेष्याः संशास्ति पूर्णकुम्भास्तिस्रोऽवमाः षळुत्तमाः, इति ।**

वक्ष्यमाणकर्मार्थं[1] या दास्यः प्रेषणीयास्ता दासीः प्रेषयेत् । ताश्च दास्य उदकपूर्णकुम्भयुक्ता भवन्ति । तासां दासीनां त्रित्वमधमः पक्षः । षट्संख्योत्तमः पक्षः ।

तासां प्रेषणे मन्त्रमाह—

**इमं धिष्ण्यमुदकुभं च त्रिः प्रदक्षिणं परि-**
**व्रजाथ दक्षिणैः पाणिभिर्दक्षिणानूरूनाघ्नाना**
**एह्येवा३ इदं मधू३ इदं मध्विति वदत्यः ।**
**इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके प्रथमाध्याये**
**प्रथमः खण्डः ॥ १ ॥**

---

अथ द्वितीयः खण्डः ।

---

**उपाकृते स्तोत्रे त्रैधं निनयाथात्रोत्तरे**
**च मार्जालीये शेषमन्तर्वेदि, इति ।**

हे दास्य इमं मार्जालीयाख्यं धिष्ण्यं तत्र स्थापितमेकमुदकुम्भं च त्रिवारं प्रदक्षिणी कुरुत । किं कुर्वत्यः, प्रदक्षिणीकरणकाले स्वस्वशिरस्यवस्थितानुदकुम्भान्वामहस्तैरवष्टभ्य दक्षिणैः पाणिभिः स्वकीयानूरूंस्ताडयन्त्यः । पुनरपि किं कुर्वत्यः, तस्मिन्काल एहीत्यादिमन्त्रभागं वदत्यः पठन्त्यः । अयं च भागो होतुरादित्योपस्थाने व्याख्यातः । अयं चोक्तो मन्त्रार्थरूपः प्रयोगस्तैत्तिरीयैर्विस्पष्टमाम्नातः—"उदकुम्भानधिनिधाय दास्यो मार्जालीयं परिनृत्यन्ति पदो निघ्नतीरिदं[2] मधु गायन्त्यः" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥

---

१ क. ख. 'र्मार्थे या' । २ क. ख. 'घ्नन्तीरि' ।

हे दास्यो यूयमेतावत्कृत्वा तत ऊर्ध्वमध्वर्युणा[1] सामगान्प्रति स्तोत्रेऽनुज्ञापिते सति स्वस्वकुम्भस्थितमुदकं त्रेधा विभज्य प्रदेशत्रये सिञ्चत । अयं दक्षिणो मार्जालीय एकः प्रदेशः । उत्तरो मार्जालीयो द्वितीयः प्रदेशः । उत्तरमार्जालीयो नामाऽऽग्नीध्रीयो धिष्ण्यः । तत्रोभयत्र सिक्तस्योदकस्यावशिष्टं भागं वेदिमध्ये सिञ्चत । इतिशब्द इमं धिष्ण्यमित्यादिमन्त्रसमाप्त्यर्थः । अनेन मन्त्रेण दासीः प्रेषितवतो होतुरुत्तरवेदिस्थानीयस्य चित्याग्नेरवयवोपस्थानं विधातव्यम् ।

तत्र शिरस उपस्थानं विधत्ते—

**प्रदक्षिणमग्निं निष्क्रम्याग्रेण यूपं पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नग्नेः शिर उपतिष्ठते नमस्ते गायत्राय यस्ते शिर इति, इति ।**

मार्जालीयमग्निं प्रदक्षिणं कुर्वन्निष्क्रम्याग्निचित्यां दक्षिणेन गत्वा यूपस्य पूर्वभागे चित्याग्नेः पुरस्तात्स्वयं प्रत्यङ्मुखस्तिष्ठन्नमस्त इत्यादिमन्त्रेण तस्याग्नेः शिरोभागमुपतिष्ठेत । हेऽग्ने ते तव गायत्रं साम शिरोरूपेण वर्तते तस्मै गायत्ररूपाय शिरसे त्वदीयाय नमोऽस्तु । गायत्रसाम्नः शिरोरूपत्वमध्वर्युणा तदुपस्थानादवगन्तव्यम् । तथा चान्यत्राऽऽम्नायते—"गायत्रेण पुरस्तादुपतिष्ठते" इति । नमस्त इत्यादिमन्त्रसमाप्त्यर्थ इतिशब्दः ।

दक्षिणपक्षस्योपस्थानं विधत्ते—

**तेनैव यथेतं प्रत्येत्य दक्षिणमुदङ्मुखः पक्षं नमस्ते राथंतराय यस्ते दक्षिणः पक्ष इति, इति ।**

येन मार्गेण पूर्वस्यां दिशि गतस्तेनैव मार्गेण प्रतिनिवृत्य दक्षिणस्यां दिशि स्वयमुदङ्मुखस्तिष्ठंश्चित्याग्नेर्दक्षिणं[3] पक्षं मन्त्रेणोपतिष्ठेत । तेनैवेत्यस्य व्याख्यानं यथेतमिति, यथाऽऽगतं तथैवेत्यर्थः । दक्षिणपक्षस्य रथंतरसामसंबन्धोऽध्वर्यूपस्थानादवगन्तव्यः । तथा च तदुपस्थानमाम्नातम्—"बृहद्रथंतराभ्यां पक्षौ" इति ।

उत्तरपक्षस्योपस्थानं विधत्ते—

**अपरेणाग्निपुच्छमतिक्रम्य प्राङ्मुख उत्तरं नमस्ते बृहते यस्त उत्तरः पक्ष इति, इति ।**

पश्चिमदिगवस्थितं यदग्निपुच्छं तस्य पश्चिमभागेन तत्पुच्छमतिक्रम्योत्तरपक्षस्य[2] पाश्चिमायां दिशि प्राङ्मुखोऽवस्थायोत्तरं पक्षं मन्त्रेणोपतिष्ठेत । तस्य पक्षस्य बृहत्सामरूपत्वं पूर्ववद्द्रष्टव्यम् ।

---

१ ख. ग. घ. ङ. °र्युणाऽसा° । २ क. ख. °त्तरमा° । ३ क. ख. ग. °क्षिणप° ।

पुच्छस्योपस्थानं विधत्ते—

**पश्चात्प्राङ्पुच्छं नमस्ते भद्राय यत्ते पुच्छं या ते प्रतिष्ठेति, इति ।**

चित्याग्नेः पश्चिमदिशि प्राङ्मुखोऽवस्थाय मन्त्रेण पुच्छमुपतिष्ठेत । भद्रसाम्नः पुच्छरूपत्वमुपनिषदि पञ्चविधोपासनायामनुक्रमणादवगम्यते । तत्र पञ्चावयवा एवमनुक्रम्यन्ते—"गायत्रं रथंतरं बृहद्भद्रं राजनमिति सामतः" [ऐ० आ० २ अ० ३ ख० ४ ] इति । "शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम्" [ऐ० आ० २ अ० ३ ख० ४ ] इति [च] । यत्ते पुच्छं या ते प्रतिष्ठेति पुच्छस्यैव प्रतिष्ठात्वमुक्तम् । प्रतितिष्ठत्यवयवसंपूर्तिर्भवत्यनयेति प्रतिष्ठा ॥

चित्याग्नेर्मध्यशरीरस्योपस्थानं विधत्ते—

**दक्षिणतः पुच्छस्याऽऽत्मानं नमस्ते राजनाय यस्त आत्मेति, इति ।**

**इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके प्रथमाध्याये**
**द्वितीयः खण्डः ॥ २ ॥**

पुच्छस्य दक्षिणभागे प्राङ्मुखः स्थित्वा मध्यदेहमुपतिष्ठेत । आत्मशब्दो मध्यदेहभागं ब्रूते । "मध्यं ह्येषामङ्गानामात्मा" [ऐ० आ० २ अ० ३ ख० ५ ] इति श्रुतेः । राजनसाम्नो मध्यदेहरूपत्वं पूर्ववद्द्रष्टव्यम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये
पञ्चमारण्यके प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीयः खण्डः ।

---

चित्याग्न्युपस्थानानन्तरं होतुः सदःप्रवेशं विधत्ते—

**यथेतं सदः प्रसर्पति, इति ।**

पूर्वं चित्याग्निसमीपे मार्जालीयाद्येन प्रकारेण गतं तस्मिन्नेव मार्गे[1] प्रत्यावृत्य मार्जालीयं वामभागेऽवस्थाप्य सदः प्रविशेत् ।

दोलाकल्पनं विधत्ते—

**पुरस्तात्प्रेङ्ख उपक्लृप्तो भवति, इति ।**

होतुः सदःप्रवेशात्पूर्वस्मिन्नेव काले प्रेङ्खो दोलाऽध्वर्युभिः संपादनीया भवति ।

दोलासाधनानां स्थूणादीनां सदस्यानयनं विधत्ते—

**स्थूणे रज्जू वीवध इत्येतत्प्रक्षाल्य तीर्थेन**

---

१ ग. घ. ङ. मार्गे ।

**प्रपाद्योत्तरेणाऽऽग्नीध्रीयं परिव्रज्य पूर्वया**
**द्वारा सदः सर्वान्धिष्ण्यानुत्तरेण, इति ।**

स्थूणे द्वौ स्तम्भौ, रज्जूद्वयं फलकबन्धनक्षमं, वीवधः स्तम्भयोरुपरि तिर्यगवस्थापनीयः काष्ठविशेषः, एतत्त्रितयं मलापनयाय प्रक्षाल्य तीर्थशब्दवाच्येन मार्गेण नयेत् । उत्करचात्वालयोर्मध्यदेशस्तीर्थम् "एतत्तीर्थमित्याचक्षते" इति परिभाषितत्वात् । तत आग्नीध्रीयधिष्ण्यवामभागेऽवस्थाप्योत्तरभागे तत्सर्वमानीय पूर्वद्वारेण सदः प्रवेश्य सदसो मध्ये सर्वान्धिष्ण्यान्वामभागे कृत्वा तेषामुत्तरदेशेनाऽऽनीय होत्रीयधिष्ण्यस्य पश्चाद्भागेऽवस्थापयेत् ।

तत्र काष्ठानां वृक्षविशेषं विधत्ते—

**औदुम्बराणि काष्ठानि प्रेङ्खस्य भवन्ति पालाशानि मिश्राणि वा, इति ।**

स्पष्टोऽर्थः ।

दोलायां होतुरारोहणाय फलकानि विधत्ते—

**त्रीणि फलकान्युभयतस्तष्टानि द्वे वा सूचयश्च तावत्यः, इति ।**

अधस्तादुपरिष्टाच्च फलकानां सम्यक्तक्षणं कर्तव्यम् । तानि फलकानि त्रीणीत्येकः पक्षः । द्वे इति पक्षान्तरम् । सूचयः फलकसंधानहेतवः सूक्ष्माग्राः काष्ठविशेषाः । ताश्च फलकवत्तिस्रो द्वे वा ।

फलकसंधानेन निष्पन्नस्य स्वरूपं विशदयति—

**इषुमात्रः प्राङ्प्रेङ्खो निमुष्टिकस्तिर्यङुदगग्रः**
**प्रागग्राभ्यां सूचीभ्यां समुतः, इति ।**

प्रेङ्खस्य [ प्राङ्, ] प्राक्पश्चिमविस्तारो प्राणमात्रः । तिर्यङ्दक्षिणोत्तरविस्तारो निमुष्टिको मुष्टिन्यूनबाणमात्रः । स च प्रेङ्ख उदगग्रो दक्षिणमूलः स्थापनीयः । स च प्रागग्राभ्यां सूचीशब्दाभिधेयाभ्यां फलकसंधानहेतुभ्यां समुतः संयुक्तः कार्यः ।

दोलायाः स्थापनप्रकारं विधत्ते—

**दक्षिणोत्तरे स्थूणे निखायाभितो होतृषदनं**
**वीवधमत्यादधात्यास्यसंमितं कर्तुः, इति ।**

होता सीदति यस्मिन्धिष्ण्ये स्थाने तद्धोतृषदनं तस्य दक्षिणोत्तरयोः स्तम्भद्वयं निखनेत् । तयोः स्तम्भयोरुपरि चतुररत्निमात्रं वीवधनामकं तिर्यक्काष्ठं स्थापयेत् । तच्च काष्ठं कर्तुर्यजमानस्योत्थितस्य मुखसंमितं यथा भवति तथा स्तम्भस्य निखातभागादूर्ध्वं यजमानमुखपरिमिते स्तम्भाग्रे स्थापयेत् ।

---

१ घ. ङ. 'नाग्नीय' ।

तत्र फलकबन्धनप्रकारं दर्शयति—

कुष्ठासु च्छिद्राणि प्रेङ्खस्य भवन्ति रज्जूभ्यामूर्ध्वमुद्ग्रथति दक्षिणतो दक्षिणयोत्तरतः सव्यया दार्भ्ये त्रिगुणे स्यातां सव्यदक्षिणे पञ्चव्यायामे द्विगुणे वीवधे त्रिः प्रदक्षिणं पर्यस्योर्ध्वग्रन्थिं निष्टर्क्यं बध्नाति, इति ।

कुष्ठाः फलकस्य चत्वारः कोणविशेषाः । प्रेङ्खस्य फलकस्य तेषु चतुर्षु कोणेषु च्छिद्राणि कुर्यात् । दक्षिणच्छिद्रद्वयो रज्ज्वा द्विगुणीकृताया एकस्या अग्रद्वयं स्यूत्वा तां रज्जुमूर्ध्वमुन्नमयेत् । एवमुत्तरच्छिद्रद्वये रज्ज्वन्तरं द्रष्टव्यम् । तत्र दक्षिणरज्जुः प्रदक्षिणावृत्कार्या । उत्तररज्जुः सव्यावृत्कार्या । ते च रज्जू दर्भमय्यौ त्रैगुण्ययुक्ते सव्यदक्षिणावृतौ *पञ्चव्यायामदीर्घे कृत्वा द्विगुणे यथा भवति तथा बध्नीयात् । पञ्चव्यायामा रज्जुर्द्विगुणीकृता सार्धद्वियामा भवति । तस्याश्च मध्यभागे बाणमात्रं फलकस्याधस्तादुपर्स्पर्शणिम् । अवशिष्टोंऽशश्छिद्रद्वयादूर्ध्वमुन्नीत उपरितने वीवधे तदग्रमेकैकं त्रिः प्रदक्षिणीकृत्याग्रद्वयेन संयुक्तेनोर्ध्वग्रन्थिः कर्तव्यः । स च निष्टर्क्यः । शिखाबन्धनवत्सहसा मोचितुं( मोचयितुं ) शक्यत्वं निष्टर्क्यत्वम् ।

निखातयोः स्तम्भयोर्दृढीकरणं विधत्ते—

शाखाभिर्बृसीभिर्वा पर्यूषन्त्यप्रकम्पि, इति ।

यथा स्तम्भस्य कम्पो न भवति तथा पर्यूषन्ति स्तम्भमूलस्य परितस्तस्मिन्नवटे पांसुं प्रक्षिपन्ति । हस्तेन प्रक्षेपणं न कर्तव्यं किं तु वृक्षशाखाभिर्बृसीभिर्वा[2] पांसून्पर्यूहेत् । तपस्विनामासनार्थं तृणवल्लीतालपत्रवेणुदलादिभिर्निर्मिता अल्पकटविशेषा बृस्यः ।

फलक[3]भूम्योर्मध्ये व्यवधानप्रमाणं दर्शयति—

चतुरङ्गुलेनैष विभूमः प्रेङ्खः स्यान्मुष्टिमात्रेण वा, इति ।

भूमेर्विश्लिष्टो विभूमोऽङ्गुलिचतुष्टयमित्येकः पक्षः । तस्योपर्यूर्ध्वाङ्गुष्ठयुक्ता मुष्टिर्भवति तावद्व्यवधानमित्यपरः पक्षः ।

दक्षिणभागे फलकस्यौन्नत्यं विकल्पेन विधत्ते—

दक्षिणत उदाहिततरः समो वा, इति ।

---

* 'पञ्चव्यायामे' इत्यस्य व्याख्यानमेतत् ।

---

१ ग. घ. ङ. 'क्षीणाम्'। २ क. ख. 'भिर्वा बृसी'। ३ घ. ङ. 'कबृस्योर्म'।

होतृधिष्ण्यस्य पश्चाद्भागे लम्बमानस्य फलकस्य च व्यवधाने प्रमाणं दर्शयति—

**पद्मात्रे धिष्ण्यात्, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥**

धिष्ण्यात्पश्चिमभागे पद्मात्रे फलकमवतिष्ठंत इति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

अथ चतुर्थः खण्डः ।

अथ होतुर्[1]वाणधारणं विधत्ते—

**निष्ठिते प्रेङ्खे होता[2] वाणमौदुम्बरं शततन्तुमुभाभ्यां परिगृह्योत्तरत उपोहते यथा वीणाम्, इति ।**

यथोक्तप्रकारेणाध्वर्युभिरुपकल्पिते कृप्ते प्रेङ्खे समाप्ते सति ततो होता चित्याग्निप्रदेशादारभ्य सदः प्रविश्य पश्चादासीन औदुम्बरं शततन्[3]तुं वाणमुभाभ्यां हस्ताभ्यामादायोत्तरपार्श्वे वीणावद्धारयेत् । यथा लोके काण्डवीणा द्वित्रादितन्तुयुक्ता तथा विस्तृतफल[4]कसंपादिता शततन्तुबन्धनपर्याप्ता महती वीणा[5] वाणशब्देनोच्यते ।

वामभागे धारितस्य बा(वा)णस्य मन्त्रैः स्वरथस्थानकल्पनं विधत्ते—

**सप्तभिश्छन्दोभिश्चतुरुत्तरैः स्थानान्यस्योर्ध्वमुद्गृह्णीयाद्दशभिर्वा, इति ।**

गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः सप्त च्छन्दांसि । विराड्द्विपदाऽतिच्छन्दः किंचिदन्यच्छन्दोन्तरमित्येतानि चत्वार्युत्तराणि च्छन्दांसि । तथाविधच्छन्दःप्रतिपादकैर्मन्त्रैर्बा(वा)णस्याधोभागमारभ्योत्तरोत्तरमूर्ध्वं स्वरस्थानानि केनचिल्लाञ्छनेनोपकल्पयेत् । अन्तिमच्छन्दोन्तरपरित्यागेन दशभिर्वेति पक्षान्तरम् ।

इदानीं क्रमेण च्छन्दोमन्त्रानाह—

**गायत्रेण त्वा छन्दसोदूहाम्यौष्णिहेन त्वाऽऽनुष्टुभेन त्वा बार्हतेन त्वा पाङ्क्तेन त्वा त्रैष्टुभेन त्वा जागतेन त्वा वैराजेन त्वा द्वैपदेन त्वाऽतिच्छन्दसा त्वेति, इति ।**

हे बा(वा)ण त्वां गायत्राख्येन(ण) च्छन्दसोदूहामि परिज्ञातस्वरस्थानविशेषयुक्तं

१ क. ग. घ. ङ. °तुर्बाण° । २ क. घ. ञ. °ता बाण° । ३ क. ख. घ. ङ. °न्तुं बाण° । ४ ख. ग. घ. ङ. °लसं° । ५ क. ख. °णा बाण° ।

करोमि । एवमुत्तरेष्वपि मन्त्रेषु च्छन्दसोदूहामीत्येतं भागमनुषज्य योजनीयम् । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

ध्वन्युत्पादनाय तन्तूनामुन्मार्जनं विधत्ते—

**छन्दांस्यनुक्रम्य स्थानानामनुपरिक्रमण-**
**मौदुम्बर्याऽऽर्द्रया शाखया सपलाशया**
**मूलदेशेन वाणं त्रिरूर्ध्वमुल्लिखति, इति ।**

यथोक्तच्छन्दोवाचकमन्त्राननुक्रमेण पठित्वा तैर्मन्त्रैः स्वरस्थानविशेषाणामनुक्रमेणोपकल्पनं संपाद्य ततः पर्णयुक्तया कयाचिदार्द्रोदुम्बरशाखया तं वाणं त्रिवारमूर्ध्वमुन्मृज्यात् । येयमुदुम्बरशाखा तस्या अग्रेणोन्मार्जनं न कुर्यात्किं तु **मूलदेशेन** कुर्यात् ।

उन्मार्जनत्रयार्थं मन्त्रत्रयं दर्शयति—

**प्राणाय त्वाऽपानाय त्वा व्यानाय त्वोल्लिखामीति, इति ।**

हे वाण[3] त्वामस्मत्प्राणवृत्तिरक्षणार्थमुन्मृजामि । एवमुत्तरत्रापि पूर्वयोर्मन्त्रयोरुल्लिखामीत्यनुषज्यते । इतिशब्द ईदृशे स्थाने सर्वत्र मन्त्रसमाप्त्यर्थः ।

शाखान्तराभिमतं मन्त्रप्रयोगं निषेधति—

**अन्येभ्योऽपि कामेभ्यः पुनरपि न तूल्लिखामीति ब्रूयात्, इति ।**

शाखान्तरे हि प्राणादिरक्षार्थोल्लेखनादूर्ध्वं कामान्तरसिद्ध्यर्थं पुनरप्युल्लिखामीति मन्त्रप्रयोगोऽभ्युपगतः, तत्तु न कुर्यात् । प्राणादिमन्त्रत्रयेणैवाशेषकामानां सिद्धेः ।

वाणस्य[4] दानं विधत्ते—

**अथैनं सशाखं छन्दोगेभ्यः प्रयच्छति, इति[5] ।**

वाणदानादूर्ध्वं प्रेङ्खमारुरुक्षोर्होतुः प्रथमं मन्त्रैः प्रेङ्खस्य चालनं विधत्ते—

**भूतेभ्यस्त्वेति पश्चार्धे फलके पाणी प्रतिष्ठापयति**
**प्राणमनु प्रेङ्खस्वेति प्राञ्चं प्रेङ्खं प्रणयति व्यानमन्वी-**
**ङ्खस्वेति तिर्यञ्चमपानमन्वीङ्खस्वेत्यभ्यात्मम् , इति ।**

असौ होता प्रेङ्खस्यापरफलके भूतेभ्यस्त्वेति पाणिद्वयं प्रतिष्ठापयति । हे प्रेङ्ख सर्वभूतोपकारार्थं त्वां पाणिभ्यां स्पृशामीति शेषः । ततः **प्राणमनु प्रेङ्खस्वेति** मन्त्रेण तं प्रेङ्खं पूर्वदिग्गामित्वेन[6] चालयेत् । हे प्रेङ्ख त्वमस्मदीयं प्राणमनुसृत्य प्रकर्षेण चलितो भव । यथा प्राणः पुरस्ताद्गच्छति तथा त्वमपि पूर्वस्यां दिशि गच्छेत्यर्थः । ततो **व्यानमन्वीङ्खस्वेति** मन्त्रेण प्रेङ्खं तिर्यञ्चं दक्षिणोत्तरदिगनुसारेण चालयेत् । हे प्रेङ्ख

---

१ क. वाणं । २ ख. वाणं । घ. ङ. वाणां । ३ ख. ग. घ. वाण । ४ ख. ग. ङ. वाणस्य । ५ ख. ङ. ंति । वाण° । ६ घ. ङ. पूर्वादिगामि° ।

त्वमस्मदीयं **व्यानमनुसृत्य** दक्षिणोत्तरदिशोर्विशेषेण चलितो भव । ततोऽ**पानमन्वीङ्खस्वेति** मन्त्रेण स्वात्माभिमुख्येन चालयेत् । हे प्रेङ्ख त्वमस्मदीय**मपानवायुमन्तःसंचारिणमनुसृत्यास्मदाभिमुख्येन** चलितो भव ।

त्रिविधचालनादूर्ध्वं व्याहृतिजपं विधत्ते—

**भूर्भुवः स्वरिति जपति**, इति ।

प्रेङ्खस्य दार्ढ्यपरीक्षार्थं यदेतच्चालनत्रयं कृतं तेन पृथिव्यादिलोकत्रयं दृढं भवत्वित्यर्थः ।

जपादूर्ध्वं पुनरपि त्रेधा चालनं विधत्ते—

**प्राणाय त्वेति प्राञ्चमेव व्यानाय त्वेति**
**तिर्यञ्चमपानाय त्वेत्यभ्यात्मम्**, इति ।

हे प्रेङ्ख त्वामस्मदीयप्राणादित्रयपरिरक्षार्थं चालयित्वा दार्ढ्यं पश्यामीति शेषः । अत्र मन्त्रविशेष एव न तु क्रियाविशेष इति द्योतनार्थमेवकारः ।

प्रेङ्खस्य दार्ढ्यपरीक्षणादूर्ध्वं समारोहणप्रकारं विवक्षुरादौ कूर्पराद्यरत्निस्थापनं विधत्ते—

**वसवस्त्वा गायत्रेण च्छन्दसाऽऽरोहन्तु तानन्वा-**
**रोहामीति पश्चार्धे फलकेऽरत्नी प्रतिष्ठापयति**, इति ।

**वसवस्त्वेत्यादिः** स्थापनमन्त्रः । हे प्रेङ्ख त्वामष्टसंख्याका **वसवो** देवा **गायत्र-च्छन्दोरूपेण** साधनेन प्रथममारोहन्तु । **तान्वसूननुसृत्य** पश्चादारोहामि ।

अरत्निस्थापनानन्तरमूर्ध्वाङ्गुलिभ्यां पाणिभ्यां पूर्वफलकस्पर्शनं विधत्ते—

**अथ पूर्वं फलकं नानापाणिभ्यामभि-**
**पद्येत यथा हि स्रप्स्यन्**, इति ।

लोके सर्पणं करिष्यन्पन्नगः शिर उन्नमयति, तथाऽयं पाणी उन्नतौ कृत्वा ताभ्यामभिस्पृशेदित्यर्थः ।

कूर्पराभ्यां पश्चिमफलकमग्राभ्यां पूर्वं फलकं च स्पृष्टवतो मुखस्याधोभागेन च्छुबुकनाम्ना मध्यमफलकस्पर्शनं विधत्ते—

**मध्यमं छुबुकेनोपस्पृशेद्द्वयोर्वा संधिम्**, इति ।

फलकस्य त्रयपक्षे मध्यमस्पर्शः । द्वयपक्षे संधिस्पर्शः ।

अथ मन्त्रत्रयेण क्रमाद्दक्षिणवामसक्थिभ्यां कृत्स्नशरीरेण च प्रेङ्खारोहणं विधत्ते—

**रुद्रास्त्वा त्रैष्टुभेन च्छन्दसाऽऽरोहन्तु तानन्वारो-**

---

१ ग. °यर° ।

हामीति दक्षिणं सक्थ्यतिहरत्यादित्यास्त्वा जागतेन च्छन्दसाऽऽरोहन्तु तानन्वारोहामीति सव्यं विश्वे त्वा देवा आनुष्टुभेन च्छन्दसाऽऽरोहन्तु तानन्वारोहामीति समारोहति, इति।

उक्तप्रकारेण प्रेङ्खमन्वारूढस्य भूमौ पादस्थापनप्रकारं विधत्ते—

पश्चात्स्वस्य धिष्ण्यस्य दक्षिणं पादं प्राञ्चं प्रतिष्ठापयत्यथ सव्यं यदेतरः श्राम्येदथेतरं यदेतरोऽथेतरं नोभौ विभूमौ कुर्यात्, इति।

स्वकीयधिष्ण्यस्य पश्चाद्भागे प्रथमं दक्षिणपादः प्रागग्रः स्थापनीयः। ततः सव्यः पादः स्थापनीयः। यदा दक्षिणस्य पादस्य श्रमस्तदानीं सव्यं स्थापयेत्, यदा तु सव्यस्य श्रमस्तदा दक्षिणमित्येवं पर्यायेण तयोः स्थापनं न त्वेकदा द्वौ पादौ भूमिस्पर्शरहितौ कुर्यात्।

इतरेषामृत्विजां तत्तदारोहणं विधत्ते—

कूर्चान्होत्रकाः समारोहन्ति ब्रह्मा चौदुम्बरीमासन्दीमुद्गाता, इति।

प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेति होत्रका दर्भमयान्कूर्चानारोहेयुः[3]। तथा ब्रह्माऽपि कूर्चमारोहेत्[4]। उद्गातोदुम्बरनिर्मितामासन्दीमारोहेत्।

प्रेङ्खादिष्वारूढानां होतृहोत्रकब्रह्मोद्गातॄणां शौचाचमनाद्यर्थं[5] गमने कंचिद्विशेषमाह[6]—

यदि कस्मैचिदवश्यकर्मिणो जिगमिषेदादिश्य पालं प्राङवरुह्य चरित्वा तमर्थमेवमेवाजपया वृताऽऽरोहेत्, इति॥

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके प्रथमाध्याये चतुर्थः खण्डः॥ ४॥

कर्मिशब्द आचमनादिक्रियामाचष्टे। तदर्थं यो जिगमिषुः सोऽयं पालमादिश्य पालकं यजमानमनुज्ञाप्य स्वासनात्प्रेङ्खादेः प्राङ्मुखोऽवरुह्य यदर्थं निर्गच्छति तमर्थं चरित्वा समागत्य[7] पूर्वोक्तेनैव प्रकारेण स्वं स्वमासनमारोहेत्। तत्र होतुरेतावान्विशेषः। अजपया वृता भूर्भुवः स्वरित्येतज्जपशून्येनेतरेण[8] सर्वेण प्रकारेणेति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके प्रथमाध्याये चतुर्थः खण्डः॥ ४॥

---

१ ग. °पनं वि°। २ ग. °व्यश्र°। ३ ख. ग. घ. ङ. °रोहयेयुः। ४ ग. घ. ङ. °रोहयेत्। ५ घ. ङ. °नार्थं। ६ ख. घ. ङ. °शेष्यमा°। ७ ग. समागम्य। ८ ग. °न्येन प्र°।

अथ पञ्चमः खण्डः।

---

प्रेङ्खमारूढस्य होतुः कर्तव्यान्तरं विधत्ते—

**प्रस्तोतारं संशास्ति पञ्चविंशस्य स्तोमस्य तिसृष्वर्धतृतीयास्वर्धत्रयोदशासु वा परिशिष्टासु प्रथमं प्रतिहारं प्रब्रूतादिति, इति।**

यः प्रस्तोता साम्नः प्रस्तावभागं गायति तं **प्रस्तोतारं** प्रत्यसौ होता **पञ्चविंशस्ये**त्यादिवाक्यं प्रब्रूयात्। राजनाख्यस्य साम्न आधारभूततृचावृत्त्या यः पञ्चविंशः स्तोमः संपाद्यते तस्मिन्स्तोमे प्रथमां स्तोत्रीयामारभ्यैकविंशस्तोत्रीयासु[1] गतासु परिशिष्टासु[3] त्रयोविंशस्तोत्रीयामारभ्य तिसृषु परिशिष्टासु सतीषु मध्यवर्तिनी येयं द्वाविंशस्तोत्रीया[2] तस्याः **प्रतिहारभागः** पञ्चवारमावर्तनीयः "पञ्चकृत्वः प्रतिहरति" इति श्रुतेः। तत्र यः प्रथमः प्रतिहारस्तं **प्रतिहारं** हे प्रस्तोतर्मदग्रे कथय, अयं प्रथमः प्रतिहारो वर्तत इति। प्रतिहर्तुरनुष्ठीयमानं प्रथमं प्रतिहारं प्रति मां स्मारयेत्यर्थः। **तिसृष्ववशिष्टा**स्वेकः पक्षः। **अर्धतृतीयास्ववशिष्टा**स्विति द्वितीयः पक्षः। **अर्धत्रयोदशास्ववशिष्टा**स्विति तृतीयः पक्षः। अन्तिमां स्तोत्रीयामारभ्यावरोहप्रकारेण[4] या तृतीया तस्या उत्तरार्धं यासु तिसृष्ववस्थितं तास्तिस्रोऽर्धतृतीया। अनेनैव न्यायेन त्रयोदश्या उत्तरार्धं यासु त्रयोदशसु वर्तते ता अर्धत्रयोदशाः। **इतिशब्दः** प्रस्तोतारं प्रति होत्रा प्रयुक्तस्य प्रैषवाक्यस्य समाप्त्यर्थः।

प्रैषवाक्ये शाखान्तरपाठमाश्रित्य मतान्तरं दर्शयति—

**अर्धत्रयोदशासु प्रवाचयतेति जातूकर्ण्यः, इति।**

**अर्धत्रयोदशा**स्वित्येष तृतीयपक्ष एव **जातूकर्ण्या**ख्यस्य मुनेरभिप्रेतः। तथा प्रब्रूतादित्यस्मिन्नेवार्थे **प्रवाचयतेति** पाठोऽभिप्रेतः।

प्रैषवाक्यादूर्ध्वं होतुर्जपं विधत्ते—

**प्रोक्ते जपति, इति।**

प्रस्तोत्रा प्रथमप्रतिहारकाले **प्रोक्ते** सति होता वक्ष्यमाणमन्त्रं **जपेत्**।

तं मन्त्रं दर्शयति—

**सुपर्णोऽसि गरुत्मान्प्रेमां वाचं वदिष्यामि बहु वदिष्यन्तीं बहु पतिष्यन्तीं बहु करिष्यन्तीं बहु सनिष्यन्तीं बहोर्भूयः करिष्यन्तीं स्वर्गच्छन्तीं *स्वर्वदिष्यन्तीं स्वः**

---

* स्वर्वदिष्यन्तीमिति पदद्वयं क. ख. ग. पुस्तकेषु नास्ति।

---

१ घ. ङ. °स्तोत्रिया°। २ ग. द्वादश°। ३ घ. ङ. °स्तोत्रिया। ४ ग. घ. ङ. स्तोत्रिया°।

**पतिष्यन्तीं स्वः करिष्यन्तीं स्वः सनिष्यन्तीं स्वरिमं यज्ञं वक्ष्यन्तीं स्वर्मां यजमानं वक्ष्यन्तीमिति,** इति ।

यागनिर्वाहकत्वित्याग्नेः पक्ष्याकारस्त्वं(र त्वं) **गरुत्मान्**पक्षयुक्तोऽसि । तत्रापि **सुपर्णः** शोभनपत्रयुक्तोऽसि । त्वदनुग्रहादहमिमां शस्त्रशंसनादिरूपां **वाचं प्रकर्षेण कथयिष्यामि** । सैव वागेवानेकैर्विशेषणैर्विशिष्यते—बह्वर्थजातमपेक्षितं **वदिष्यन्ती**[म्] । तथा बहु पारलौकिकफलं प्रापयिष्यन्ती[म्] । तत्साधनभूतमिदं कर्म **बहु** प्रभूतं यथा भवति तथा **करिष्यन्तीम्** । ऐहिकमपि **बहु** धनादिकं **सनिष्यन्तीं** दास्यन्तीम् । पुनरप्येतत्कर्म प्रभूतादप्यत्यन्तं **करिष्यन्तीम्** । तथा देवानामग्रे यथोक्तं कर्म वक्तुं स्वर्गलोके गच्छन्तीम्* । तस्मिंश्च स्वर्गलोके यजमानं प्रापयिष्यन्तीम् । प्राप्य च तस्मिन्स्वर्गे निवासस्थानं **करिष्यन्तीम्** । कृत्वा च तत्र स्वर्गे भोगं दास्यन्तीम् । तस्मिन्स्वर्गे देवानां[2] पुरतः प्रभूतमिमं **यज्ञं वक्ष्यन्तीम्** । तत्र **स्वर्गे मां** होतारं यजमानत्वेन **वक्ष्यन्तीम्** । अस्ति हि सत्रे होतुर्यजमानत्वम् । "ये यजमानास्त ऋत्विजः" इति श्रुतेः ।

अस्मिन्मन्त्रे यजमानशब्दस्य सत्र एव प्रयोगो न त्वहीनैकाहयोरित्यमुमर्थं दर्शयति—

**दीक्षिते यजमानशब्दो नादीक्षिते ,** इति ।

अस्ति हि सत्रे होतुर्दीक्षितत्वम् । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमिति श्रुतेः । अहीनैकाहयोस्तु तादृशश्रुत्यभावाददीक्षित एव होता ।

पुनरप्यन्यं विशेषं मन्त्रे दर्शयति—

**स्वरमुमिति योऽस्य प्रियः स्यान्न तु वक्ष्यन्तीमिति ब्रूयात्,** इति ।

अदीक्षितस्य **होतुर्यो** यजमानः **प्रियः** स्यात्तं यजमानमुद्दिश्य **स्वरमुमिति ब्रूयात्** । अदःशब्दो नामनिर्देशार्थः । अमुं देवदत्तनामकं यजमानं **स्वः** स्वर्ग इत्येतावदभिधाय ततो भविष्यद्वाचकं **वक्ष्यन्तीमिति**शब्दं **न ब्रूयात्**किं तु वर्तमानवाचकं शब्दं ब्रूयादित्यर्थादवगम्यते । तेन स्वर्गप्राप्तेरविलम्बः सूचितो भवति ।

उक्तमन्त्रजपादूर्ध्वं मन्त्रान्तरजपं विधत्ते—

**उक्थवीर्याणि च ,** इति ।

---

* एतस्मादनन्तरं स्वर्वदिष्यन्तीमिति पदद्वयस्य व्याख्यानं त्रुटितम् । तच्च " गत्वा च बहु यथा भवति तथा कर्म वदिष्यन्तीम् " इति भवेत् ।

---

१ क. स्वर्गे लो° । २ घ. ङ. देवतानां ।

"घोषाय त्वा" " श्लोकाय त्वा " शृण्वते त्वा " "उपशृण्वते त्वा" "आश्रुत्यै त्वा" "आश्रुताय त्वा" इत्येते षण्मन्त्रा उक्थवीर्याणि, षण्णां शस्त्राणामन्ते क्रमेण होत्रा पठनीयत्वात् । चकारः पूर्वोक्तस्य जपतीति पदस्यानुवृत्त्यर्थः ।

पुनरपि जप्यं मन्त्रान्तरं दर्शयति—

सं प्राणो वाचा समहं वाचा सं चक्षुर्मनसा समहं मनसा सं श्रोत्रमात्मना समहमात्मना मयि महान्मयि भर्गो मयि भगो मयि भुजो मयि स्तोभो मयि स्तोमो मयि श्लोको मयि घोषो मयि यशो मयि श्रीर्मयि कीर्तिर्मयि भुक्तिरिति, इति ।

योऽयं प्राणवायुः सोऽयं वाचा संगच्छताम् । तथाऽहमपि वाचा संगच्छतां ( संगच्छै ) संगतो भूयासम् । तथा चक्षुरिन्द्रियं मनसा संयुज्यताम् । अहमपि मनसा संयुक्तो भूयासम् । तथा श्रोत्रेन्द्रियं प्रेरकेण परमात्मना संयुज्यताम् । अहमपि तेनाऽऽत्मना संयुक्तो भूयासम् । तादृशे मयि होतरि महान्प्रौढो विद्यादिगुणः संपद्यताम् । भर्गो वैरिभर्जनसमर्थं तेजः । भगो द्रव्यसंपत्तिलक्षणं भाग्यम् । भुजस्तद्भोगः । स्तोभस्तोमौ सामगतौ, तदुभयजन्यं फलमप्यस्तु । यशो विद्याजन्या प्रसिद्धिः । श्रीर्गजाश्वादिसंपत्तिः[1] । कीर्तिर्दानजन्या प्रसिद्धिः । भुक्तिर्भोगः । भुजभुक्त्योर्भोग्यभेदेन भेदो द्रष्टव्यः ।

जपान्तरं विधत्ते—

आहूय वागिति जपति, इति ।

शस्त्रानुज्ञापनार्थम् "अध्वर्यो शोंसावोम्" [ ऐ० ब्रा० अ० १२ ख० १ ] इति मन्त्रेण तस्याऽऽह्वानं कृत्वा ततो वागिति शब्दं जपेत् ।

प्रकृतौ होतुर्बहव आहावा विद्यन्ते चोदकप्राप्तानां तेषामपवादाय विशेषणं विधत्ते—

त्रय आहावाः शस्त्रादेर्निविदः परिधानीयाया इति, इति ।

" तदिदास " [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिकं वक्ष्यमाणं शस्त्रं, तस्याऽऽदेरुपक्रमस्य संबन्धी कश्चिदाहावः । " अध्वर्यो शोंसावोम् " इत्याहावमुक्त्वा पश्चाच्छस्त्रोपक्रमं कुर्यात् । इन्द्रो देव इत्यादिपदसमूहो निवित् । समाप्त्यर्थमृक्परिधानीया । तदुभयोपक्रमे शोंसावोमित्येवंरूपौ द्वावाहावौ । त एते त्रय आहावा अत्र कर्तव्याः, न तु प्रकृतिवदनुरूपधाय्यादिष्वाहावः पठनीयः ।

---

१ क. ख. ग. 'गेवाश्वा'।

अत्र शस्त्रोपक्रमात्पूर्वमध्वर्युकृत्यं दर्शयति—

**शब्दानध्वर्यवः कारयन्ति, इति ।**

ते च शब्दा आपस्तम्बेन दर्शिताः—"उपाकृते[1] माहेन्द्रस्य स्तोत्रे[2] सर्वा वाचो वदन्त्युत्कोचं यजमानाः कुर्वतेऽपाघाटलिकास्तम्बलवीणाः पिच्छोला इति, प्रश्नयो वादयन्ति संप्रवदन्ति वीणाशङ्खानाँधीं[3] तूणवाः" इति ।

यजमानकृत्यं विधत्ते—

**एतस्मिन्नहनि प्रभूतमन्नं दद्यात् , इति ।**

पुरुषान्तरकर्तव्यं दर्शयति—

**राजपुत्रेण चर्म व्याधयन्त्याघ्नन्ति भूमिदुन्दुभिं पत्न्यश्च काण्डवीणा भूतानां च मैथुनं ब्रह्मचारिपुंश्चल्योः संप्रवादोऽनेकेन साम्ना निष्केवल्याय स्तुवते राजनस्तोत्रियेण प्रतिपद्यते, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥**

चर्मवेधनप्रकार आपस्तम्बेन दर्शितः—"उत्तरेणाऽऽग्नीध्रीयं कटसंघाते तैजससंघातेनाऽऽर्द्रं चर्म शयनार्थं वितत्योच्छ्वसन्ति विपरियान्त्येतच्च[6] कर्म कवचिनस्तेषामेकैकं संशास्ति माँ प्रवात्सीर्मा[7] निर्वात्सीरिति[8] तत्तं[9] विधानाति(?) पादयन्ति" इति ।

भूमिदुन्दुभ्याघातोऽपि तेनैव दर्शितः—"अपरेणाऽऽग्नीध्रीयं भूमिदुन्दुभिमवटं[10] खनन्त्यर्धमन्तर्वेद्यर्धं बहिर्वेदि[11] तमार्द्रेण चर्मणोत्तरलोम्नाऽभिवितत्य शङ्कुभिः परिनिहत्यात्रैतत्पुच्छकाण्डमाहननार्थं[12] निदधाति दुन्दुभीन्समाघ्नन्ति पुच्छकाण्डेन भूमिदुन्दुभिम्" इति । **काण्डवीणाः** प्रसिद्धाः । ताश्च यजमानानां पत्नीभिर्वाद्यन्ते । **भूतमैथुन**देशोऽपि तेनैव दर्शितः—"उत्तरस्यां वेदिश्रोण्यां पुंश्चल्यै[13] मागधाय च परिश्रयन्ति" इति । **ब्रह्मचारिपुंश्चल्योः संप्रवादः** सामगब्राह्मणे दर्शितः । एतस्मिन्काण्ड उद्गातारोऽ**नेकविधेन साम्ना** निष्केवल्याख्यशस्त्रसिद्ध्यर्थं स्तोत्रं कुर्वन्ति । तत्रान्तिमं **राजना**ख्यं साम, तेन साम्ना क्रियमाणस्य स्तोत्रस्याऽऽधारभूतो यस्तृचस्तेन तृचेन होता निष्केवल्याख्यं शस्त्रं[14] प्रारभेत ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

१ ख. °ते पा° । ग. °ते याप्वाट° । २ ख. घ. ङ. °वीणा पि° । ३ क. वीणां श° । ४ ख. घ. ङ. °नाधीतू° । ग. °न्वितू° । ५ ग. °तस्योच्छ्व° । ६ क. ख. °रिपान्त्ये° । ७ क. ख. मा एवा° । घ. ङ. मा पवा° । ८ क. निवात्सी° । ९ ग. °त्तेऽविद्या ना° । १० क. °टं खानयन्त्य° । ११ ग. घ. ङ. °वेंद्यादि त° । १२ क. °हवना° । १३ क. °श्चल्यो मा° । १४ ग. °स्त्रं विहृत्य प्रा° ।

अथ षष्ठः खण्डः ।

अत्र चोदकप्राप्तं निष्केवल्यशस्त्रं विहृत्य प्रदर्शयति—

तदिदास भुवनेषु ज्येष्ठं तां सु ते कीर्तिं मघवन्महित्वा भूय इद्वावृधे वीर्याय नृणामु त्वा नृतमं गीर्भिरुक्थैरिति तिस्रः, इति ।

"तदिदास" [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिकं नवर्चं सूक्तम् । "तां सु ते कीर्तिं मघवन्" [ ऋ० सं० म० १० सू० ५४ ऋ० १ ] इत्यादिकं षडृचं सूक्तम् । " भूयः " [ ऋ० सं० म० ६ सू० ३० ऋ० १ ] इत्यादिकं पञ्चर्चं सूक्तम् । "नृणामु त्वा" [ ऋ० सं० म० ३ सू० ५१ ऋ० ४ ] इत्यादिकास्तिस्र ऋचः । इत्यनेन क्रमेण विहरेत् ।

मतान्तरानुसारेण कंचिद्विशेषं विधत्ते—

अत्र हैके स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाऽभि योधीरित्यात्मन एते पदे उद्धृत्य पक्षपदे प्रत्यवदधात्यश्वायन्तो मघवन्निन्द्र वाजिनो गामश्वं रथ्यमिन्द्र संकिरेत्येतयोश्च स्थान इतरे, इति ।

अत्रास्मिन्निष्केवल्ये शस्त्रे केचित्खल्वेवं वदन्ति । एतच्छस्त्रगतयोरात्मभागस्थपादयोः पक्षभागस्थपादयोश्च परस्परं व्यत्ययः कर्तव्य इति । यथा चित्यस्याग्नेः पञ्चावयवा आम्नाताः—"शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मा" [ ऐ० आ० २ अ० ३ ख० ४ ] इति, तथा शस्त्रेऽपि पञ्चावयवा द्रष्टव्याः । चित्याग्नेर्मध्यशरीरमात्मा, शस्त्रेऽपि योऽयं पूर्वं विहृतो भागः "तदिदास" इत्यारभ्य "गीर्भिरुक्थैरिति तिस्रः" इत्यन्तेन ग्रन्थेन सोऽयं भाग[1]वत आत्मस्थानीयः । "तदिदास" [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्येतस्मिन्सूक्ते तृतीयस्यामृच्युत्तरार्धे "स्वादोः स्वादीयः" [ ऋ० सं० म० १० सू० १२० ऋ० ३ ] इत्यादिकौ यौ द्वौ पादौ तावुभावात्मभागस्य संबन्धिनौ, तदुभयमित उद्धर्तव्यम् । तथा वक्ष्यमाणे शस्त्रस्य दक्षिणपक्षभागे "अभि त्वा शूर" [ ऋ० सं० म० ७ सू० ३२ ऋ० २२ ] इत्यस्मिन्प्रगाथेऽश्वायन्त इति योऽयं पादो यश्चोत्तरपक्षभागे "त्वामिद्धि" [ ऋ० सं०

तदिदास भुव०—ऋ० सं० म० १० सू० १२० ऋ० १ । तां सु ते कीर्तिं०—ऋ० सं० म० १० सू० ५४ ऋ० १ । भूय इद्वावृधे०—ऋ० सं० म० ६ सू० ३० ऋ० १ । नृणामु त्वा नृतमं०—ऋ० सं० म० ३ सू० ५१ ऋ० ४ ।

१ क. °ग आ ।

म० ६ सू० ४६ ऋ० १ ] इति प्रगाथे गामश्वमिति पादस्तदुभयं च तत उद्धर्तव्यम् । उद्धृत्य च "स्वादोः स्वादीयः" इत्यस्य स्थाने "अश्वायन्तः" इति पादः पठनीयः । तस्य पादस्य स्थाने "स्वादोः" इत्यादिपादः पठनीयः । "अदः सु मधु" इत्यस्य स्थाने "गामश्वम्" इति पादः पठनीयः । तस्य च पाद[स्य] स्थाने "अदः सु मधु" इत्यादिपादः पठनीयः ।

अस्य व्यत्ययेन प्रयोगस्य फलं दर्शयति—

श्रियमह गोरश्वमात्मन्धत्ते सं पक्षयोः पतनाय, इति ।

अहशब्द एवकारार्थः । आत्मन्नात्मस्थानीये शस्त्रभागे " अश्वायन्तः " " गामश्वम् " इति पादयोः पाठेन गोसंबन्धिनीं श्रियमश्वं च संपादयत्येव । तथा दक्षिणोत्तरपक्षभागयोः " स्वादोः " "अदः सु मधु" इतिपादद्वयपठनं पक्षयोः सम्यक्पतनायोपयुज्यते ।

पूर्वोक्तेषु " तदिदास " [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इत्यादिषु कंचिद्विशेषं विधत्ते—

नदं व ओदतीनामित्येतयैतानि व्यतिषजति पादैः पादान्बृहतीकारं नदवन्त्युत्तराणि प्रथमायां च पुरुषाक्षराण्युपदधाति पादेष्वेकैकमवसाने तृतीयवर्जं स खलु विहरति, इति ।

" नदं वः " इत्यादिका येयमृगस्ति तया सहैतानि " तदिदास " इत्यादिसूक्तानि मिश्रयेत् । कथं मिश्रणमिति तदुच्यते—एतस्या ऋचः संबन्धिभिः पादैः सह सूक्तगतान्पादान्मेलयेत् । बृहतीकारमिति णमुल्प्रत्ययान्तः । एकैकामृचं बृहतीं कृत्वेत्यर्थः । सूक्तस्य पदानि प्रथममुच्चार्य नदशब्दयुक्तान्यृचः पदान्युत्तराणि यथा भवन्ति तथोच्चारयेत् । किंच " तदिदास " इत्येतस्यां प्रथमायामृचि पुरुषेत्येतानि त्रीण्यक्षराणि प्रक्षिपेत् । प्रथमपादस्यावसाने " पु " इत्येकमक्षरं द्वितीयपादस्यावसाने " रु " इत्येकमक्षरं चतुर्थपादस्यावसाने "ष" इत्येकमक्षरम् । तृतीयपादे तु नास्त्यक्षरस्य प्रक्षेपः । अतस्तृतीयवर्जमित्युच्यते । एवं सति षट्त्रिंशदक्षरा बृहती संपद्यते । " तदिदास " [ ऋ० सं० म० १० सू० १२० ऋ० १ ] इति पादे दशाक्षराणि पु इत्येकमक्षरम् । " नदं वः " [ ऋ० सं० म० ८ सू० ६९ ऋ० २ ] इति पादे सप्ताक्षराणि । " यतो जज्ञे " [ ऋ० सं० म० म० १० सू० १२० ऋ० १ ] इति पादे दशाक्षराणि रु इत्येकमक्षरम् । " नदं योयुवतीनाम् "

---

नदं व ओदतीनाम्०—ऋ० सं० म० ८ सू० ६९ ऋ० २ ।

[ ऋ० सं० म० ८ सू ६९ ऋ० २ ] इति पादे सप्ताक्षराणि । तदेवं मिलित्वा षट्त्रिंशदक्षराणि संपद्यन्ते । एवमुत्तरत्रापि योजनीयम् । यः पुमानेतत्सर्वं जानाति स एवैतन्निष्केवल्यशस्त्रं विहरति विशेषेण ततस्तत आनीय संपादयति ।

यथोक्तं[1] विहरणं प्रतिज्ञापूर्वमुदाहरति—

अपि निदर्शनायोदाहरिष्यामस्तदिदास भुवनेषु ज्येष्ठं पु । नदं व ओदतीनाम् । यतो जज्ञ उग्रस्त्वेष नृम्णो रु । नदं योयुवतीनो३म् । सद्यो जज्ञानो निरिणाति शत्रून्पतिं वो अघ्न्यानाम् । अनु यं विश्वे मदन्त्यूमाः षो धेनूनामिषुध्यसोमिति, इति ।

न केवलं विहरणस्य लक्षणकथनमत्रापि चोदाहरिष्याम[2] इति प्रतिज्ञा । "तदिदास" इत्यारभ्य "इषुध्यसोम्" इत्यन्तं द्वयोर्बृहत्योरुदाहरणं संपादितम् ।

बृहतीद्वयगर्भितायाः "तदिदास" इत्येतस्या ऋच आवृत्तिं विधत्ते—

एवमेतां त्रिः, इति ।

एवमुक्तेन प्रकारेण "नदं वः" इत्यादिपादयोजनेन पुरुषाक्षरत्रययोजनेन च संपन्नामेताम् "तदिदास" इत्यादिकामृचं त्रिवारं पठेत् ।

यदुक्तं पूर्वत्र "राजनस्तोत्रियेण प्रतिपद्यते" [ ऐ० आ० ९ अ० १ ख० ९ ] इति, तत्र कंचिद्विशेषं दर्शयति—

अन्यासु चेत्समाम्नातासु राजनेन साम्ना स्तुवीरन्यथास्थानं ता इहैवेमा असमाम्नातासु चेत्स्तुवीरन्त्समाम्नातस्य तावतीरुद्धृत्य तत्र ताः शंसेदिहो एवेमाः, इति ।

राजनसाम्न आधारभूतास्वृक्षु त्रयः पक्षाः संभवन्ति । "तदिदास" इत्यादिका ऋच इत्येकः पक्षः । ताभ्योऽन्या ऋच इत्येकः पक्षः । ताश्चान्या द्विधा भिद्यन्ते । उदाहृतेषु

---

तदिदास० ऋ० सं० म० १० सू० १२० ऋ० १ । नदं व ओदतीनां०—ऋ० सं० म० ८ सू० ६९ ऋ० २ । यतो जज्ञे० ऋ० सं० म० १० सू० १२० ऋ० १ । नदं योयुवतीनाम्०—ऋ० सं० म० ८ सू० ६९ ऋ० २ । सद्यो जज्ञानः—ऋ० सं० म० १० सू० १२० ऋ० १ । पतिं वः०—ऋ० सं० म० ८ सू० ६९ ऋ० २ । अनु यं०—ऋ० सं० म० १० सू० १२० ऋ० १ । धेनूनामिषुध्यसि—ऋ० सं० म० ८ सू० ६९ ऋ० २ ।

---

१ ग. °वेकमु°। २ ग. °दाहृत्य प्रदर्शयिष्यामीति ।

सूक्तेषु समाम्नाता असमाम्नाताश्चेति। तत्र "तदिदास" इत्यादिकासु राजनसामगानपक्षे पूर्वोक्त एव शस्त्रोपक्रमः। यदा तु तदिदासेत्यादिभ्योऽन्यासु यथोक्तसूक्तगतासु समाम्नातास्वृक्षूद्गातारो राजनेन स्तुवीरंस्तदानीं पूर्वोक्तन्यायेन राजनसामाधारभूताभिरन्याभिर्ऋग्भिः शस्त्रोपक्रमः प्रसज्येत, तथोपक्रमो न कर्तव्यः। किंतु ता अन्याः सामाधारभूता ऋचः स्वस्थान एव पठनीयाः। इमाः "तदिदास" इत्यादिका इहैव शस्त्रोपक्रम एव पठनीयाः। यदा पुनरुद्गातारो यथोक्तसूक्तेष्वसमाम्नातासु कासुचिन्नवीनास्वृक्षु राजनेन स्तुवीरंस्तदानीं समाम्नातस्य सूक्तस्य मध्ये तावतीर्नूतनानामृचां संख्यया संख्याताः काश्चिदृच उद्धृत्य तत्र तासामृचां स्थाने ता नवीना ऋचः शंसेत्। इमास्तु "तदिदास" इत्यादिका इहो एवं[1] शस्त्रोपक्रम एव पठनीयाः।

उद्धारपक्षे तु तदुद्धारनूतनप्रक्षेपयोः स्थानं दर्शयति—

**अन्यासु चेत्प्राक्सूददोहसस्ताः, इति।**

उदाहृतेषु सूक्तेषु या असमाम्नाता अन्या ऋचस्तासु यद्युद्गातारो राजनं[2] साम गायेयुस्तदानीं सूददोहोनामिकायाः "ता अस्य सूददोहसः" [ ऋ० सं० म० ८ सू० ६९ ऋ० ३ ] इत्येतस्याः पूर्वं काश्चिदत्राऽऽम्नाता अपनीय ता नवीना राजनसामाधारभूता ऋचस्तत्र प्रक्षिपेत्।

पक्षत्रयेऽपि शस्त्रोपक्रमस्य नास्त्यन्यथात्वमित्येतद्दर्शयति—

**तदिदासेत्येतदादि शस्त्रम्, इति।**

यदि "तदिदास" इत्यादिषु राजनं[3]सामगानं यदि वा ततोऽन्यासु समाम्नातासु यदि वा नवीनासु सर्वथाऽप्युपक्रम एकविध एव।

होत्रा शस्त्रे शस्यमानेऽध्वर्योर्यः प्रतिगरो विहितः स द्विविधः, प्राकृतो विहृतश्चेति। तत्र सर्वत्र शस्त्रेषु सामान्येन प्राकृतप्राप्तौ सत्यां तदपवादेन विहृते षोडशि[4]शस्त्रे विहृतः प्रतिगरः प्रयुक्तस्तद्दृष्टान्तेनात्रापि विहृतः प्रतिगर इत्याशङ्क्य तं[5]द्वारयति—

**अविहृतश्चात्र प्रतिगरः, इति।**

प्रकृतावाम्नातात्प्रतिगरमन्त्राद्विशेषस्य कस्यचि[6]द्धारणं संपादनं यस्मिन्प्रतिगरे सोऽयं विहृतः प्रतिगरः, सोऽत्र न कर्तव्यः किंतु प्राकृत एव कर्तव्यः।

"तदिदास" इत्यारभ्य गीर्भिरुक्थैरिति तिस्र इत्यन्तेन ग्रन्थेन निष्केवल्यशस्त्रस्य योऽयमात्मभाग उक्तस्तस्यावसाने कांचिदृचं विधत्ते—

---

१ घ. ङ. °व पूर्ववच्छस्त्रो°। २ ग. °नं गा°। ३ ग. °नगा°। ४ क. घ. षोळशि°। ५ क. ख. तद्धार°। ६ ग. ङ. °चिद्वार°।

ता अस्य सूददोहस इत्येतदादिः सूददोहाः सूददोहाः इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

इति बह्वृचब्राह्मणारण्यककाण्डे पञ्चमारण्यके प्रथमोऽध्यायः ॥ १ ॥

ता अस्येत्युक्त एव पाद आदिर्यस्या ऋचः सेयमृगेतदादिः। सा च सूददोहो-नामिका, साऽत्र पठनीया। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये पञ्चमारण्यके प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यककाण्डभाष्ये पञ्चमारण्यके प्रथमोऽध्यायः ॥ १ ॥

---

अथ पञ्चमारण्यके द्वितीयोऽध्यायः।

तत्र प्रथमः खण्डः। ( सप्तमः )

---

पक्ष्याकारेण निरूपितस्य निष्केवल्यशस्त्रस्य योऽयं मध्यशरीरभागः सोऽयं तदिदासेत्यादिना पूर्वं निरूपितः। अथ भागान्तरं प्रतिजानीते—

ग्रीवाः, इति।

वक्ष्यमाणास्तिस्र ऋचः शस्त्रस्य ग्रीवास्थानीयाः। अंसाभिप्रायेण ग्रीवा इति बहुवचनम्। ग्रीवांसरूपा ऋचः कथ्यन्त इति शेषः।

तत्र प्रथमामाह—

यस्येदमारजस्तुजो युजो वनं सहः। इन्द्रस्य रन्त्यं बृहत्, इति।

यस्येन्द्रस्येदं शस्यमानं निष्केवल्यमारजः सर्वतो रञ्जकम्। यद्वा यस्येन्द्रस्येदं जगत्पालनं सर्वतो रञ्जकम्। यस्येन्द्रस्य युजो योगस्तुजो वैरिणां हिंसकः। तथा यस्येन्द्रस्य सहो बलं वनं भक्तैर्वननीयम्। तस्येन्द्रस्य रन्त्यं रमणं बृहत्प्रौढम्, क्रीडा महतीत्यर्थः।

---

ता अस्य सूददोहसः०—ऋ० सं० म० ८ सू० ६९ ऋ० ३।

---

१ क. ख. घ. ङ. पूर्वो।

द्वितीयामृचमाह—

नाधृष आदधर्षदाधृषाणं धृषितं शवः । पुरा
यदीमतिव्यथिरिन्द्रस्य धृषितं सहः, इति ।

[ वैरि ]णां [ शवो ? ] बलं धृषितं येनेन्द्रेण तिरस्कृतम् । दाधृषाणमतिशयेन तिरस्कारं (रो)यमिन्द्रं नाधृषः । अन्येन केनापि तिरस्कर्तुमशक्यः । नैवारिरादधर्षन्नैव तिरस्कृतवान् । यद्यस्मात्कारणात्पुरा पूर्वस्मिन्काल ईमतिव्यथिरिमं सत्तु( ? )मतिशयेनेन्द्रश्चालितवान्, तस्मादिन्द्रस्य सहो बलं धृषितं वैरिधर्षणक्षमम् ।

तृतीयामृचमाह—

स नो ददातु तं रयिं रयिं पिशङ्गसंदृशम् ।
इन्द्रः पतिस्तवस्तमो जनेष्वा , इति ।

जनेषु सर्वप्राणिषु मध्य आ समन्तात्तवस्तमोऽतिशयेन बलवान्पतिः पालक इन्द्रः पिशङ्गसंदृशं पिङ्गलवर्णत्वेन सम्यग्दृष्टिप्रियं रयिं हेमरूपं स्वयं लब्धवान् । तं रयिं स्वेन लब्धं तद्धनं स इन्द्रो नोऽस्मभ्यं ददातु ।

ग्रीवास्थानीयाः शाखान्तरगतास्तिस्र ऋचो दर्शयित्वा स्वशाखागतामेकामृचं दर्शयति—

सूददोहाः, इति ।

“ता अस्य सूददोहसः” [ ऋ० सं० म० ८ सू० ६९ ऋ० ३ ] इत्यादिकेत्यर्थः ।

तस्य मध्यशरीरभागं ग्रीवाभागं चोक्त्वा भागान्तरं दर्शयति—

शिरो गायत्रमिन्द्रमिद्गाथिनो बृहदिति, इति ।

गायत्रीछन्दस्कमिन्द्रमिदिति सूक्तं शस्त्रस्य शिरोभागस्तं भागं शंसेत् ।

तत्र कंचिद्विशेषं दर्शयति—

अन्यासु चेत्समाम्नातासु स्तुवीरन्नुभयासंस्था न
विपर्ययोऽसमाम्नातासु चेत्स्तुवीरन्मिश्रासु च, इति ।

“इन्द्रमिद्गाथिनः” [ ऋ० सं० म० १ सू० ७ ऋ० १ ] इत्येतस्मात्तृचादन्यासूत्तरासु तिसृष्वृक्ष्वाम्नातासु यद्युद्गातारः स्तुवीरंस्तदानीं तास्तिस्र ऋच इन्द्रमिद्गाथिन इत्येतस्य स्थाने पठनीयाः । तासां स्थाने त्विन्द्रमिदित्याद्यस्तिस्र इति विपर्ययः । एतस्मिन्सूक्ते या असमाम्नाता अन्यत्र समाम्नातास्तिस्र ऋचस्तासु यद्यु-

इन्द्रमिद्गाथिनः०—ऋ० सं० म० १ सू० ७ ऋ० १ ]

१ ग. सन्तुमं ।

द्वातारः स्तुवीरंस्तदानीं तासां मध्ये सूक्तगतास्तिस्र ऋच उद्धृत्य तस्मिन्स्थाने गानाधारभूतास्तिस्र ऋचः पठेत् । मिश्रासु गानेऽप्ययमेव न्यायः । गानाधारस्य तृचस्य कियानपि भागोऽत्र समाम्नातः । अवशिष्टस्तु प्रदेशान्तरस्थो यदा भवति तदानीमेतास्तिस्रो मिश्रा भवन्ति ।

उद्धारस्थाने कंचिद्विशेषं दर्शयति—

**सूक्तस्योत्तमां सूददोहाः, इति ।**

पूर्वं सूददोहसः प्रागुद्धार उक्तः । अत्र तु सूददोहसः प्राचीना सूक्तस्योत्तमा येयम् "इन्द्रं वो विश्वतस्परि" [ऋ० सं० म० १ सू ७ ऋ० १०] इत्यृगस्ति तस्याः प्रागेवोद्धारस्तां तु पठेत् । ततः सूददोहाः पठनीया ।

पुनरपि शस्त्रस्यापरं भागं दर्शयति—

**विजवः, इति ।**

विशेषेण जवो वेगो यस्मिन्पक्षिशरीरभागे समुत्पद्यते सोऽयं भागो विजवः । तत्स्थानीयः शस्त्रभाग उच्यत इति शेषः ।

तस्मिन्भागे प्रथमामृचमाह—

**सुतस्ते सोम उपयाहि यज्ञं मत्स्वा मदं पुरुवारं**
**मघाय । मंहिष्ठ इन्द्र विजुरो गृणध्यै, इति ।**

हे इन्द्र ते त्वदर्थं सोमो वल्ल्याख्यः सुतोऽभिषुतोऽतो यज्ञमेतमुपयाहि त्वं प्राप्नुहि । मघायास्माकं धनाय पुरुवारं पुरुभिर्बहुभिर्वरणीयं मदं हर्षं यथाऽहं प्राप्नोमि तथा त्वं मत्स्व मदमनुगृह्णन्हृष्टो भव । यथाऽस्मद्धनाय त्वं हृष्यसि तथा त्वं मंहिष्ठोऽतिशयेन पूज्यश्च सन्विदुरो विशिष्टलोकद्वाराणि गृणध्या अस्मदग्रे कथयितुमत्र हृष्टो भव ।

द्वितीयामृचमाह—

**ससाहतुर्वृत्रहत्येषु शत्रूनृभुर्विगाह एषः ।**
**स नो नेतारं महयाम इन्द्रम्, इति ।**

स इन्द्रो वृत्रहत्येषु वृत्रनामकस्यासुरस्य वधार्थेषु युद्धेषु शत्रून्स्वैरिणो वृत्रसंबन्धिनः सर्वानसुरान्ससाहतुः । अभिभूतवान् । स एष इन्द्र ऋभुर्देवतात्मा सन्विगाहो विशेषेणास्माभिरवगाढुं सेवितुं शक्यः । नोऽस्माकं नेतारं स्वर्गे गमयितारमिन्द्रं महयामो वयं पूजयामः ।

तृतीयामृचमाह—

**इनो वसुः समजः पर्वतेष्ठाः प्रति वामृ-**

---

१ ग. ॅन्विजरो ।

जीषी । इन्द्रः शश्वद्भिर्जोहूत्र एवैः, इति ।

इन्द्रो देवः शश्वद्भिर्निरन्तरवर्तिभिरेवैरस्मद्यज्ञं प्रत्यागमनैर्जोहूत्रोऽतिशयेन होमनिष्पादकः । कीदृश इन्द्रः । इनः सर्वेषामीश्वरो वसुर्धनवान्समजः समीचीनगतियुक्तः पर्वतेष्ठाः पर्वतसमान ऐरावते मेघे वाऽवस्थितः । वां प्रत्यृजीषी । यज्ञकर्तारौ हे दंपती युवामुद्दिश्यर्जीषोपलक्षितसोमरसवान् । भवदीयं सोमं स्वी करोतीत्यर्थः ।

एतास्तिस्र ऋचः पठित्वाऽन्ते पठनीयामृचं दर्शयति—

सूददोहाः, इति ।

शंसनप्रकारे विशेषं दर्शयति—

इत्येतत्त्रयं ग्रीवाः शिरो विजवः सर्वमर्धर्चर्यम्, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके द्वितीयाध्याये
प्रथमः खण्डः ॥ १ ॥ (७)

यस्येदमित्यादिकः शस्त्रस्य यो ग्रीवाभाग इन्द्रमिद्गाथिन इत्यादिको[1] यः शिरोभागः सुतस्ते सोम इत्यादिको [यो] विजवभाग इत्येतद्भागत्रयं सर्वमर्धर्च्य(र्चे)शंसनार्हम् । त्रिविधं हि शंसनम् । पादेऽवसायार्धर्चे प्रणव इत्येकम् । अर्धर्चेऽवसाय कृत्स्नायामृचि प्रणव इति द्वितीयम् । विनैवावसानमृगन्ते प्रणव इति तृतीयम् । एवं सत्युक्तेषु शस्त्रभागेष्वर्धर्चेऽवसानमित्ययमेव पक्षोऽनुष्ठेयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये
पञ्चमारण्यके द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥ (७)

---

अथ द्वितीयः खण्डः । (अष्टमः)

---

भागान्तरं दर्शयति—

राथंतरो दक्षिणः पक्षः, इति ।

योऽयं शस्त्रस्य दक्षिणपक्षभागः सोऽयं रथंतरसामसंबन्धी ।

तमेव रथंतरसंबन्धं विस्पष्टयति—

अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथंतरस्य स्तोत्रियानुरूपौ प्रगाथौ चतस्रः सतीः षड्बृहतीः करोति, इति ।

---

अभि त्वा शूर०—ऋ० सं० म० ७ सू० ३२ ऋ० २२ । अभि त्वा पूर्व०—ऋ० सं० म० ८ सू० ३ ऋ० ७ ।

---

१ ख. घ. ङ. °र्धर्च्यं शं° ।

ऋग्द्वयात्मकः प्रगाथः, " द्वृचाः प्रगाथाः " इत्याश्वलायनेनोक्तत्वात्। " अभि त्वा शूर " [ ऋ० सं० म० ७ सू० ३२ ऋ० २२ ] इत्ययं प्रगाथो रथंतरसाम्नः स्तोत्रियः स्तोत्रसंबन्धी। स्तोत्रादौ ह्येष गीयते। " अभि त्वा पूर्व " [ ऋ० सं० म० ८ सू० ३ ऋ० ७ ] इत्ययं प्रगाथस्तस्य साम्नोऽनुरूपः स्तोत्रियस्यानन्तरमेव गीयमानत्वात्। तावुभौ प्रगाथौ मिलित्वा यद्यप्यध्ययनकाले चतस्र एवर्चस्तथाऽपि प्रयोगकाले षड्बृहतीः कुर्यात्। कथं तत्करणमिति तदुच्यते। अभि त्वा शूरेत्यसावृक्स्वत एव बृहती वेदे समाम्नाता। ततो द्वितीयबृहत्यर्थं तस्या ऋचश्चतुर्थपादमीशानमिन्द्रेत्यादिकं पुनर्द्विः पठित्वा "नत्वावान्" [ ऋ० सं० म० ७ सू० ३२ ऋ० २३ ] इत्येतस्यां द्वितीयस्यामृचि पूर्वार्धं पठेत्। सेयं द्वितीया बृहती। ततस्तृतीयबृहत्यर्थं "न जातः" [ ऋ० सं० म० ७ सू० ३२ ऋ० २४ ] इत्येतद्द्वितीयबृहतीगतं चतुर्थं पादं पुनर्द्विरभ्यस्य ततः समाम्नातायां द्वितीयस्यामृच्युत्तरार्धम् "अश्वायन्तः" [ ऋ० सं० म० ७ सू० ३२ ऋ० २४ ] इत्यादिकं पठेत्सेयं तृतीया बृहती। अनेनैव न्यायेन द्वितीयेऽपि प्रगाथे चतुर्थषष्ठौ पादौ पुनरपि द्विरावर्त्य बृहतीत्रयं संपादयेत्। अत्राश्वायन्त इति पादमुद्धृत्य तस्य स्थाने "स्वादोः स्वादीयः" [ ऋ० सं० म० १० सू० १२० ऋ० ३ ] इति पादं प्रक्षिपेत्। एतच्च पूर्वाध्यायेऽभिहितम्।

उक्तक्रमेण बृहतीः पठित्वा पश्चात्पठनीयानि सूक्तानि दर्शयति—

**इन्द्रस्य नु वीर्याणि प्रवोचं त्वे ह यत्पितरश्चिन्न इन्द्रेति**
**पञ्चदश यस्तिग्मशृङ्गो वृषभो न भीम उग्रो जज्ञे वीर्याय**
**स्वधावानुदु ब्रह्माण्यैरत श्रवस्याऽऽते मह इन्द्रोऽत्युग्रेति**
**पञ्च सूक्तान्या न इन्द्रो दूरादा न आसादिति संपात**
**इत्था हि सोम इन्मद इति पङ्क्तिः सूददोहाः, इति।**

"**इन्द्रस्य नु वीर्याणि**" इति सूक्तं पञ्चदशर्चम्। "**त्वे ह यत्पितरः**" इत्यस्मिन्प(स्य प)ञ्चविंशत्यृगात्मकस्य सूक्तस्याऽऽदौ पञ्चदशर्चः पठनीयाः। "**यस्तिग्मशृङ्ग**" इति सूक्तमेकादशर्चम्। "**उग्रो जज्ञे**" इति सूक्तं दशर्चम्। "**उदु**

---

इन्द्रस्य नु०—ऋ० सं० म० १ सू० ३२ ऋ० १। त्वे ह यत्पितरः०—ऋ० सं० न० ७ सू० १८ ऋ० १। यस्तिग्मशृङ्ग०—ऋ० सं० म० ७ सू० १९ ऋ० १। उग्रो जज्ञे०—ऋ० सं० म० ७ सू० २० ऋ० १। उदु ब्रह्माणि०—ऋ० सं० म० ७ सू० २४ ऋ० १। आ ते महः०—ऋ० सं० म० ७ सू० २९ ऋ० १। आ न इन्द्रो०—ऋ० सं० म० ४ सू० २० ऋ० १। इत्था हि सोमः०—ऋ० सं० म० १ सू० ८० ऋ० १।

ब्रह्माणि" इति सूक्तं षड्टचम् । "आ ते महः" इत्यादीनि पञ्च सूक्तानि । तेषु प्रथमम् । "आ ते महः" इति सूक्तं षड्टचम्[1] । "न सोमः" [ ऋ० सं० म० ७ सू० २६ ऋ० १ ] इति द्वितीयं पञ्चर्चम्[2] । "इन्द्रं नरो नेमधित" [ ऋ० सं० म० ७ सू० २७ ऋ० १ ] इति पञ्चर्चं तृतीयम् । "ब्रह्माण इन्द्र" [ ऋ० सं० म० ७ सू० २८ ऋ० १ ] इति पञ्चर्चं चतुर्थम् । "अयं सोमः" [ ऋ० सं० म० ७ सू० २९ ऋ० १ ] इति पञ्चर्चं पञ्चमम् । "आ न इन्द्रः" इत्येतत्सूक्तमेकादशर्चम् । तदेतत्संपातसूक्तमिति[3] नाम्ना व्यवह्रियते । "इत्था हि सोमः" इत्येषा पङ्क्तिच्छन्दस्कर्गेका । एतावत्पठित्वा सूददोहाः पठनीया ।

भागान्तरं दर्शयति—

बार्हत उत्तरः, इति ।

योऽयं शस्त्रस्योत्तरतः(रः) पक्षः सोऽयं बृहत्सामसंबन्धी ।

तमेव संबन्धं विस्पष्टयति—

त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ प्रगाथौ चतस्रः सतीः षड्बृहतीः करोति, इति ।

पूर्ववद्व्याख्येयम् ।

बृहतीपाठादूर्ध्वं पठनीयं मन्त्रजातं दर्शयति—

तमु ष्टुहि यो अभिभूत्योजाः सुत इत्त्वं निमिश्ल इन्द्र सोम इति त्रीण्यभूरेको रयिपते रयीणामित्यष्टौ सूक्तानि कथा महामवृधत्कस्य होतुरिति संपात इन्द्रो मदाय वावृध इति पङ्क्तिः सूददोहाः, इति ।

"तमु ष्टुहि" इत्येतत्सूक्तं पञ्चर्चम् । "सुत इत्त्वम्" इत्यादीनि त्रीणि सूक्तानि । तेषु "सुतः" इत्येतत्प्रथमं दशर्चम् । "वृषामदः" [ ऋ० सं० म० ६ सू० २४ ऋ० १ ] इत्येतद्द्वितीयमपि सूक्तं दशर्चम् । "या त ऊतिः" [ ऋ० सं० म० ६ सू० २५ ऋ० १ ] इत्येतत्तृतीयं सूक्तं नवर्चम् । "अभूरेकः" इत्यादीन्यष्टौ

---

त्वामिद्धि हवामहे०—ऋ० सं० म० ६ सू० ४६ ऋ० १ । त्वं ह्येहि चेरवे०—ऋ० सं० म० ८ सू० ६१ ऋ० ७ । तमु ष्टुहि०—ऋ० सं० म० ६ सू० १८ ऋ० १ । सुत इत्त्वं०—ऋ० सं० म० ६ सू० २३ ऋ० १ । अभूरेको०—ऋ० सं० म० ६ सू० ३१ ऋ० १ । कथामहा०—ऋ० सं० म० ४ सू० २३ ऋ० १ । इन्द्रो मदाय०—ऋ० सं० म० १ सू० ८१ ऋ० १ ।

---

१ घ. ङ. °म् । आन । २ ग. °म् । आ न° । ३ क. ख. °ति व्य° ।

सूक्तानि । तेषु "अभूरेक:" इति प्रथमं[1] पञ्चर्चं सूक्तम् । "अपूर्व्या पुरुतमानि" [ ऋ० सं० म० ६ सू० ३२ ऋ० १ ] इति द्वितीयम् । "य ओजिष्ठः" [ ऋ० सं० म० ६ सू० ३३ ऋ० १ ] इति तृतीयम् । "सं च त्वे" [ ऋ० सं० म० ६ सू० ३४ ऋ० १ ] इति चतुर्थम् । "कदा भुवन्" [ ऋ० सं० म० ६ सू० ३५ ऋ० १ ] इति पञ्चमम् । "सत्रा मदासः" [ ऋ० सं० म० ६ सू० ३६ ऋ० १ ] इति षष्ठम् । "अर्वाग्रथम्" [ ऋ० सं० म० ६ सू० ३७ ऋ० १ ] इति सप्तमम् । "अपादितः" [ ऋ० सं० म० ६ सू० ३८ ऋ० १] इत्यष्टमम् । तान्येतान्यष्टावपि प्रत्येकं पञ्चर्चानि । **"कथा महाम्"** इत्येतत्सूक्तमेकादशर्चम् । तच्च **संपात**शब्देन व्यवह्रियते । **"इन्द्रो मदाय"** इत्यृगेका पङ्क्तिच्छन्दस्का । तत्सर्वं पठित्वाऽन्ते **सूददोहसं पठेत्** ।

उक्तयोर्दक्षिणोत्तरपक्षयोरनुसंधेयं कंचिद्विशेषं दर्शयति—

**राथंतरो दक्षिणः पक्षः पञ्चदशः स्तोम एकशतं वसिष्ठप्रासाहा बार्हत उत्तरः सप्तदशः स्तोमो द्विशतं भरद्वाजप्रासाहः**, इति ।

योऽयमत्र **दक्षिणः पक्षः** सोऽयं **राथंतरो** रथंतरसामसंबन्धी । तेन साम्ना स्तुतिकाले **पञ्चदशः स्तोमः** संपाद्यते । ऋक्त्रयस्य विष्टुतिब्राह्मणोक्तप्रकारेणाऽऽवृत्त्या पञ्चदशसंख्याका ऋचो यस्मिन्स्तोमे संपाद्यन्ते सोऽयं पञ्चदशः स्तोमः । तदात्मकोऽयं दक्षिणः पक्षः । "अभि त्वा शूर" [ ऋ० सं० म० ७ सू० ३२ ऋ० २२ ] इत्यारभ्य "इत्था हि सोमः" [ ऋ० सं० म० १ सू० ८० ऋ० १ ] इत्येतदन्तमृग्जातमेकाधिकं शतं संपद्यते, तदात्मकोऽयं दक्षिणः । तमिमं वसिष्ठो नाम मुनिः स्वसामर्थ्येन संपादितवान् । अतोऽयं **वसिष्ठप्रासाहः** । एवमुत्तरपक्षेऽपि योजनीयम् । पक्षयोरुक्तस्तोमात्मकत्वं **तैत्तिरीया** आमनन्ति—"पञ्चदशोऽन्यः पक्षो भवति । सप्तदशोऽन्यः" इति ।

भागान्तरं दर्शयति—

**भद्रं पुच्छं द्विपदासु**, इति ।

पादद्वयोपेतास्वृक्षु भद्रनामकं यत्साम तत्संबन्धी शस्त्रस्य पुच्छभागः ।

द्विपदा ऋचो दर्शयति—

**इमा नु कं भुवना सीषधामाऽऽयाहि वनसा**

---

इमा नु कं०—ऋ० सं० म० १० सू० १५७ ऋ० १ । आयाहि वनसा०—ऋ० सं० म० १ सू० १७२ ऋ० १ ।

---

१ ग. °मं सू° ।

सहेति नव समाम्नाता अथासमाम्नाताः, इति ।

"इमा नु कं भुवना" इत्यादि सूक्तं पञ्चर्चम् । "आयाहि" इत्यादिकमृक्चतुष्टयोपेतम् । तदुभयमेलनादृचो नव संपद्यन्ते । ताश्चात्र संहिताग्रन्थे समाम्नाताः । अथान्याः काश्चिदसमाम्नाताः शाखान्तरगता विद्यन्ते ।

तासु प्रथमामाह—

प्र व इन्द्राय वृत्रहन्तमाय विप्रा गाथं गायत यज्जुजोषत्, इति ।

हे विप्रा ऋत्विजो वो युष्माकं वृत्रहन्तमायातिशयेन शत्रुघातिन इन्द्रायेन्द्रप्रीत्यर्थं गाथं गायत । गातव्यं यत्सामजातमस्ति तत्सर्वं प्रकर्षेण गायत । यत्साम स इन्द्रो जुजोषत्प्रीत्या सेवते तद्गायत ।

द्वितीयामृचमाह—

अर्चन्त्यर्कं देवतास्वर्का आस्तोभति श्रुतो युवा स इन्द्रः, इति ।

अर्का अर्चयितारो विप्रा देवतासु मध्येऽर्कमर्चनीयमिन्द्रमर्चन्ति पूजयन्ति । श्रुतो वेदेषु[1] प्रख्यातो युवा यौवनसंपन्नः स इन्द्र आस्तोभति सर्वत उत्साहं करोति ।

तृतीयामृचमाह—

उपप्रक्षे मधुमति क्षियन्तः पुष्यन्तो रयिं धीमहे तमिन्द्र, इति ।

हे इन्द्र तं त्वां धीमहे वयं ध्यायामः । कीदृशा वयं मधुमत्युपप्रक्षे क्षियन्तः । प्लक्षवृक्षसंपादितानि पात्राण्यत्र प्लक्षशब्देन विवक्षितानि, तेषां समीपवर्ती यागप्रदेश उपप्रक्षः । सरसो(चासौ) मध्वादिमाधुर्यरसोपेतत्वान्मधुमांस्तादृशे प्रदेशे क्षियन्तो निवसन्तः । तथा रयिं पुष्यन्तो धनं वर्धयन्तः ।

चतुर्थीमृचमाह—

विश्वतो दावन्विश्वतो न आभर यं त्वा शविष्ठमीमहे, इति ।

हे इन्द्र शविष्ठमतिशयेन बलयुक्तं यं त्वामीमहे प्राप्नुमो याचामहे वा स त्वं हे विश्वतो दावन्सर्वेषां प्राणिनां धनादि ददत्तादृशस्त्वं नोऽस्माकं विश्वतः सर्वस्माद्देशादाभर धनादिकमानय ।

पञ्चमीमृचमाह—

स सुप्रणीते नृतमः स्वराळसि मंहिष्ठो वाजसातये, इति ॥

हे इन्द्र सुप्रणीते सुष्ठु संपादितेऽस्मिन्कर्मणि वाजसातयेऽस्मभ्यमन्नदानाय मंहिष्ठोऽतिशयेन पूजितः संस्त्वं नृतम उत्तमः पुरुषः स्वराट्स्वयमेव राजसि, न तु परतन्त्र इत्यर्थः ।

---

१ घ. ङ. देवेषु ।

षष्ठीमृचमाह—

**त्वं ह्येक ईशिषे सनादमृक्त ओजसा, इति ।**

हे इन्द्र **त्वं हि** त्वमेवैक[1] **एवौजसा** परकीयेन **बलेनामृक्तो**ऽमार्जितोऽतिरस्कृतः **सनात्**सनितुमस्मभ्यं धनादिकं दातुमीशिषे समर्थोऽसि ।

सप्तमीमृचमाह—

**विश्वस्य प्रस्तोभ विद्वान्पुरा वा यदि वेहाऽऽस नूनम् , इति ।**

**विश्वस्य** सर्वस्य जगतः **प्रस्तोभ** प्रकर्षेणोत्साहजनक हे इन्द्र **पुरा वा**ऽस्मदनुष्ठानात्प्रागेव वा भवान्विद्वानासास्मद्भक्तैर्ज्ञानोपपन्नः[2] । **यदि वा**ऽथवे**हा**स्मिन्कर्मणि **नूनम**वश्यं भवान्विद्वा**नास** ।

अष्टमीमृचमाह—

**इषं नो मित्रावरुणा कर्तनेळां पीवरीमिषं कृणुही न इन्द्र, इति ।**

**मित्रावरुणा** हे मित्रावरुणौ युवां **नो**ऽस्माक**मिष**मन्न**मिळां** भूमिं च **कर्तन** कुरुतम् । हे इन्द्र **नो**ऽस्माकं **पीवरीं** प्रभूत**मिष**मन्नं कुरु ।

नवमीमृचमाह—

**शं पदं मघं रयिषणि न सोमो अव्रतं हिनोति न स्पृशद्रयिः, इति ।**

हे इन्द्र **रयिषणि** हविर्लक्षणस्य धनस्य दातरि मयि **शं** सुखं **पदं** निवासस्थानं **मघं** धनं च संपादयेति शेषः । योऽयं **सोमः** सोऽयमव्रतमनुष्ठानरहितं **न हिनोति** न पणयति । **रयिः** फलभूतं धनमपि **न स्पृशद**नुष्ठानरहितं पुरुषं न प्राप्नोति । ता एता नवसंख्याका अस्यां संहितायामसमाम्नाता ऋचः ।

पुनरप्यसमाम्नाताः सूत्रगते **षष्ठाध्याये** पठिता द्विपदा ऋचो दर्शयति—

**एष ब्रह्मेति तिस्रः, इति ।**

"**एष ब्रह्मा** य ऋत्वियः" इत्येका । "विसृतयो यथा" इति द्वितीया । त्वामिच्छवसस्पत इति तृतीया ।

संहितायां स.ाम्नातान्यृगन्तराणि चत्वारि दर्शयति—

**आधूर्ष्वस्मा इत्येका सूददोहा यद्वावानेति धाय्या सूददोहाः, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके द्वितीयाध्याये**

**द्वितीयः खण्डः ॥ २ ॥ ( ८ ) ॥**

---

आधूर्ष्वस्मै०—ऋ० सं० म० ७ सू० ३४ ऋ० ४ । यद्वावान०—ऋ० सं० म० १० सू० ७४ ऋ० ६ ।

---

[1] क. °मेक । [2] ग. °पन्नैः । य° ।

" आधूर्ष्व " इति द्विपदा, तां पठित्वा सूददोहसं पठेत्। ततः " यद्वावान पुरुतमम् " इत्येतां चतुष्पदामृचं धाय्यासंज्ञितां पठित्वा पुनरपि सूददोहसं पठेत्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥ ( ८ ) ॥

---

अथ तृतीयः खण्डः । ( नवमः )

---

पूर्वोक्तपुच्छभागशंसनादूर्ध्वं शंसनीयं शस्त्रभागं दर्शयति—

**गायत्री तृचाशीतिः, इति ।**

तिसृणामृचां समूहस्तृचस्तादृशानां तृचानामशीतिस्तृचाशीतिः । चत्वारिंशदधिकशतद्वयसंख्याका ऋच इत्यर्थः । सेयमशीतिर्गायत्रीछन्दस्का पठनीया ।

प्रतिज्ञाताः सर्वा ऋचो दर्शयति—

**महाँ इन्द्रो य ओजसेति तिस्र उत्तमा उद्धरति पुरोळाशं नो अन्धस इति तिस्र इन्द्र इत्सोमपा एक इत्येतत्प्रभृतीनां तिस्र उत्तमा उद्धरति तासां स्वादवः सोमा आयाहीत्येतामुद्धृत्य न ह्यन्यं बळाकरमित्येतां प्रत्यवदधाति जज्ञानो नु शतक्रतुरित्येका पुरुहूतं पुरुष्टुतमिति शेष उद्धेदभि श्रुता मघमित्युत्तमामुद्धरति प्रकृतान्यृजीषिण आ घा ये अग्निमिन्धत आ तू न इन्द्र क्षुमन्तमिति सूक्ते सूददोहाः, इति ॥**

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( ९ ) ॥

---

महाँ इन्द्रो०—ऋ० सं० म० ८ सू० ६ ऋ० १ । पुरोळाशं नो अन्धस०—ऋ० सं० म० ८ सू० ७८ ऋ० १ । इन्द्र इत्सोमपाः०—ऋ० सं० म० ८ सू० २ ऋ० ४ । स्वादवः सोमाः०—ऋ० सं० म० ८ सू० २ ऋ० २८ । न ह्यन्यं बळाकरम्०—ऋ० सं० म० ८ सू० ८० ऋ० १ । जज्ञानो नु शतक्रतुः०—ऋ० सं० म० ८ सू० ७७ ऋ० १ । पुरुहूतं पुरुष्टुतम्०—ऋ० सं० म० ८ सू० ९२ ऋ० २ । उद्धेदभि श्रुता मघम्०—ऋ० सं० म० ८ सू० ९३ ऋ० १ । प्रकृतान्यृजीषिणः०—ऋ० सं० म० ८ सू० ३२ ऋ० १ । आ घा ये अग्निम्०—ऋ० सं० म० ८ सू० ४५ ऋ० १ । आ तू न इन्द्र क्षुमन्तम्०—ऋ० सं० म० ८ सू० ८१ ऋ० १ ] ।

"महाँ इन्द्रः" इत्येतत्सूक्तमष्टाचत्वारिंशद्भिर्ऋग्भिरुपेतं तस्मिन्सूक्ते "शतमहम्" [ऋ० सं० म० ८ सू० ६ ऋ० ४६] इत्यादिकाः सूक्तावसानभागस्थास्तिस्र ऋच उद्धृत्य "सोमपेयाय वक्षतः" [ऋ० सं० म० ८ सू० ६ ऋ० ४५] इत्यन्तमेव पञ्चचत्वारिंशद्भिर्ऋग्भिरुपेतं पठेत्। तत ऊर्ध्वम् "पुरोळाशं नो अन्धसः" इत्यादिकास्तिस्र ऋचः पठेत्। "इदं वसो सुतमन्धः" [ऋ० सं० म० ८ सू० २ ऋ० १] इत्यस्मिन्द्विचत्वारिंशद्भिर्ऋग्भिरुपेते सूक्ते प्रथमतः पठितास्तिस्र ऋचः परित्यज्य "इन्द्र इत्सोमपाः" इत्यादिकं पठेत्। तत्रापि "इत्था धीवन्तम्" [ऋ० सं म० ८ सू० २ ऋ० ४०] इत्यादिका अवसानभागस्थास्तिस्र ऋच उद्धृत्य "ये अस्मिन्काममश्रियन्" [ऋ० सं० म० ८ सू० २ ऋ० ३९] इत्यन्तमेव षट्त्रिंशद्भिर्ऋग्भिरुपेतं पठेत्। तस्यापि मध्ये "स्वादवः सोमाः" इत्येतामृचमुद्धृत्य तस्याः स्थाने "न ह्यन्यम्" इत्येतामृचं प्रत्यवदध्यात्। तया प्रत्यवहितया सहितं षट्त्रिंशदृक्समूहं पठित्वा तदूर्ध्वं "जज्ञानो नु" इत्येकामृचं पठेत्। "पान्तमा वः" [ऋ० सं० म० ८ सू० ९२ ऋ० १] इत्यस्मिन्सूक्ते त्रयस्त्रिंशद्भिर्ऋग्भिरुपेते प्रथमामृचं परित्यज्य "पुरुहूतम्" इत्यारभ्य द्वात्रिंशद्भिर्ऋग्भिरुपेतः सूक्तशेषः पठनीयः। "उद्धेदभि" इत्यस्मिन्सूक्ते चतुस्त्रिंशद्भिर्ऋग्भिरुपेते "इन्द्र इषे" [ऋ० सं० म० ८ सू० ९३ ऋ० ३४] इत्यादिकामुत्तमामृचमुद्धृत्यावशिष्टं त्रयस्त्रिंशद्भिर्ऋग्भिरुपेतं सूक्तं पठेत्। "प्रकृतानि" इत्यादिकं त्रिंशद्भिर्ऋग्भिरुपेतं सूक्तं पठेत्। "आ घा ये अग्निम्" इति सूक्तं द्विचत्वारिंशद्भिर्ऋग्भिरुपेतं पठेत्। "आ तू न इन्द्र" इत्यादिकं नवभिर्ऋग्भिरुपेतमेकं सूक्तं तत उपरितनम्। "आ प्रद्रव" [ऋ० सं० म० ८ सू० ८२ ऋ० १] इत्यादिकं नवर्चं सूक्तं ते द्वे अपि सूक्ते पठेत्। ततः सूददोहाः पठनीया। एवं सति सूददोहसः प्राचीनाश्चत्वारिंशदधिकशतद्वयसंख्याका ऋचः, ततस्तृचाशीतिः संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ (९)

---

अथ चतुर्थः खण्डः। (दशमः)

---

गायत्र्यास्तृचाशीतेरूर्ध्वं शंसनीयं भागं दर्शयति—

**बार्हती तृचाशीतिः,** इति।

---

* अत्रैकवचनान्तः पाठः साधुः, विंशत्याद्याः सदैकत्वे इत्यनुशासनात्। एवमग्रेऽपि तत्र तत्र बोध्यम्।

बृहतीछन्दोयुक्ता काचित्तृचाशीतिः पठनीया ।

तत्रत्या ऋचो विविच्य दर्शयति—

मा चिदन्यद्विशंसतेत्येकया न त्रिंशतिपिबा सुतस्य रसिन इति विंशतेः सप्तमीं चाष्टमीं चोद्धरति यदिन्द्र प्रागपागुदगिति चतुर्दश वयं घ त्वा सुतावन्त इति पञ्चदश मो षु त्वा वाघतश्चनेत्येतस्य द्विपदां चोद्धरति राथंतरं च प्रगाथमथ हास्य नकिः सुदासो रथमित्येतं प्रगाथमुद्धृत्य त्वामिदा ह्यो नर इत्येतं प्रगाथं प्रत्यवदधात्यभि प्र वः सुराधसमिति षड्वालखिल्यानां सूक्तानि यः सत्राहा विचर्षणिरिति शेषोऽयं ते अस्तु हर्यत इति सूक्ते उभयं शृणवच्च न इति सप्तमीं चाष्टमीं चोद्धरति तरोभिर्वो विदद्वसुमित्युत्तमामुद्धरति यो राजा चर्षणीनामित्येकादश तं वो दस्ममृतीषहमा नो विश्वा सुहव्यो या इन्द्र भुज आभर इति नव सूददोहाः, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( १० )

---

मा चिदन्यत्०—ऋ० सं० म० ८ सू० १ ऋ० १ । पिबा सुतस्य०—ऋ० सं० म० ८ सू० ३ ऋ० १ । यदिन्द्र प्रागपागुदक्०—ऋ० सं० म० ८ सू० ४ ऋ० १ । वयं घ त्वा सुतावन्तः०—ऋ० सं० म० ८ सू० ३३ ऋ० १ । मो षु त्वा वाघतश्चन०—ऋ० सं० म० ७ सू० ३२ ऋ० १ । नकिः सुदासो०—ऋ० सं० म० ७ सू० ३२ ऋ० १० । त्वामिदा ह्यो नरः०—ऋ० सं० म० ८ सू० ९९ ऋ० १ । यः सत्राहा विचर्षणिः०—ऋ० सं० म० ६ सू० ४६ ऋ० ३ । अयं ते अस्तु हर्यतः०—ऋ० सं० म० ३ सू० ४४ ऋ० १ । उभयं शृणवच्च नः०—ऋ० सं० म० ८ सू० ६१ ऋ० १ । तरोभिर्वो विदद्वसुम्०—ऋ० सं० म० ८ सू० ६६ ऋ० १ । यो राजा चर्षणीनाम्०—ऋ० सं० म० ८ सू० ७० ऋ० १ । तं वो दस्ममृतीषहम्०—ऋ० सं० म० ८ सू० ८८ ऋ० १ । आ नो विश्वा सुहव्यः०—ऋ० सं० म० ८ सू० ९० ऋ० १ । या इन्द्र भुज आभर०—ऋ० सं० म० ८ सू० ९७ ऋ० १ ।

"मा चिदन्यत्" इत्यादिकं चतुस्त्रिंशद्भिर्ऋग्भिरुपेतं सूक्तं तस्य सूक्तस्यावसानभागस्थाः "स्तुहि स्तुहि" [ ऋ० सं० म० ८ सू० १ ऋ० ३० ] इत्यादिकाः पञ्च परित्यज्य "स्तोमासो अवृत्सत" [ ऋ० सं० म० ८ सू० १ ऋ० २९ ] इत्यन्तमेवैकोनत्रिंशद्भिर्ऋग्भिरुपेतं पठेत् । "पिबा सुतस्य" इत्येतस्मिंश्चतुर्विंशद्भि(तिभि)र्ऋग्भिरुपेते सूक्ते विंशतिसंख्याया ऊर्ध्वम् "यं मे दुः" [ ऋ० सं० म० ८ सू० ३ ऋ० २१ ] इत्याद्याश्चतस्र ऋचः परित्यजेत् । अवशिष्टायां विंशतावपि "अभि त्वा पूर्वपीतये" [ ऋ० सं० म० ८ सू० ३ ऋ० ७ ] इत्येतां सप्तमीम् । "अस्येदिन्द्रो वावृधे" [ ऋ० सं० म० ८ सू० ३ ऋ० ८ ] इत्येतामष्टमीं च परित्यज्यावशिष्टाभिरष्टादशभिर्ऋग्भिरुपेतं सूक्तं पठेत् । "यदिन्द्र प्रागपागुदक्" इत्यादिकमेकविंशतिभिर्ऋग्भिरुपेतं सूक्तम् । तत्रान्तिमाः "प्र पूषणम्" [ ऋ० सं० म० ८ सू० ४ ऋ० १९ ] इत्यादिकाः सप्त परित्यज्य "वहन्तु सवने दुप" [ ऋ० सं० म० ८ सू० ४ ऋ० १४ ] इत्यन्तमेव चतुर्दशभिर्ऋग्भिरुपेतं पठेत् । "वयं घ त्वा" इति सूक्तमेकोनविंशतिभिर्ऋग्भिः समेतं [ तस्मिन्सूक्ते ] "न हि षस्तव" [ ऋ० सं० म० ८ सू० ३३ ऋ० १] इत्यादिकाश्चतस्रः परित्यज्य "मदाय द्युक्ष सोमपाः" [ ऋ० सं० म० ८ सू० ३३ ऋ० १९ ] इत्यन्तमेव पञ्चदशभिर्ऋग्भिरुपेतं पठेत् । "मो षु त्वा" इत्यादिकं सप्तविंशतिभिर्ऋग्भिरुपेतं तस्मिन्सूक्ते "रायस्कामः" [ ऋ० सं० म० ७ सू० ३२ ऋ० ३ ] इत्येतां द्विपदामृचमुद्धरेत् । तथा रथंतरसामसंबन्धिप्रगाथम् "अभि त्वा शूर" [ ऋ० सं० म० ७ सू० ३२ ऋ० ऋ० २२ ] इत्यादिकमृग्द्वयमुद्धरेत् । ततोऽवशिष्टं चतुर्विंशतिभिर्ऋग्भिरुपेतं तत्सूक्तं पठेत् । तत्रापि "नकिः सुदासः" इत्येतं प्रगाथमुद्धृत्य तस्य स्थाने "त्वामिदा ह्यो नरः" इत्येतं प्रगाथं प्रक्षिप्य पठेत् । "अभि प्र वः" [ ऋ० सं० म० ८ वाल० सू० १ ] इत्यादिकानि वालखिल्यानां संहितायामाम्नातानि षट्पञ्चाशद्भिर्ऋग्भिरुपेतानि षट्सूक्तानि पठेत् । "त्वामिद्धि हवामहे" इत्यादिकं चतुर्दशभिर्ऋग्भिरुपेतं सूक्तं तस्मिन्नादित आरभ्य द्वे ऋचौ परित्यज्य "यः सत्राहा" इत्यादिकं द्वादशभिर्ऋग्भिरुपेतं सूक्तशेषं पठेत् । "अयं ते अस्तु" इति पञ्चर्चमेकं सूक्तम् । "आ मन्द्रैः" [ ऋ० सं० म० ३ सू० ४५ ऋ० १ ] इति पञ्चर्चं द्वितीयं सूक्तं ते उभे सूक्ते पठेत् । "उभयं शृणवच्च नः" इत्यादिकमष्टादशर्चं सूक्तं तस्य मध्ये "त्वं ह्येहि" [ ऋ० सं० म० ८ सू० ६१ ऋ० ७ ] इत्यादिकां सप्तमीम् । "त्वं पुरू सहस्राणि" [ ऋ० सं म० ८ सू० ६१ ऋ० ८ ] इत्यादिकामष्टमीं चोद्धृत्यावशिष्टं षोडशर्चं सूक्तं पठेत् । "तरोभिर्वः" इत्यादिकं पञ्चदशर्चं सूक्तं तस्मिन्नुत्तमाम् "सोम इद्रः" [ ऋ० सं० म० ८ सू० ६६

ऋ० १९ ] इत्यादिकामुद्धृत्यावशिष्टं चतुर्दशर्चं पठेत्। "यो राजा चर्षणीनाम्" इत्येतत्पञ्चदशर्चं सूक्तं [ तस्मिन्सूक्ते ] "त्वं न इन्द्राऽऽसाम्" [ ऋ० सं० म० ८ सू० ७० ऋ० १२ ] इत्यादिकाश्चतस्र ऋचः परित्यज्यावशिष्टमेकादशर्चं पठेत्। "तं वो दस्मम्" इत्यादिकं षडृचं सूक्तं पठेत्। "आ नो विश्वासु" इत्यादिकमपि षडृचं सूक्तं पठेत्। "या इन्द्र" इत्यादिकं पञ्चदशर्चं सूक्तं तस्यावसानभागस्थाः "विश्वाः पृतनाः" [ ऋ० सं० म० ८ सू० ९७ ऋ० १० ] इत्यादिकाः षडृचः परित्यज्य "न त्वा देवास आसत" [ ऋ० सं० म० ८ सू० ९७ ऋ० ९ ] इत्यन्तं नवर्चं पठेत्। ततः सूददोहसं पठेत्। एवं सति सूददोहसः प्राचीना बार्हती तृचाशीतिः संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यकभाष्ये पञ्चमारण्यके द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( १० )

---

अथ पञ्चमः खण्डः। ( एकादशः )

---

बार्हत्यास्तृचाशीतेरूर्ध्वं शंसनीयभागं दर्शयति—

औष्णिही तृचाशीतिः, इति।

उष्णिक्छन्दोयुक्ता काऽपि तृचाशीतिः पठनीया।

तत्रत्या ऋचो विविच्य दर्शयति—

य इन्द्र सोमपातम इति सूक्ते तम्वभि प्रगायतेत्युत्तमामुद्धरतीन्द्राय साम गायत सखाय आशिषामहीति तिस्र उत्तमा उद्धरति य एक इद्विदयत आयाह्यद्रिभिः सुतं यस्य त्यच्छम्बरं मद इति त्रयस्तृचा गायत्र्यः संपदोष्णिहः सप्त सप्त गायत्र्यः षट्षडुष्णिहो भवन्ति यदिन्द्राहं यथा त्वं प्र संम्राजं चर्षणीनामिति सूक्ते

---

य इन्द्र सोमपातमः०—ऋ० सं० म० ८ सू० १२ ऋ० १। तम्वभि प्रगायत०—ऋ० सं० म० ८ सू० १९ ऋ० १। इन्द्राय साम गायत०—ऋ० सं० म० ८ सू० ९८ ऋ० १। सखाय आशिषामहि०—ऋ० सं० म० ८ सू० २४ ऋ० १। य एक इद्विदयते०—ऋ० सं० म० १ सू० ८४ ऋ० ७। आयाह्यद्रिभिः०—ऋ० सं० म० ९ सू० ४० ऋ० १। यस्य त्यच्छम्बरं०—ऋ० सं० म० ६ सू० ४४ ऋ० १। यदिन्द्राहं०—ऋ० सं० म० ८ सू० १४ ऋ० १। प्र संम्राजं०—ऋ० सं० म० ८ सू० १६ ऋ० १।

उत्तरस्योत्तमे उद्धरति वार्त्रहत्याय शवस इत्युत्तमा-
मुद्धरति सुरूपकृत्नुमूतय इति त्रीण्येन्द्रसानसिं रयि-
मिति सूक्ते य आनयत्परावत इति तिस्र उत्तमा उद्ध-
रति रेवतीर्नः सधमाद इति तिस्रः सूददोहाः, इति ।

"य इन्द्र" इत्येतत्त्रयस्त्रिंशदृचमेकं सूक्तम् । "इन्द्रः सुतेषु" [ ऋ० सं म० ८ सू० १३ ऋ० १ ] इतीदमपि त्रयस्त्रिंशदृचं सूक्तं ते उभे सूक्ते पठेत् । "तम्वभि" इत्यादिके सूक्ते चरमाम् "अरं क्षयाय" [ ऋ० सं० म० ८ सू० १९ ऋ० १३ ] इत्यादिकामृचमुद्धृत्य "अस्माकेभिर्नृभिरत्रा स्वर्जय" [ ऋ० सं० म० ८ सू० १९ ऋ० १२ ] इत्येतदन्तं द्वादशर्चं सूक्तं पठेत् । "इन्द्राय साम" इत्यादिकं द्वादशर्चं सूक्तं तदपि पठेत् । "सखायः" इत्यादिकं त्रिंशदृचं सूक्तं तस्मिन्नन्तिमा "यथा वरो" [ ऋ० सं० म० ८ सू० २४ ऋ० २८ ] इत्यादिकास्तिस्र ऋच उद्धृत्य "वधर्दासस्य तुविनृम्ण नीनमः" [ ऋ० सं० म० ८ सू० २४ ऋ० २७ ] इत्यन्तं सप्तविंशत्यृचं सूक्तं पठेत् । "य एकः" इत्यादिरेकस्तृचः, "आयाहि" इत्यादिर्द्वितीयस्तृचः । "यस्य त्यत्" इत्यादिस्तृतीयस्तृचः । त एते त्रयस्तृचाः पठनीयाः । इत ऊर्ध्वं गायत्रीछन्दस्का ऋचः पठनीयाः । ताश्च गायत्र्य उष्णिक्त्वेन संपादनीयाः । तत्संपादनं कथमिति [तदुच्यते–] । सप्त गायत्र्यो मिलित्वा षळु(ड्)ष्णिहः संपद्यन्ते । सप्तम्यां गायत्र्यामक्षरचतुष्काणि षड्विद्यन्ते । तेष्वेकैकं चतुष्कमेकैकस्यां गायत्र्यां योजनीयम् । ततोऽष्टाविंशत्यक्षरत्वादुष्णिगेव संपद्यते । एवं सप्तसु गायत्रीषु षळु(ड्)ष्णिहः संपन्ना भवन्ति । सर्वास्वपि गायत्रीष्वेवमुष्णिक्त्वं संपादनीयम् । "सप्त सप्त गायत्र्यः षट्षळुष्णिहो भवन्ति" इति वीप्सा पठिता । "यदिन्द्राहम्" इत्यादिकं पञ्चदशर्चं गायत्रीछन्दस्कं सूक्तं पठेत् । "प्र सम्राजम्" इत्यादिकं द्वादशर्चं सूक्तम्, "आयाहि सुषुमा हि ते" [ ऋ० सं० म० ८ सू० १७ ऋ० १ ] इति पञ्चदशर्चं सूक्तम्, ते उभे गायत्रीछन्दस्के सूक्ते पठनीये । तत्रोत्तरसूक्तस्योत्तमे द्वे "वास्तोष्पते" [ ऋ० सं० म० ८ सू० १७ ऋ० १४ ] इत्यादिके उद्धृत्यावशिष्टं त्रयोदशर्चम् "न्यस्मिन्दध्र आ मनः" [ ऋ० सं० म० ८ सू० १७ ऋ० १३ ] इत्येतदन्तमेव पठनीयम् । "वार्त्रहत्याय"

---

वार्त्रहत्याय शवसे०—ऋ० सं० म० ३ सू० ३७ ऋ० १ । सुरूपकृत्नुमूतये०—ऋ० सं० म० १ सू० ४ ऋ० १ । एन्द्र सानसिं०—ऋ० सं० म० १ सू० ८ ऋ० १ । य आनयत्परावतः०—ऋ० सं० म० ६ सू० ४५ ऋ० १ । रेवतीर्नः सधमादे०—ऋ० सं० म० १ सू० ३० ऋ० १३ ।

इत्यादिकमेकादशर्चं गायत्रीछन्दस्कं सूक्तं तत्रोत्तमाम् "अर्वावतो नः" [ ऋ० सं० म० ३ सू० ३७ ऋ० ११ ] इत्येतामृचमुद्धृत्य "उत्ते शुष्मं तुरामसि" [ऋ० सं० म० ३ सू० ३७ ऋ० १] इत्यन्तमेव दशर्चं पठेत्। "**सुरूपकृत्नुम्**" इत्यादिकं गायत्रीछन्दस्कं दशर्चमेकं सूक्तम्, "आ त्वेता निषीदत" [ ऋ० सं० म० १ सू० ५ ऋ० १ ] इत्यादिकमपि गायत्रीछन्दस्कं दशर्चं तच्च द्वितीयं सूक्तम्, "युञ्जन्ति ब्रध्नम्" [ ऋ० सं० म० १ सू० ६ ऋ० १ ] इत्यादिकमपि गायत्रीछन्दस्कं तत्तृतीयं सूक्तम्, तान्येतानि त्रीणि सूक्तानि पठेत्। "**एन्द्र सानसिम्**" इति गायत्रीछन्दस्कं दशर्चमेकं सूक्तम्, "इन्द्रे हि मत्स्यन्धसः" [ ऋ० सं० म० १ सू० ९ ऋ० १ ] इत्येतदपि गायत्रीछन्दस्कं दशर्चं द्वितीयं सूक्तम्, एते उभे पठेत्। "**य आनयत्**" इत्यादिकं त्रयस्त्रिंशदृचं गायत्रीछन्दस्कं सूक्तं तस्मिन्नुत्तमाः "अधिबृवुः" [ ऋ० सं० म० ६ सू० ४५ ऋ० ३१ ] इत्यादिकास्तिस्र ऋच उद्धृत्य "अस्मान्त्राये महे हिनु" [ ऋ० सं० म० ६ सू० ४५ ऋ० ३० ] इत्यन्तं त्रिंशदृचं सूक्तं पठेत्। "**रेवतीर्नः**" इत्यादिका गायत्रीछन्दस्कास्तिस्र ऋचः पठेत्। "**यदिन्द्राहम्**" इत्यारभ्य "रेवतीर्नः" इति तृचान्तास्त्रयस्त्रिंशदधिका(क)शतसंख्याका गायत्र्योऽत्र पठनीयाः, ताश्च पूर्वोक्तप्रकारेण सप्तसु सप्तसु षट्षळु(डु)-ष्णिहः संपद्यन्ते। तथा सति चतुर्दशाधिकशतसंख्याका उष्णिहः संपन्नाः। "य इन्द्र सोमपातमः" इत्याद्यासु स्वतः सिद्धा उष्णिहः षड्विंशत्यधिकाः(क) शतसंख्याकाः। तासां सर्वासां मेलनादौष्णिही तृचाशीतिः संपद्यते। तां पठित्वाऽन्ते **सूददोहसं** पठेत्।

तृचाशीतिशंसन कंचिद्विशेषं विधत्ते—

**इत्येतास्तिस्रस्तृचाशीतयः सर्वा अर्धर्च्याः**, इति।

**इत्येवं पूर्वमुक्ता गायत्रीबृहत्युष्णिक्छन्दस्कास्तृचाशीतयो** याः सन्ति ताः **सर्वा अर्धर्च्या** अर्ध[र्चे?]मर्हन्ति। प्रथमेऽर्धर्चेऽवसाय पश्चादुत्तरमर्धर्चं पठेदित्यर्थः।

अशीतिष्वन्नबुद्धिमभिप्रेत्यान्नरूपेण ताः प्रशंसति—

**अन्नमशीतयः**, इति।

या उक्ता **अशीतयस्ताः** पक्ष्याकारस्य शस्त्रस्यान्नस्थानीयाः। तथात्वेन मनसि ता भावयेदित्यर्थः।

वक्ष्यमाणस्य वशनाम्न ऋक्समूहस्योदरत्वानुस्मरणमभिप्रेत्य प्रशंसति—

**उदरं वशः**, इति।

**वशाख्य ऋक्संघः** पक्ष्याकारस्य **शस्त्रस्योदरम्**। तथात्वेन भावयेदित्यर्थः।

वशनामकमृक्संघं विधत्ते—

त्वाऽवतः पुरूवसविति वशः सनितः सु सनितरित्येतदन्तो दद्रीरेकूण इति द्विपदा नूनमथेत्येकपदा ता अस्य सूददोहस इत्येतदन्तः सूददोहाः सूददोहाः, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( ११ )

## इति बह्वृचब्राह्मणारण्यककाण्डे पञ्चमारण्यके द्वितीयोऽध्यायः ॥ २ ॥

" त्वाऽवतः " इत्यादिकं त्रयस्त्रिंशदृचं सूक्तम् । तस्मिन्सूक्ते " सनितः सु सनितः " इत्यृक्, एषा विंशतितमा । तदन्तानां विंशतिसंख्याकानामृचां समूहो वशनामकः । तन्मध्ये " दद्रीरेक्णः " इति काचिदृक्पठिता, सा द्विपदा द्रष्टव्या । " नूनमथ " इत्यक्षरचतुष्टयात्मिका काचिदृगेकपदा । एतदुभयं मन्त्रबुद्धिभ्रमव्यावृत्तय विशेष्यते । अध्ययनकाले वशाख्य ऋक्संघः "सनितः सु सनितः" इत्येतदन्तः । प्रयोगकाले तु " ता अस्य सूददोहसः " इत्येतामप्यृचं पठित्वा स एकविंशत्यृगात्मको वशः प्रयोक्तव्यः। अन्ते पठितायाः सूददोहसः पुनर्द्विरावृत्तिरध्यायसमाप्तिद्योतनार्था ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( ११ )

## इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यककाण्डभाष्ये पञ्चमारण्यके द्वितीयोऽध्यायः ॥ २ ॥

---

त्वाऽवतः पुरूवसो०—ऋ० सं म० ८ सू० ४६ ऋ० १ । सनितः सु सनितः—ऋ० सं० म० ८ सू० ४६ ऋ० २० । दद्रीरेक्णः० ऋ० सं० म० ८ सू० ४६ ऋ० १५ । नूनमथ—ऋ० सं० मं० ८ सू० ४६ ऋ० १५ ।

---

+ एतदुपरि ख. पुस्तके टिप्पणिकारूपेण कियांश्चिद्ग्रन्थो वर्तते स यथा—" अत्र सूददोहसा सहैकविंशतिसंख्यासंपादनं प्रथमारण्यकविरुद्धम् । तत्र हि–एकविंशतेः पृथक्सूददोहसः शंसनं विहितम् । अतोऽत्रैवं व्याख्येयम् । यद्यपि ब्राह्मणे 'वशं शंसति ता एकविंशतिर्भवन्ति' इत्येकविंशतेः शंसनं विहितं तथाऽपि आस एतु य ई वदेति एकविंश्या आस आदिकानीतस्य पृथुश्रवसो दानस्तुतिरिति सर्वानुक्रमण्युक्त्यैन्द्रीत्वाभावस्य स्पष्टत्वात्ततः प्राचीनानामेवात्र शंसनं कार्यमित्यभिप्रेत्याऽऽह—सनितः सु सनितरित्येत न्त इति । नन्वेवं विंशतेः शंसने ब्राह्मणोक्तैकविंशतिसंख्यायाः कथमुप-

---

१ ग. °ठिस्वैक° ।

## अथ तृतीयोऽध्यायः ।

तत्र प्रथमः खण्डः । ( १२ )

---

पक्षिरूपस्य शस्त्रस्योरुभागं [ वक्तुं ] प्रतिजानीते—

ऊरू, इति ।

यावूरू तौ कथ्येते इति शेषः ।

[ प्रतिज्ञातमर्थमाह— ]

इन्द्राग्नी युवं सु न इत्येतस्यार्धर्चान्गायत्रीकारमुत्तरमुत्तरस्यानुष्टुप्कारं प्रागुत्तमायाः प्र वो महे मन्दमानायान्धस इति निविद्धानं वनेन वायो न्यधायि चाकन्यो जात एव प्रथमो मनस्वानिति ते अन्तरेणाऽऽयाह्यर्वाङुपवन्धुरेष्ठा विधुं दद्राणं समने बहूनामित्येतदावपनं दशतीनामैन्द्रीणां त्रिष्टुब्जगतीनां बृहतीसंपन्नानां यावतीरावपेरंस्तावन्त्यूर्ध्वमायुषो वर्षाणि जिजीविषेत्संवत्सरात्संवत्सराद्दशतो न वा त्यमू षु वाजिनं देवजूतमिन्द्रो विश्वं विराजतीत्येकपदेन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभं तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वो-

---

इन्द्राग्नी युवं सु नः०—ऋ० सं० म० ८ सू० ४० ऋ० १ । प्र वो महे मन्दमानायान्धसः०—ऋ० सं० म० १० सू० ५० ऋ० १ । वनेन वायो०—ऋ० सं० म० १० सू० २९ ऋ० १ । यो जात एव प्रथमो मनस्वान्०—ऋ० सं० म० २ सू० १२ ऋ० १ । आयाह्यर्वाङ्०—ऋ० सं० म० ३ सू० ४३ ऋ० १ । विधुं दद्राणं समने बहूनाम्०—ऋ० सं० म० १० सू० ५६ ऋ० ५ । त्यमू षु वाजिनं देवजूतं०—ऋ० सं० म० १० सू० १७८ ऋ० १ । इन्द्रं विश्वा अवीवृधन्०—ऋ० सं० म० १ सू० ११ ऋ० १ ।

---

पत्तिरित्यत आह—ददीरेकृण इति द्विपदा नूनमथेत्येकपदेति । अयमर्थः—विंशी ऋग्ददीरेक्ण इत्याद्या । सा चार्धर्चद्वयात्मिका । तत्राऽऽद्यार्धर्चस्य द्विपदावच्छंसनम् । द्वितीयस्य त्वेकपदावच्छंसनम् । एवं विभागेन शंसन एकविंशतेः संपत्तिर्भवतीति । यद्यपि ददीरेक्ण इत्यर्धस्य द्विपदात्वं नूनमथेत्यस्यैकपदात्वं च प्रातिशाख्यविरुद्धं तथाऽपि सूत्रकृता श्रुत्यन्तरमूलकतयेत्थं विभागः कृत इति ज्ञेयम् । प्रथमारण्यके विंशखण्डे भाष्यकारैरपि विभागेनैवैकविंशतिसंख्या पूरिता । अत्र तु विपरीतमुक्तं तदाशयो न ज्ञायते ” इति ।

त्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः पूर्वस्मात्पूर्वस्मादर्धर्चादुत्तरमुत्तरमर्धर्चं व्यतिषजति प्रकृत्या शेषः पिबा सोममिन्द्र मन्दतु त्वेति यङ्योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसंतत्योपोत्तमया परिदधाति, इति ।

"इन्द्राग्नी युवं सु नः" इत्यादिकं सूक्तं द्वादशर्चम् । अत्र "न हि वाम्" [ ऋ० सं० म० ८ सू० ४० ऋ० २ ] इत्येषा द्वितीया शक्करीछन्दस्का । "एवेन्द्राग्निभ्याम्" [ऋ० सं० म० ८ सू० ४० ऋ० १२] इत्येषोत्तमा त्रिष्टुप्छन्दस्का । अवशिष्टा दशर्चः प्रत्येकं षट्पदा महापङ्क्तिच्छन्दस्काः । तासु दशसु पादत्रयात्मकमेकैकमर्धर्चं गायत्रीं कृत्वा शंसेत् । पादद्वयेऽवसाय तृतीयपादे प्रणवो गायत्रीकरणम् । येयं शक्करी द्वितीया तस्या अपि पादत्रयात्मकं पूर्वार्धं गायत्रीसमयेनैव शंसेत् । उत्तरार्धं तु पादचतुष्टयात्मकमनुष्टुभं कृत्वा शंसेत् । द्वितीयपादेऽवसाय चतुर्थपादे प्रणवप्रयोगोऽनुष्टुप्करणम् । एवमुत्तमायास्त्रिष्टुभः प्राचीना एकादशसंख्याका ऋचः शस्त्वा त्रिष्टुभमुत्तमां विशेषोक्त्यभावात्सामान्यप्राप्तिमनुसृत्य शंसेत् । प्राक्छन्दांसि त्रैष्टुभादित्यनेन सूत्रवाक्येन(ण) त्रिष्टुभोऽर्वाचीनानां गायत्र्यादीनामर्धर्चशंसनविधानात्त्रिष्टुभः पादशंसनं सामान्यतः प्राप्तम् । एकस्मिन्पादेऽवसायोत्तरस्मिन्पादे प्रणवप्रयोगः पादशंसनम् । तेन क्रमेणोत्तमां शंसेत् । ततः "प्र वो महे" इत्यादिकं निविद्धानसंज्ञकं सप्तर्चं सूक्तं शंसेत् । निवित्संज्ञकानीन्द्रो देव इत्यादीनि पदानि शंसनकाले यस्मिन्सूक्ते धीयन्ते प्रक्षिप्यन्ते तत्सूक्तं निविद्धानम् । "वनेन वायो" इत्येतदष्टर्चं सूक्तं शंसेत् । "यो जात एव" इति पञ्चदशर्चं सूक्तं पठेत् । यद्यायुष्कामः स्यात्तदानीमनयोः सूक्तयोर्मध्ये "आयाह्यर्वाङ्" इत्यष्टर्चं सूक्तम् "विधुं दद्राणम्" इत्येकामृचं च प्रक्षिपेत् । अनेन प्रक्षेपेण कियदायुरधिकं भवतीति तदुच्यते । दशसंख्याकानां मण्डलानां समूहरूपत्वाच्छाकल्यसंहिता दशं[ती]शब्देनोच्यते[1] । तस्यां संहितायामुत्पन्ना ऋचो दशत्यः[2], तास्वपि दशतीष्विन्द्रदे[3]वताकास्त्रिष्टुप्छन्दस्का जगतीछन्दस्का वा स्वबुद्धिकौशलेनाक्षरसंख्यया गणयित्वा बृहत्यः संपाद्यन्ते । तथाविधानां बृहतीनां यावतीनामावापो भवति तावन्ति वर्षा-

---

पिबा सोममि[न्द्र] मन्दतु त्वा०—ऋ० सं० म० ७ सू० २२ ऋ० १ । योनिष्ट इन्द्र सदने अकारि०—ऋ० सं० म० ७ सू० २४ ऋ० १ ।

---

१ क. ख. घ. ङ. °शतयीशब्दे° । २ क. ख. घ. ङ. दशतय्यः । ३ क. ख. घ. ङ. °शतयीष्वि° ।

ण्ययं पुमान्पू(मानायुषः पू)र्वप्रसिद्धादूर्ध्वं जीवितुमिच्छेत् । प्रक्षेपकाले यावन्तः संवत्सरा अधिकजीवनायापेक्षितास्तेषु संवत्सरेष्वेकैकस्मात्संवत्सरान्निमित्तभूताद्दशतो दश बृहतीनां समूहानावपेत् । न वेति पक्षान्तरम् । एकैकसंवत्सरनिमित्तमेकैका बृहतीति तस्याभिप्रायः । एवं च सति प्रकृते त्रिष्टुप्छन्दस्कानां नवानां प्रक्षिप्तत्वा-दक्षरगणनया ता एकादश बृहत्यः संपद्यन्ते । ततस्तावदायुर्वर्धते । "त्यमू षु" इति तृचात्मकं सूक्तं पठेत् । तत ऊर्ध्वम् "इन्द्रो विश्वं विराजति" इत्येतामेक-पदामृचं शाखान्तरगतां पठेत् । "इन्द्रं विश्वाः" इत्यष्टर्चमनुष्टुप्छन्दस्कं सूक्तं तच्च व्यतिषङ्गेण शंसेत् । कोऽसौ व्यतिषङ्गप्रकारः सोऽयमभिधीयते—प्रथमायाः पूर्वार्धं (पूर्वमर्धर्चं) यथापाठं शस्त्वोत्तरेणार्धर्चेन सह द्वितीयस्या ऋचः पूर्व-मर्धर्चं व्यतिषजेत् । एवमुत्तरायाः । तत्र पादैः पादा अनुषञ्जनीयाः । प्राचीनासु सप्तस्वप्यृक्षु परस्परं व्यतिषङ्गं कृत्वा तेनैव व्यतिषङ्गेणानुष्टुभं कृत्वा शंसेत् । एवं च सति प्रथमायामृच्यध्ययनक्रमेणैव पादत्रयं पठित्वा द्वितीयस्या ऋचः प्रथमपाद-माकृष्य चतुर्थपादत्वेन योजयेत् । सेयमेकाऽनुष्टुप् । ततः प्रथमायामृचि चतुर्थपादं द्वितीयस्यां द्वितीयपादं च संयोज्य प्रथममर्धर्चं कुर्यात् । ततो द्वितीयस्यां तृतीयपादं तृतीयस्यां प्रथमपादं च संयोज्य द्वितीयमर्धर्चं कुर्यात् । सेयं द्वितीयाऽनुष्टुप् । एवमु-त्तरत्राप्येकैकपादान्तरितत्वेन द्वौ द्वौ पादौ संयोज्यार्धर्चान्कृत्वा द्वाभ्यां द्वाभ्यामर्धर्चाभ्यामेकैकाऽनुष्टुप्संपादनीया । उत्तमायाः प्रागेवं संपादितात्पूर्वस्मात्पूर्वस्मा-दर्धर्चादूर्ध्वं संपादितमुत्तरमुत्तरमर्धर्चं संयोजयेत् । ता एताः परस्परव्यतिषक्ताः सप्ता-नुष्टुभः पठित्वा तत ऊर्ध्वं प्रकृत्या यथाम्नातपाठेनैव शेषः शस्त्रस्यान्तिमो भाग एका-र्धर्चः पठनीयः । एवं सति सूक्तस्याऽऽद्यन्तयोरर्धर्चयोर्यथाम्नातपाठः, मध्यगतानां चतुर्दशानामर्धर्चानां व्यतिषङ्गपाठ इत्युक्तं भवति । "पिबा सोमम्" इति । नवर्चं सूक्तं तत्रान्तिमास्तिस्रः परित्यज्याऽऽदौ षडृचः पठेत् । "योनिष्ट इन्द्र" इति षडृचं सूक्तं तत्राऽऽदौ चतस्रः पठित्वा तदनन्तरं षष्ठीं पठेत् । पठित्वा च ततः पूर्वभाविन्या "एष स्तोमः" [ ऋ० सं० म० ७ सू० २४ ऋ० ६ ] इत्यनया पञ्चम्या परिदधाति निष्केवल्यशस्त्रं समापयेत् ।

अथ होतुर्जपं विधत्ते—

**परिहित उक्थ उक्थसंपदं जपति, इति ।**

प्रकृतिभूतेऽग्निष्टोमे होता निष्केवल्यशस्त्रादूर्ध्वम् "उक्थं वाचीन्द्रायोपशृण्वते त्वा" इति मन्त्रं जपति । तत्रोक्थं वाचीन्द्रायेत्येतावानुक्थसंपद्भागः । उपशृण्वते त्वेत्येतावानुक्थवीर्यभागः । उक्थशब्दः शस्त्रवाची । तथा सत्यत्र निष्केवल्याख्य

१ घ. ङ. त्वाद्दशाक्ष । २ घ. ङ. द्वितीयपादं ।

उक्थे समाप्ते सत्युक्थसंपद्भागं होता जपेत् । उक्थं वाचीन्द्रायेत्येतावदेव जपेदित्यर्थः ।

वीर्यभागे प्रतिनिधिं विधत्ते—

**उक्थवीर्यस्य स्थान उक्थदोहः, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥ ( १२ )**

योऽयमुक्थवीर्यभाग उपशृण्वते त्वेत्येवंरूपस्तत्स्थान उक्थदोहाख्यो मन्त्रः पठनीयः । शाखान्तरगतो मूर्धा लोकानामित्यारभ्य यज्ञसमृद्धिं मे धुक्ष्वेत्यन्तो मन्त्रसमूह उक्थदोहसंज्ञकः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥ ( १२ )

---

अथ द्वितीयः खण्डः । ( त्रयोदशः )

---

तस्मिन्नुक्थदोहे प्रथमं मन्त्रमाह—

**मूर्धा लोकानामसि वाचो रसस्तेजः प्राणस्याऽऽयतनं मनसः संवेशश्चक्षुषः संभवः श्रोत्रस्य प्रतिष्ठा हृदयस्य सर्वम् । इन्द्रः कर्माक्षितममृतं व्योम । ऋतं सत्यं विजिग्यानं विवाचनमन्तो वाचो विभुः सर्वस्मादुत्तरं ज्योतिरूधरप्रतिवादः पूर्वं सर्वं वाक्परागर्वाक्सप्रु सलिलं धेनु पिन्वति । चक्षुः श्रोत्रं प्राणः सत्यसंमितं वाक्प्रभूतं मनसो विभूतं हृदयोग्रं ब्राह्मणभर्तृमन्नशुभे वर्षपवित्रं गोभगं पृथिव्युपरं वरुणवय्यितमं तपस्तन्विन्द्रज्येष्ठं सहस्रधारमयुताक्षरममृतं दुहानम् , इति ।**

निष्केवल्यनामक हे उक्थ त्वं पृथिव्यादिलोकानां सर्वेषां मूर्धा शिरःस्थानीयोऽसि । वागिन्द्रियस्य सारभूतमसि । प्राणस्य तेजः शक्तिरूपमसि । मनस आयतनमाश्रयोऽसि । चक्षुरिन्द्रियस्य संवेशः स्वविषये प्रवेशनसामर्थ्यमसि । श्रोत्रेन्द्रियस्य संभवः शब्दग्रहणायोत्पन्नवृत्तिरूपमसि । हृदयस्याष्टदलस्य प्रतिष्ठाऽऽधारभूतो देहोऽसि । निष्केवल्य नैतावदेव त्वं किं तु जगति यद्विद्यते तत्सर्वं त्वमसि । इन्द्र इत्यारभ्य दुहानमित्यन्तेन ग्रन्थेन तदेव सर्वं प्रत्येकमुदाहृत्य

---

१ क. ख. घ. ङ. स्थानमासि ।

प्रदर्श्यते। इन्द्रः सहस्राक्षः। कर्म दर्शपूर्णमासादिकम्। *अक्षरमकारादिकम्। अमृतं पीयूषम्। व्योमाऽऽकाशः। ऋतं मनसा यथावस्तु चिन्तनम्। सत्यं वाचा यथावस्त्वभिधानम्। विजिग्यानं विजयशीलं राजादिकम्। विवाचनं विशेषेण वक्तुं समर्थम्। वाचः शब्दकालस्यान्तः पर्यवसानभूमिः। स चान्तो विभुर्वक्तव्यस्यार्थाभिवादने समर्थः। सर्वस्मात्प्रकाशजातादुत्तरं ज्योतिरादित्यरूपम्। ऊधो गवां स्तनसमूहः। अप्रतिवादो विद्वत्कथायां प्रतिवाद्युक्तिराहित्यम्। यस्य यस्य वस्तुनो यद्यत्पूर्वं कारणरूपं तत्सर्वरूपम्। परागर्वागुत्तमाधमरूपा या वागस्ति तद्रूपम्। सप्रु नानाविधविप्रुड्भिः सहितं सलिलं वृष्ट्युदकं धेनु पिन्वति, यथा धेनुः क्षीरप्रदानेन प्रीणयति तद्वद्वृष्ट्युदकं सस्यनिष्पादनेन प्रीणयति। चक्षुःश्रोत्रप्राणा इन्द्रियवायुरूपाः। लोके यद्व्यवहारजातं सत्यसंमितमनृतोक्तिरहितं वाक्प्रभूतं शब्दैः संपूर्णं मनसो विभूतमर्थपर्यालोचकस्य मनःसंबन्धि भूत्वा विशेषेण व्यवस्थितं तादृशं वाग्व्यवहारजातं सर्वम्। हृदयोग्रं हृदये मनसि रैच्यमानं युद्धादिकमुग्रं कर्म। ब्राह्मणभर्तृ ब्राह्मणा भर्तारः पोषका यस्याध्ययनादेस्तद्ब्राह्मणभर्तृकम्। अन्नशुभे अन्नं व्रीहियवादिकं शुभं विवाहादिकम्। वर्षपवित्रं वृष्ट्युदकेन प्रक्षालिततया शुद्धं भूप्रदेशजातम्। गोभगं गवां संबन्धि शुद्धिहेतुत्वादिरूपं सौभाग्यजातम्। पृथिव्युपरं पृथिव्यां निखन्यमानं यूपस्य मूलम्। वरुणवाय्वितमं वृष्ट्यधिपतिना वरुणेन तत्सहकारिणा *वायुना चातिशयेनेतं प्राप्तम्। इततममित्यस्मिन्नर्थे तकार एको लुप्तः। तपस्तनु तपसा कृशं मुनिशरीरजातम्। तदेव वृष्टिवायूपद्रवसहिष्णुत्वाद्वरुणवायुभ्यामतिशयेन प्राप्तमित्युच्यते। इन्द्रज्येष्ठम्। तदेव मुनिशरीरजातमिन्द्रादप्यधिकं हिरण्यगर्भादिपदसाधकत्वात्। सहस्रधारमयुताक्षरम्। अमृतं दुहानम्। यदा यज्ञेषु देवार्थं गौर्दुह्यते तदा तस्य क्षीरस्य धारा देवानामग्रे सहस्रसंख्याकाः संपद्यन्ते। अत एव दोहनप्रकरणे—"वसूनां पवित्रमसि सहस्रधारम्" इति मन्त्रा आम्नाताः। तत्र दोहनप्रकरणे समाम्नातेषु यान्यक्षराणि विद्यन्ते तान्ययुतसंख्याकानि बहुलानीत्यर्थः। बहुधाराभिर्बह्वक्षरैश्चोपेतं यदमृतं क्षीरं तद्दुहानं गोकुलम्। इत्थं सर्वमुदाहृत्य प्रदर्शितम्।

अथ द्वितीयं मन्त्रमाह—

एतास्त उक्थ भूतय एता वाचो विभूतयः।
ताभिर्म इह धुक्ष्वामृतस्य श्रियं महीम्, इति।

---

* अक्षितशब्दस्य व्याख्यानमेतत्। + मूले ह्रस्वश्छान्दसः।

---

१ ग. °ब्दजातस्या°। २ ग. °पं प°। ३ क. ख. घ. ङ. °विप्रुस°। ४ क. ख. घ. ङ. रिच्यमानं। ५ क. ख. घ. ङ. मन्त्र।

हे उक्थ निष्केवल्यशस्त्र मूर्धा लोकानामित्यादिना सर्वमिन्द्र इत्यादिना [च] त्वया पूर्वमभिहिता एताः सर्वास्ते तव भूतय ऐश्वर्याणि । न केवलं तैः शब्दैः प्रतिपाद्यानामर्थानामेव विभूतित्वं किंत्वेता वाचः शब्दा अपि तव विभूतयः । ताभिर्विभूतिभिः सर्वाभिर्मे मदर्थमिहास्मिन्कर्मण्यमृतस्य विनाशरहितस्य स्वर्गसंबन्धिनीं महीं श्रियं प्रौढां संपदं धुक्ष्व संपादय ।

तृतीयं मन्त्रमाह—

प्रजापतिरिदं ब्रह्म वेदानां ससृजे रसम् ।
तेनाहं विश्वमाप्यासं सर्वान्कामान्दुहां महत्, इति ।

पुरा प्रजापतिर्वेदानां रसं सारभूतमिदं ब्रह्म प्रौढं महाव्रतं निष्केवल्यं वा सृष्टवान् । तेन कर्मणा शस्त्रेण वाऽहं होता विश्वं सर्वं फलमाप्यासम् । प्राप्तो भूयासम् । तथा सर्वान्कामान्भोगान्महदतिशयेन दुहां संपादयामि ।

चतुर्थं मन्त्रमाह—

भूर्भुवः स्वस्त्रयो वेदोऽसि । ब्रह्म प्रजां मे धुक्ष्व, इति ।

ये भूरादयस्त्रयो लोका यश्च वेदो हे उक्थ तत्सर्वं त्वमसि । मह्यं ब्रह्म वेदं प्रजां च पुत्रादिकां धुक्ष्व संपादय ।

पञ्चमषष्ठसप्तमाष्टमान्मन्त्रानाह—

आयुः प्राणं मे धुक्ष्व । पशून्विशं मे धुक्ष्व ।
श्रियं यशो मे धुक्ष्व । लोकं ब्रह्मवर्च-
समभयं यज्ञसमृद्धिं मे धुक्ष्व, इति ।

विशं धनसंपादिनीं प्रजाम् । लोकं स्वर्गाख्यम् । स्पष्टमन्यत् ।

मूर्धा लोकानामित्यादिकमुक्थदोहाख्यं मन्त्रसंघं होता प्रथमं स्वयं जपित्वा पश्चादध्वर्युं वाचयेदिति विधत्ते—

इति वाचयत्यध्वर्युमबुद्धं चेदस्य भवति, इति ।

अस्याध्वर्योरिदं मन्त्रस्वरूपमबुद्धं चेदनवगतं यदि भवति तदा होता पाठयेत् । अवगतत्वे स्वयमेव जपेदित्यर्थः ।

तस्माज्जपादूर्ध्वं होतुः कर्तव्यं विधत्ते—

ओमुक्थशा यज सोमस्येतीज्यायै संप्रे-
षितो ये यजामह इत्यागूर्य नित्ययैव
यजति व्यवान्येवानुवषट्करोति, इति ।

---

१ ग. ति । प्रं ।

यदाऽध्वर्युरोमुक्थशा इत्यादिप्रैषमन्त्रं पठति तदानीं होता यागार्थं संप्रेषितः सन्नादौ ये यजामह इत्युच्चार्य नित्ययैव प्रकृतिगतया "पिबा सोममिन्द्र" [ ऋ० सं० म० ७ सू० २२ ऋ० १ ] इत्यनयैव यजेत् । तामेव याज्यां पठेदित्यर्थः । तत उच्छ्वासमकृत्वैवानुवषट्कारं कुर्यात् । सोमस्याग्ने वीहीत्येतं प्राकृतमेवानुवषट्कारमन्त्रं पठेत् ।

अनुमन्त्रणे विशेषाभावं दर्शयति—

**उक्तं वषट्कारानुमन्त्रणम्, इति ।**

प्रकृतौ वांगोज[1] इत्यादिकं यदनुमन्त्रणमुक्तं तदेवात्रापि द्रष्टव्यम् ।

अध्वर्योः कर्तव्यं होत्राऽपेक्षणीयं दर्शयति—

**आहरत्यध्वर्युरुक्थपात्रमतिग्राह्यांश्चमसांश्च, इति ॥**

भक्षणार्थमुक्थपात्रातिग्राह्येषु चमसेषु च यः सोमरसोऽवशेषितस्तमध्वर्युर्होतारं प्रत्यानयेत् ।

होतुः कर्तव्यं विधत्ते—

**भक्षं प्रतिख्याय होता प्राङ्प्रेङ्खादवरोहति, इति ।**

अध्वर्युणा समाहृतं भक्षं ज्ञात्वा प्राङ्मुखो भूत्वा [होता] प्रेङ्खादवरोहेत् ।

अध्वर्यूणां कृत्यं विधत्ते—

**अथैतं प्रेङ्खं प्रत्यञ्चमवबध्नन्ति यथा शंसितारं भक्षयिष्यन्तं नोपहनिष्यसीति, इति ।**

शंसिता होता प्रेङ्खस्य स्थाने स्वयमुपविश्य सोमं भक्षयिष्यति तदानीं तस्य होतुः प्रेङ्खेनो(णो)पपातो मा भूदित्यभिप्रेत्य तं प्रेङ्खं पश्चान्नीत्वोपरि बध्नीयुः ।

भक्षणस्थानं विधत्ते—

**प्रेङ्खस्य ह्यायतनमासीनो होता भक्षयति, इति ।**

समन्त्रकं भक्षणं विधत्ते—

**अथैतदुक्थपात्रं होतोपसृष्टेन जपेन भक्षयति ।**
**वाग्देवी सोमस्य तृप्यतु । सोमो मे राजाऽऽयुःप्राणाय वर्षतु । स मे प्राणः सर्वमायुर्दुहां महत्, इति ।**

उपसृष्टेनेतरानुज्ञापूर्वकेण वाग्देवीत्यादिमन्त्रजपेन युक्त उक्थपात्रगतं सोमं भक्षयेत् । सोमस्य रसेन वाग्देवता तृप्ता भवतु । स च सोमोऽस्माकं राजा सन्नायुर्हेतुभूतप्राणार्थं[2] वृष्टिं जनयतु । स च प्राणो मम सर्वमायुर्महत्संपूर्णं यथा भवति तथा दुहां संपादयतु ।

---

१ घ. ङ. वागौज । २ ग. ङ. °भूतः प्रा° ।

अथ तृतीयसवने विशेषं विधत्ते—

**उत्तमादाभिप्लविकात्तृतीयसवनमन्यद्वैश्वदेवान्निवि-द्धानादस्य वामस्य पलितस्य होतुरिति सलिल-स्य दैर्घतमस एकचत्वारिंशतमानोभद्रीयं च तस्य स्थान ऐकाहिकौ वैश्वदेवस्य प्रतिपदनुचरौ, इति।**

अभिप्लवनामके षळ(ड)हे यदुत्तमं षष्ठमहस्तस्मादह्नोऽस्मिन्महाव्रतनामकेऽह्नि तृतीयसवनमतिदेष्टव्यम् । विश्वेषां देवानां स्तुतिवाचकानि निवित्पदानि यस्मिन्नानोभद्रीयसूक्ते पठिष्यन्ते तस्मात्सूक्तं वैश्वदेवं निविद्धानं तस्मादन्यत्पूर्वभावि सर्वमाभिप्लविकवद्युज्य(वत्प्रयुज्य) तस्य निविद्धानसूक्तस्य स्थाने "अस्य वामस्य" इत्येतदानोभद्रीयं चेत्येतदुभयं पठनीयम् । " अस्य वामस्य " इति सूक्तं द्विपञ्चाशदृचं तस्मिन्नन्तिमा एकादश परित्यज्यावशिष्टमेकचत्वारिंशत्संख्याकमृक्समूहं पठेत् । स च समूहः सलिलस्य संबन्धी " गौरीर्मिमाय सलिलानि तक्षती " [ऋ० सं० म० १ सू० १६४ ऋ० १ ] इति तत्रत्यायामृच्यभिधानात् । दीर्घतमा नाम कश्चिदृषिस्तेन दृष्टः " वेदिषदे प्रियधामाय " [ ऋ० सं० म० १ सू० ४० ऋ० १ ] इत्यादिको बहूनां सूक्तानां संघो दी(दै)र्घतमसः । तस्मिन्संघे " अस्य वामस्य " इत्येतदपि सूक्तमवस्थितम् । तस्य सूक्तस्यात्र सलिलसंबन्धो दीर्घतमःसंबन्धानुस्मरणार्थमभिहितः । चोदकप्राप्तस्य वैश्वदेवनिविद्धानस्य स्थाने " अस्य वामस्य " " आ नो भद्राः " इति द्वयं पठेत् । इत्येतावानत्र विशेषः । एकाहे विश्वजिन्नामके भवावैकाहिकौ यौ प्रतिपदनुचरौ वैश्वदेवस्य विहितौ तावेवात्र महाव्रतेऽपि वैश्वदेवशस्त्रस्य प्रतिपदनुचरौ कर्तव्यौ । प्रारम्भे पठनीयस्तृचः प्रतिपत् । तदनन्तरभावी तृचोऽनुचरः । " तत्सवितुर्वृणीमहे " [ ऋ० सं० म० ९ सू० ८२ ऋ० १ ] इत्येष तृचः प्रतिपत् । " अद्या नो देव सवितः " [ ऋ० सं० म० ९ सू० ८२ ऋ० ४ ] इत्ययं तृचोऽनुचर इत्यर्थः ।

अथाऽऽग्निमारुतशस्त्रे विशेषं विधत्ते—

**च्यवेत चेद्यज्ञायज्ञीयमग्ने तव श्रवो वय इति षट्स्तोत्रियानुरूपौ यदीलान्दं भूयसीषु चेत्स्तुवी-**

---

अस्य वामस्य पलितस्य होतुः०—ऋ० सं० न० १ सू० १६४ ऋ० १ । आ नो भद्राः०—ऋ० सं० म० १ सू० ८९ ऋ० १ । अग्ने तव श्रवो वयः०—ऋ० सं० म० १० सू० १४० ऋ० १ ।

---

१ ख. ग. घ. ङ. °तः । नोद° ।

रन्नाऽग्निं न स्ववृक्तिभिरिति तावतीरनुरूपः, इति ।

यज्ञायज्ञीयमित्येकं साम । इलान्दमित्यपरं साम । ते उभे सामनी महाव्रते छन्दोगैर्विकल्पेन प्रयुज्येते । तत्र यदा यज्ञायज्ञीयं प्रयुक्तं तदानीं बह्वृचैराग्निमारुतशस्त्रकॢप्तिरेवं क्रियते । "वैश्वानराय धिषणाम्" [ ऋ० सं० म० ३ सू० २ ऋ० १ ] इत्येकं सूक्तम् । "शं नः करति" [ ऋ० सं० म० १ सू० ४३ ऋ० ६ ] इत्यृगेका । "प्रयज्यवः" [ ऋ० सं० म० ५ सू० ५५ ऋ० १ ] इत्येकं सूक्तम् । "यज्ञायज्ञा वः" [ ऋ० सं० म० ६ सू० ४८ ऋ० १ ] इत्येकः प्रगाथः । "देवो वः" [ ऋ० सं० म० ७ सू० १७ ऋ० ११ ] इत्यपरः "जातवेदसे" [ ऋ० सं० म० १ सू० ९९ ऋ० १ ] इत्यृगेका । "आपो हि ष्ठ" [ ऋ० सं० म० १० सू० ९ ऋ० १ ] इत्यादिः प्राकृतः शस्त्रशेष इति । यदा तु सामगैर्यज्ञायज्ञीयं साम परित्यज्य तस्य स्थान इलान्दनामकं साम गीयते तस्मिन्पक्षे पूर्वोक्तं प्रगाथद्वयं परित्यज्य तस्य स्थाने "अग्ने तव" इत्यादयः षडृचः पठनीयाः । तत्राऽऽद्यस्तृचः स्तोत्रियः । "इरज्यन्" [ ऋ० सं० म० १० सू० १४० ऋ० ४ ] इत्यादिको द्वितीयस्तृचोऽनुरूपः । तत्रेलान्दं साम प्रथमतृचे गीयत इत्येकः पक्षः । तृचद्वयेऽपि गीयत इत्यपरः पक्षः । एकतृचगानपक्षे स्तोत्रियानुरूपावुक्तौ । भूयसीषु तृचद्वयगतासु सर्वास्वप्यृक्षु यदि सामगाः स्तुवीरंस्तदानीं स्तोत्रियाणामृचां षट्संख्योपेतत्वादनुरूपेऽपि "आऽग्निं न स्ववृक्तिभिः" [ ऋ० सं० म० १० सू० २१ ऋ० १ ] इत्याद्यास्तावतीः षट्संख्याका ऋचः शंसेत् । स एतावानाग्निमारुतशस्त्रे विशेषः ।

आरण्यकादौ य उपक्रान्तो महाव्रतप्रयोगस्तमिममुपसंहरति—

संपन्नं महाव्रतं संतिष्ठत इदमहरग्निष्टोमो यथाकालमवभृथं प्रेङ्खं हरेयुः संदहेयुर्बृसीः, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥ (१३)

महाव्रतविषयं यच्छौत्रं तत्संपूर्णम् । इदं महाव्रताख्यमहश्च समाप्तम् । तच्चाहरग्निष्टोमसंस्थं तस्यावभृथकाले प्रेङ्खं होमपात्रैः सह जलसमीपे हरेयुः । याश्च बृस्य इतरेषामासनार्थं निर्मितास्ताः सर्वा बृसीर्वेदिदहनकाले दहेयुः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥ (१३)

---

आऽग्निं न स्ववृक्तिभिः०—ऋ० सं० म० १० सू० २१ ऋ० १ ।

---

१ ग. घ. ङ. °स्त्रदोष । २ ग. °तु । ए° ।

अथ तृतीयः खण्डः । ( चतुर्दशः )

---

अथ महाव्रतशंसने नियमविशेषान्दर्शयति—

**नादीक्षितो महाव्रतं शंसेन्नानग्नौ न परस्मै नासंवत्सर इत्येके कामं पित्रे वाऽऽचार्याय वा शंसेदात्मनो हैवास्य तच्छस्तं भवति, इति ।**

एकाहाहीनसत्ररूपैस्त्रिविधो(धं) महाव्रत इ(तमि)त्युक्तम् । तत्र सत्ररूपे महाव्रते होतुरपि यजमानत्वात्सिद्धैव दीक्षा । एकाहाहीनयोस्तु होता न यजमानः, किं त्वन्य एव । स एव द्विविधः । स्वार्थेऽग्निष्टोमादौ दीक्षित एकः । सोमयागराहित्याददीक्षितोऽपरः । तयोर्मध्ये दीक्षित एकः परकीये महाव्रतकर्मणि शंसनं कुर्यात् । न त्वदीक्षितः । तच्च परकीयं महाव्रतं द्विविधं चित्याग्निसहितं तद्रहितं वा(च) । तयोर्मध्ये चित्याग्निसहिते महाव्रतप्रयोगे शंसनं मुख्यं न त्वनग्नौ चित्याग्निरहिते । परस्मै पित्राचा[illegible]व्यतिरिक्तयजमानार्थं शंसनं न कुर्यात् । असंवत्सरे संवत्सरसत्रव्यतिरिक्ते क्रतौ क्वापि न शंसेदित्येकेषां पक्षः । पित्राचार्ययोः स्वस्मादन्यत्वेऽपि देहप्रदानेन विद्याप्रदानेन चोपकारित्वात्तयोरर्थे यच्छंसनं तत्स्वार्थमेव भवति । अतो न तत्र निषेधः ।

शंसने नियमानभिधाय ग्रन्थाध्यापने तदिदमित्यादिना नियमानभिधास्यति । अत्र केचिद्वाक्यान्तरमधीयते—

**होतृशस्त्रेषूक्थशा यज सोमस्येत्येकः प्रैषः स नाराशंसेष्वनाराशंसेषु वा होत्रकाणामुक्थशा+ यज सोमानामिति, इति ।**

तस्यैतस्याधिकस्य वाक्यस्यायमर्थः । यानि होतुः शस्त्राणि नाराशंसाख्यचमससहितानि तद्रहितानि च तेषु सर्वेष्वप्युक्थशा यज सोमस्येत्ययमेक एवाध्वर्योः प्रैषमन्त्रपाठः । होत्रकाणां शस्त्रेषूक्थशा यज सोमानामित्यध्याहृत्य बहुवचनान्तः प्रैषो द्रष्टव्यः । सोऽयमर्थः प्रकृतित एव प्राप्त इति मत्वा केचिदेतद्वाक्यं नाधीयते । अपरे त्वध्याहारं परित्यज्य सोमस्येत्येकवचनान्तमेव प्रैषमनुवर्त्य होत्रकाणां शस्त्रेषु विशेषविधानार्थमित्यभिप्रायेणैतद्वाक्यं पठन्ति ।

---

+ उक्थशा इत्यादिकमितीत्यन्तं मूलं भाष्यपुस्तकेषु नास्ति । केवलं मूलपुस्तकेषूपलभ्यते । एतच्च मूलं भाष्यकृन्मतेनाधिकम् ।

---

१ ग. °चित्तद्वा° ।

इदानीमध्यापननियमान्दर्शयति—

तदिदमहर्नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नो एवासंवत्सरवासिने नाब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभिप्राप्तायैतं देशम् , इति ।

अध्यापकस्य गुरोरन्ते समीपे वस्तुं शीलमस्येत्यन्तेवासी । तन्नियमाश्च स्मृतिषु दर्शिताः—"गुरुरनुगन्तव्योऽभिवाद्यश्च" इति गौतमस्मृतिः । "आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्" इति याज्ञवल्क्यः । "अक्रोधनोऽनसूयः सर्वं लाभं चाऽऽहरन्गुरवे, सायं प्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्षमाणोऽन्यत्रापपात्रेभ्[1]योऽभशस्ताच्च" इत्यापस्तम्बः । एतैर्नियमैरुपेतोऽन्तेवासी, तद्विरहितोऽनन्तेवासी तादृशाय नियमरहिताय तदिदं महाव्रतप्रतिपादकं वाक्यं न ब्रूयात् । नियमवानपि य आचार्यसमीपे संवत्सरं शुश्रूषां कृत्वा न तिष्ठेत्तादृशायापि न ब्रूयात् । नियतिमवलोक्य दाक्षिण्येन संवत्सरवासाभावेऽपि कदाचित्स ग्रन्थः प्रोच्यत इत्याशङ्क्य नो एवेति पुनर्निषेधति । अष्टविधस्त्रीसङ्गरहितो ब्रह्मचारी ।

तथा च स्मर्यते—

"श्रवणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं वदन्ति ब्रह्मवादिनः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्" इति ॥

तथाविधब्रह्मचर्यरहिताय न ब्रूयात् । उक्तविधैर्ब्रह्मचारिभिः सह वसतीति सब्रह्मचारी । यद्वैकस्मादाचार्यात्सहाध्येतारः सब्रह्मचारिणः । तद्विपरीतैः सह वसतीत्यसब्रह्मचारी, तादृशाय न ब्रूयात् । सहवासिनां ब्रह्मचर्याभावेऽपि तस्य ब्रह्मचर्यसद्भावमात्रेण योग्यतामाशङ्क्य "संसर्गजा दोषगुणा भवन्ति" इति न्यायेन स्वकीयब्रह्मचर्यस्यापि कथंचिच्छैथिल्यं संभवेदित्यभिप्रेत्य नो एवेति पुनर्निषेधति । आचार्यो यस्मिन्देशे निवसत्येतं देशमनभिप्राप्ताय न ब्रूयात् । धनदाक्षिण्यादिनिमित्तेन स्वयं तद्गृहे गत्वा न कथयेदित्यर्थः ।

बहुकृत्वोऽध्यापनं निषेधति—

न भूयः सकृद्वदनाद्विर्गदनाद्वा द्व्येव, इति ।

एकस्मिन्पर्याये शिष्याणामध्यापनं सकृद्वदनम् । पर्यायद्वयेऽध्यापनं द्विर्गदनम् । ततो भूयो न प्रब्रूयात् । तृतीयचतुर्थादिपर्यायप्राप्ताञ्शिष्यान्नाध्यापयेत् । किं तु द्व्येव द्विधैवाध्यापनप्रवृत्ति[2]: कार्या न तु ततोऽधिका । अत्यन्तरहस्यत्वेन गोपनीयत्वात् ।

---

१ क. ख. घ. ङ. भ्योऽतिश । २ ग. कर्तव्या ।

तस्मिन्नेव गोपने मतान्तरमाह—

एक एकस्मै प्रब्रूयादिति ह स्माऽऽह जातूकर्ण्यः, इति।

जातूकर्ण्यनामकस्तु मुनिर्द्विरध्यापनं न सहते। एकस्मिन्नध्यापने शिष्यबाहुल्यं न सहते, किं तु संप्रदायविच्छेदनिवारणार्थमेक आचार्य एकस्मै शिष्याय ब्रूयादित्येतावदेवाभ्युपगच्छति।

शिष्याणां चाल्पवार्धकयोर्वयसोस्तदध्यापनं निषेधति—

न वत्से च न तृतीय इति, इति।

इतिशब्दः शिष्यप्रयुक्तनिषेधसमाप्त्यर्थः।

शिष्याचार्योभयप्रयुक्तान्निषेधान्दर्शयति—

न तिष्ठंस्तिष्ठते न व्रजन्व्रजते न शयानः
शयानाय नोपर्यासीन उपर्यासीना-
याध एवाऽऽसीनोऽध आसीनाय, इति।

तिष्ठन्नाचार्यस्तिष्ठते शिष्याय न ब्रूयात्। एवमुत्तरत्रापि द्रष्टव्यम्। उपरि मञ्चकादौ। आचार्यः स्वयमध एव भूमावेवाऽऽसीनो भूमिष्ठायैव ब्रूयात्।

पुनरपि शिष्यनियमान्दर्शयति—

नावष्टब्धो न प्रतिस्तब्धो नातिवीतो नाङ्कं कृत्वो-
र्ध्वज्ञुरनपश्रितोऽधीयीत न मांसं भुक्त्वा न
लोहितं दृष्ट्वा न गतासुं नाव्रत्यमाक्रम्य नाक्त्वा
नाभ्यज्य नोन्मर्दनं कारयित्वा न नापितेन कार-
यित्वा न स्नात्वा न वर्णकेनानुलिप्य न स्रजमपि-
नह्य न स्त्रियमुपगम्य नोल्लिख्य नावलिख्य, इति।

पृष्ठभागे कुड्याद्याश्रयणमवष्टम्भः। पुरोभागे हस्तयोर्दण्डाद्याधाराश्रयणं प्रतिस्तम्भनम्। वस्त्रेण सर्वाङ्गापिधानमतिवीति(त)त्वम्। पद्मासनादिकमङ्ककरणम्। एतत्सर्वं परित्यज्य जानुद्वयमूर्ध्वं कृत्वा योगपट्टवस्त्राद्याश्रयरहितो ग्रन्थमधीयीत। मांसभोजनलोहितदर्शनमृतप्राणिदर्शनोच्छिष्टाद्याक्रमणनेत्राञ्जनदेहाभ्यङ्गशरीरमर्दननखनिकृन्तनाद्युष्णोदकस्नानचन्दनकुङ्कुमाद्यनुलेपनपुष्पमालाधारणस्त्रीसंगमलिप्यक्षराद्युल्लेखनावलेखनानि कृत्वा नाधीयीत।

समाप्तौ मतभेदं दर्शयति—

नेदमेकस्मिन्नहनि समापयेदिति ह स्माऽऽह
जातूकर्ण्यः समापयेदिति गालवो यदन्यत्मा-

क्तृचाशीतिभ्यः समापयेदेवेत्याग्निवेश्याय-
नोऽन्यमन्यस्मिन्देशे शमयमान इति, इति ।

इदं महाव्रताध्ययनं यस्मिन्दिने प्रक्रान्तं तस्मिन्नेव समाप्तं न कुर्यादिति जातूकर्ण्यस्य मतम् । गालवस्य तु कुर्यादिति मतम् । आग्निवेश्यायनस्य तु कियदेव समापयेदिति मतम् । गायत्र्यादिभ्यस्तृचाशीतिभ्यः प्राचीनमाज्यप्रउगादिकं यदस्ति तदेवैकस्मिन्दिने समापयेत् । इतरभागं तु दिनान्तरे समापयेत् । यथैवोत्तरभागस्यान्यस्मिन्दिने समापनं तथैवान्यमुत्तरभागमन्यस्मिन्देशे शमयमानः समापयन्नवतिष्ठेत । इतिशब्दो मतद्वयसमाप्त्यर्थः ।

देशविषये पुनरन्यं विशेषं दर्शयति—

यत्रेदमधीयीत न तत्रान्यदधीयीत यत्र त्वन्य-
दधीयीत काममिदं तत्राधीयीत, इति ।

इदं महाव्रतप्रतिपादकं मन्त्रजातं यस्मिन्देशेऽधीतं तस्मिन्देशे स्थित्वा ग्रन्थान्तराध्ययनं न कुर्यात् । यस्मिंस्तु देशे ग्रन्थान्तरमधीतं तस्मिन्देशे स्वेच्छयेदमध्येतुं शक्यम् ।

शाखान्तरे वेदमधीत्य स्नायादिति स्नानाख्यं यत्कर्म विहितं तस्मात्प्रागेव महाव्रताध्ययनं विधत्ते—

नेदमनधीयन्स्नातको भवति यद्यप्यन्यद्बह्वधी-
यान्नैवेदमनधीयन्स्नातको भवति, इति ।

कृत्स्नमपि वेदमधीत्य स्नायादिति मुख्यः कल्पः । यदा तु वेदैकदेशमधीयीतेत्यनुकल्प आश्रीयेत तदानीं यद्यपि महाव्रतादन्यद्दर्शपूर्णमासादिकं बहुग्रन्थजातमधीतं तथाऽपि महाव्रताध्ययनमकृत्वा तत्स्नानं न कुर्यात् ।

अधीतस्य महाव्रतग्रन्थस्य विस्मृतिं निषेधति—

नास्मादधीतात्प्रमाद्येद्यद्यप्यन्यस्मात्प्रमाद्येन्नैवास्मात्प्रमाद्येत्, इति ।

प्रज्ञामान्द्यादिदोषेण यद्यप्यन्यस्माद्दर्शपूर्णमासादिग्रन्थात्प्रमाद्येद्ग्रन्थविस्मृतिं प्राप्नुयात्तथाऽपि प्रयत्नेन पुनः पुनरावृत्त्याऽस्मान्महाव्रतग्रन्थान्नैव प्रमाद्येत् ।

अत्र केचिदिदं वाक्यान्तरमपि पठन्ति—

नो एवास्मात्प्रमाद्येत्, इति ।

आदरातिशयार्थं तद्वाक्यं द्रष्टव्यम् ।

मन्दप्रज्ञस्य वेदभागविस्मृतिदोषोऽप्येतद्विस्मृत्यभावेन परिह्रियत इति दर्शयति—

अस्माच्चेन्न प्रमाद्येदलमात्मन इति विद्यात्, इति ।

आत्मनः पुरुषार्थाय महाव्रतविस्मृत्यभाव *एवालमिति निश्चिनुयात् ।

तत्रान्यद्वाक्यं केचित्पठन्ति—

अलं सत्यं विद्यात् , इति ।

महाव्रतमेव पुरुषार्थायालमिति यदुक्तं तत्सत्यं प्रामाणिकं न तत्र शङ्कितव्यमिति निश्चिनुयात् ।

इदमपि वाक्यान्तरमादरार्थम् । अविस्मृतग्रन्थस्य पुनरन्यं नियमं विधत्ते—

नेदंविदनिदंविदा समुद्दिशेन्न सह-
भुञ्जीत न सधमादी स्यात् , इति ।

इदं महाव्रतग्रन्थजातं वेत्तीतीदंवित् । तादृशः पुमाननिदंविदा तद्ग्रन्थज्ञानरहितेन पुरुषेण सह न समुद्दिशेत् । तस्य पुरतो ग्रन्थमेतं न पठेदित्यर्थः । तादृशेन महाव्रतानभिज्ञेन पुरुषेण सहैकस्यां पङ्क्तौ न भुञ्जीत । सधमादी तेन सार्धं हर्षादिविनोदवानपि न स्यात् ।

यथोक्तमहाव्रताध्ययननियमप्रसङ्गेन कृत्स्नवेदाध्ययननियममपि दर्शयति—

अथातः स्वाध्यायधर्मं व्याख्यास्याम उप पुराणे
नाऽऽपीते कक्षोदके पूर्वाह्णे न संभिन्नासु
च्छायास्वपराह्णे नाध्यूह्ळे मेघेऽपतौ वर्षे त्रिरात्रं
वैदिकेनाध्यायेनान्तरियान्नास्मिन्कथां वदेत
नास्य रात्रौ च न च कीर्तयिषेत् , इति ।

वेदैकदेशस्य महाव्रतस्य +नियमकथनानन्तर्यमथशब्देनोच्यते । एकदेशनियमेन कृत्स्ननियमस्य बुद्धिस्थत्वादानन्तर्यं युक्तम् । अतःशब्दो हेत्वर्थः । यस्मान्नियमेनाधीतः स्वाध्यायः फलप्रदस्तस्मादित्यर्थः । स्वस्याध्यायः स्वाध्यायः स्वशाखा, तस्य धर्मो निषिद्धकालाध्ययनवर्जनम् । तद्धर्मं विस्पष्टं साकल्येन कथयिष्यामः । उप पुराण इत्यादिवाक्येन पौष्याः पौर्णमास्या उपरितनः काल उपलक्ष्यते । तथा हि—पुराणे कक्षोदक उपापीते सति नाधीयीतेति वाक्ययोजना । कक्षशब्देन लतादिपुञ्जमभिधीयते । तस्य मूले वृष्टिकालसंपादितमुदकं द्रवत्वरूपेण कंचित्कालमनुवृत्तं सत्पौषादिमासेषु प्रायेण शुष्यति, तदिदमत्राभिधीयते । पुराणे पूर्वसंपादिते कक्षोदक उपापीते लतादिमूलसमीपे विलीने शुष्के सति नाधीयीत ।

---

* अत्र सर्वेष्वप्यादर्शपुस्तकेषु—"एवाखिलम्" इति पाठो वर्तते । + "नियमकथनानन्तर्यार्थमथशब्देन" इत्येव पाठः सकलादर्शपुस्तकेषु ।

---

१ ग. ंतृ । अथ मं ।

तथा च मनुना स्मर्यते—

"श्रावण्यां पौर्णमास्यां च चोपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्" इति ॥

आपस्तम्बोऽप्याह—"श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदर्धपञ्चमांश्चतुरो मासानित्येके" इति । श्रावणीपौष्योः पौर्णमास्योर्मध्यकालेऽपि प्रतिदिनं पूर्वाह्णे च शरीरवृक्षादिच्छायासु संभिन्नासु मिलितासु सतीषु नाधीयीत । प्रातःकाले सूर्योदये सति च्छायासु पृथक्पृथगभिव्यक्तासु प्रारभेत । सायंकाले सूर्यास्तमयात्पूर्वं छायासु विविक्तासु सतीष्वेवाध्ययनं परित्यजेत् । यदा मेघोऽध्यूह्ळ आधिक्येन प्रसृतः सान्द्रो भवति तदा नाधीयीत । अपर्तावित्यत्रापशब्दो वर्जनार्थः । स्वकीयमृतुं श्रावणभाद्रपदमासद्वयरूपं वर्जयित्वा प्रवृत्तोऽपर्तुः । तादृशे वर्षे प्रवृत्ते सत्यकालवृष्टिं निमित्तीकृत्य त्रिरात्रं वैदिकेनाध्यायेन वेदपाठेनान्तरियात् । तिसृषु रात्रिषु वेदपाठस्यान्तरायः कर्तव्यः । वैदिकेनेति विशेषणादार्षाणां व्याकरणादीनामङ्गानामध्ययनमभ्यनुज्ञायते । अत्र स्मृतिकारा आर्द्रादिज्येष्ठान्तस्य त्रयोदशनक्षत्रपरिमितस्य कालस्य वृष्टिकालत्वमभ्युपेत्य ततोऽन्यत्र वृष्टौ सत्यामकालवृष्टिनिमित्तं त्रिरात्राध्ययनवर्जनमिच्छन्ति । अस्मिन्नधीयमाने स्वाध्याये कथां [ न ] वदेत लौकिकवार्तां न कुर्यात् । यद्वाऽस्मिन्प्रकृते महाव्रताध्ययनकाले लौकिकवार्तां परित्यजेत् । किंचास्य महाव्रतस्य पाठं रात्रौ न कुर्यात् । किंच महाव्रताभिज्ञोऽहमित्येवं जनमध्ये कीर्तिमपि नेच्छेत् । महाव्रतस्य गोप्यत्वात्तद्विषयाभिज्ञानमपि न प्रकटयेत् ।

उक्तनियमेनाध्ययने फलमाह—

**तदिति वा एतस्य महतो भूतस्य नाम भवति योऽस्यै-
तदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति, इति ॥**

**इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके तृतीयाध्याये
तृतीयः खण्डः ॥ ३ ॥ ( १४ )**

## इति बह्वृचब्राह्मणारण्यककाण्डे पञ्चमारण्यके
## तृतीयोऽध्यायः ॥ ३ ॥

इति वै पूर्वोक्तेनैव नियमेनाधीतं तत्कृत्स्नस्वाध्यायवाक्यं महाव्रतवाक्यं वैतस्य प्रकृतस्य कृत्स्नवेदप्रतिपाद्यस्य महतः सर्वगतस्य भूतस्य नित्यसिद्धस्य परमात्मनो नाम भवति । कृत्स्नस्य वेदस्य परमात्मप्रतिपादकत्वात्तन्नामत्वं युक्तम् । तत्प्रतिपाद-

---

१ ग. °थग° ।

कत्वं च **कठैराम्नायते**—" सर्वे वेदा यत्पदमामनन्ति " इति । विदन्त्यनेन परमात्मानमिति व्युत्पत्त्या वेदशब्दोऽपि तत्प्रतिपादकमेव ग्रन्थमाचष्टे । अतः कृत्स्नवेदस्य परमात्मनामत्वेनात्यन्तरहस्यमन्त्ररूपत्वाद्बहुविधनियमपुरःसरमध्ययनं युक्तम् । यः पुमानेतत्स्वाध्यायवाक्यं सर्वमेवमुक्तेनास्य परमात्मनो नामेति वेद विदित्वा च नियमेनैवाधीते स पुमानधीतवेदमुखेन परमात्मानं विदित्वा स्वस्य ब्रह्मत्वाधारकाज्ञाननिवृत्त्या स ब्रह्म भवति । वाक्याभ्यासस्तृतीयाध्यायसमाप्त्यर्थः पञ्चमारण्यकसमाप्त्यर्थः कृत्स्नारण्यककाण्डसमाप्त्यर्थश्च ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( १४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यककाण्डभाष्ये पञ्चमारण्यके तृतीयोऽध्यायः ॥ ३ ॥

अथ शान्तिः ।

---

ॐ उदितः शुक्रियं दधे । तमहमात्मनि दधे । अनु मामैत्विन्द्रियम् । मयि श्रीर्मयि यशः । सर्वः सप्राणः सबलः । उत्तिष्ठाम्यनु श्रीः । उत्तिष्ठत्वनु माऽऽयन्तु देवताः । अदब्धं चक्षुरिषितं मनः । सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः । तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ।

*शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् । मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् । वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणी स्थ श्रुतं मे मा प्रहासीरनेनाधीतेन । अहोरात्रान्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् ।

ॐ शान्तिः शान्तिः शान्तिः ।

इत्युत्तरशान्तिः ॥

इति बह्वृचब्राह्मणारण्यककाण्डे पञ्चममारण्यकं समाप्तम् ॥ ५ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरपरावतारस्य वैदिकमार्गप्रवर्तकस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणामात्येन विरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यककाण्डभाष्ये पञ्चममारण्यकं समाप्तम् ॥ ५ ॥

( आदितः समष्ट्यङ्काः—आर० ५ अध्या० १८ ख० ७५ )

---

समाप्तिमगमदिदं सभाष्यमैतरेयारण्यककाण्डम् ।

---

* इयमृक्कचित्पुस्तकेऽत्र नास्ति, सा च वाङ्म इत्यादिमन्त्रादनन्तरं लिखिताऽस्ति ।